श्रीः

पण्डितवरेण श्रीगङ्गाधरदेवेन 'बौधायनाश्वलायनश्रौतसूत्रयोस्सोमानां तुलनात्मकमध्ययनम्' इति विषयमवलम्ब्य विद्यावारिध्युपाधिप्राप्त्ये शोधप्रबन्धो मन्निर्देशानुसारं सज्जीकृतः। सोऽयं शोधप्रबन्धस्सम्पूर्णानन्दसंस्कृतविश्वविद्यालयाय परीक्षार्थं समर्प्यते निबन्धरचयित्रा। अयं निबन्धस्साङ्गोपाङ्गतया निर्मितः परीक्षणार्थं योग्यश्चेति प्रमाणयति।

पी. एन्. पट्टाभिरामशास्त्री
२६/१०/८६

॥ श्रीः ॥

# बौधायनाश्वलायनश्रौतसूत्रयोः सोमान्तं तुलनात्मकमध्ययनम्

सम्पूर्णानन्द-संस्कृत विश्वविद्यालयस्य विद्यावारिधि ( पी-एच. डी. ) उपाधि
सिद्धये प्रस्तुतः शोध प्रबन्धः ।

Forwarded
Yugal Kishor Mishra
12/2/87





निर्देशकः
पद्मभूषण पी० एन० पट्टाभिराम शास्त्री
वाराणसी

अनुसन्धाता
गंगाधर देवः

वेदविभाग
सं० सं० वि० वि०, वाराणसी

विक्रम संवत् २०४३ ] [ सन् १९८६

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥ ॥ श्रीसरस्वत्यै नमः ॥ ॥ श्रीसद्गुरुभ्यो नमः ॥

## समर्पणम्

श्रीमत्तातमुखं श्रुतिव्रजमहितानन्तात्मकं भासुरं
श्रीपादाकृति भिन्नरूपमतुलं पट्टाभिरामाऽश्रितम् ।
पूज्यं सद्गुरुमण्डलं सविनयं नत्वार्पयाम्यादरा-
देतं शोधनिबन्धमङ्घ्रियुगले तस्याऽपुन्योपमम् ॥

पंचमाध्याय: - चतु:पर्वात्मक चातुर्मास्य यागस्य बौधायनाश्वलायनाभ्यां समग्ररुपेणविचार:



षष्ठाध्याय: - सोमसंस्थाकेषु यागेषु प्रकृतिभूताग्निष्टोमाख्य सोमयागस्य विचार:

## उपोद्घात:

"बौधायनाश्वलायन-श्रौतसूत्रयोः सोमान्तभागस्य परिशीलनात्मक-मध्ययनम्" इति विषयमधिकृत्य, निबन्धोऽयं प्रस्तूयते । अत्र सप्ताध्यायाः परिकल्पिताः ।

### प्रथमाध्यायः-

अग्न्याधानम्, अग्न्याधानस्य कालः, अग्न्याधानस्य संकल्पः ऋत्विग्वरणम्, मधुपर्कः, गोपितृयज्ञः, देवयजनयान्चाप्रकारः उद्धननाविदारणसंस्कारः, संभाराणां स्थापनम्, सर्वौषधिहोम-प्रकारः, प्राजापत्यहोमः, आनुख्याहोमः, अङ्गाराणां स्थापनम्, ब्रह्मौदनहोमः, अरणिग्रहणम्, आयतनोपलेपनम्, आयतनेसंभारनिधानम्, लौकिकाग्निसमारोपः, अग्निमन्थनम्, गार्हपत्याधानम्, दक्षिणाग्न्याधानम्, आहवनीयाधानम्, उत्तरसर्वौषधिहोमः, पंचसमिद्धोमः, सर्वोपस्थानम्, पूर्णाहुतिः, अग्न्याधाने पक्षान्तराणि, पुनराधानम्, अग्निहोत्रहोमः ।

### द्वितीयाध्याये -

दर्शपूर्णमासप्रकरणम्, अन्वाधानम्, अध्वर्युवरणं जपं च, अध्वर्युवरणं समिधादानं च, अग्नेरुपस्थानम्, परिषेकं समिधादानं च, शाखाछेदनम्, वत्सापाकरणम्, असिसंस्कारः, बर्हिसंस्कारः, शुल्बनिर्माणम्, कुशमुष्टिबन्धनप्रकारः, इध्म-

बन्धनप्रकार:, वेदिनिर्माणम्, पवित्रकरणप्रकार:, दोहनम्
पात्रासादनं प्रणीता प्रणयनं च, हविर्निर्वाप:, हवि: कण्डनादि-
कपालोपधानान्तम्, पुरोडाशश्रपणम्, वेदिकरणम्, स्रुक्संमार्ग:
पत्नीसंनहनमाज्यग्रहणं च, बर्हिरास्तरणस्रुगासादनं च, हविरा-
सादनम्, होतृवरणकाल:, होतृनामकऋत्विजार्थ देवतानिदर्शनम्,
होतु: प्रवेशविधि:, होतृनियमा:, सामिधेन्यं जप:, अभिहिंकार-
स्वरूपम्, सामिधेनीमन्त्रपाठ:, देवताह्वानम्, होतु: निरसनोपवेशन-
विधि:; स्रुगादापननिगदपाठ:, अथप्रयाजयाग:, प्रधानयाग:,
अथस्विष्टकृद्याग:, इडोपाह्वानम्, ब्रह्मभागप्राशनविधि:, इडा-
प्राशनमंत्र:, अग्निसम्मार्जनप्रैषा:, अनुयाजयाग:, स्रुग्व्यूहनम्,
सूक्तवाक:, शंयुवाक:, संस्रावहोम:, स्रुक्विमोक:, पत्नीहोम:,
आज्यइडोपाह्वानम्, पाण्योश्चनिन्हव:, पत्नीसंयाजा:,
दक्षिणाग्नौ प्रायश्चित्तहोम:, फलीकरणहोम:, पत्नीवेदप्रदानम्,
योक्त्रविमोक:, होतृकर्तृकप्रायश्चित्तहोम:, ऐष्टिकप्रायश्चित्तहोम:,
अन्तर्वेद्यां प्रणीतानिनयनम्, विष्णुक्रम:, यज्ञविमोक: इति ।

तृतीयाध्याये - पिण्डपितृयज्ञ: आग्रयणेष्टिश्चेत्युभयो: श्रौतसूत्रानुसारो विचार:

पिण्डपितृयज्ञ:, आग्रयणेष्टि: इति ।

चतुर्थाध्याये -

निरूढपशुबन्ध:, निरूढपशुबन्धस्यकाल:, संभारा:, प्रयोगक्रम:,
यूपनिर्माणम्, पाशुकवेदिसंस्कार:, यूपस्थापनार्थं गर्तकरणमग्नि-
प्रणयनं च ।, यूपसंस्कार:, पशोरुपाकरणम्, यूपेपशुनियोजनम्,

पशुसंस्काराः, प्रयाजयागः, पशोः पर्यग्निकरणम्, पशोः संज्ञपनविधिः, वपानिष्कासनार्थं पशोर्विशसनम्, वपायागः, पशुपुरोडाशयागः, अंगहविर्यागः, वसाग्रहणविधिः, वसाहोमविधिः, वनस्पतियागः, स्विष्टकृद्यागः, इडोपाह्वानम्, दक्षिणादानविधिः, गुदहोमः अनुयाजश्च होमविधिः, स्वरुहोमः, जाघनीयागः, पत्नीसंयाजस्य इडोपाह्वाने विशेषः, समिष्टयजुर्होमः, हृदयशूलोद्वासनविधिः, समिद्धोमः, औपयाजिकेऽग्नौ सक्तुहोमविधिः, उपस्थानविधिः, पूर्णाहुतिहोमः, आश्वलायनोक्तं पशुतन्त्रम् ।

## पञ्चमाध्याये -

वैश्वदेवपर्व, वरुणप्रघासपर्व, साकमेधपर्व, शुनासीरीयपर्व इति ।

## षष्ठाध्याये -

सोमप्रकरणम्, अग्निष्टोमः, प्रधानसंकल्पप्रकारः, ऋत्विग्वरणम्, दीक्षाप्रकारः, दीक्षान्ते यजमानस्य उद्घोषः, दीक्षितयजमानस्य अनुशासनं संशास्ति, प्रायणीयेष्टिः, सोमक्रयः, क्रीतं राजानं यथोक्तदेशे स्थापनम्, तानूनप्त्रसंज्ञकस्याज्यस्य संस्कारः, सोमाप्यायनम्, अथनिन्हवः, प्रस्तरांजनविधिः, अवान्तरदीक्षाविधिः, अथप्रवर्ग्यः, वेदिमानम्, प्रवर्ग्योद्वासनम्, अथाग्नीषोमीयः, वसतीवरीसंज्ञकानां कलशानामासादनम्, प्रातःसवनम्, माध्यन्दिनसवनम्, तृतीयसवनम्, अवभृथेष्टिः,

उदयनीयेष्टिः, अनुबन्ध्यायागः, उदवसानीयेष्टिः इति ।

## सप्तमाध्यायः

उपसंहारः इति विषयाः कल्पिताः ।

चिरन्तने काले गुरोर्गृहेषु वेदानामध्ययनार्थम् - (गुरुमुखोच्चारणानुच्चारणार्थम्) उपनीतामाणवकाः सम्प्रविश्य वेदाध्ययनं कुर्वन्तः, गुरोर्लौकिकव्यवहारेषु परिचयञ्च प्राप्नुवन्तः वेदाध्ययनमकार्षुः । वेदाध्ययनसमये एव माणवकानां विनयः, वैदिकपदार्थावगतिः, लौकिकव्यवहारनैपुण्यम्, वृद्धोपसेविता इत्यादीनां सच्चरित्र सम्पादकानां परिज्ञानमासीत् । तदनन्तरं अध्ययनकार्ये समाप्ते गुरूणामनुज्ञयास्नातकाभूत्वा द्वितीयमाश्रमं प्रविविक्षवः यदामाणवका जायन्ते तदागुरुभिः "स्थाणुरयं भारः किलाभूदधीत्य वेदं न विजानातियोऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ।। (निरुक्त० १।१८) इति रीत्या वेदार्थपरिज्ञानेन विना कृतमध्ययनं निष्फलं स्यादिति वेदार्थपरिज्ञानाय प्रेरिताः गुरुकुले एव उषित्वा - वेदवाक्यार्थज्ञानं प्राप्नुवन्ति स्म । तस्मिन्नेव काले कर्मानुष्ठान विधायकानि सूत्राणि प्रयोगकल्पाश्च सम्यगधीत्य द्वितीयमाश्रमं प्रविशन्ति स्म । एवं रीतौ प्रचलन्त्यां दैववशेन अथवा पुरुषाणां औदासीन्येन च वेदार्थपरिज्ञानमात्रेणाध्ययनं पर्यवसति स्म । तामिमां न्यूनतामवगत्य, आश्वलायन, बौधायन, कात्यायन, लाट्यायन प्रभृतयः महामहर्षयः सूत्रग्रन्थान् व्यग्रन्थुः । इमे ग्रन्थाः यद्यपि न नवीनाः किन्तु आचारपथे विद्यमानान् विषयान् संगृह्य, सूत्ररूपेण कल्परूपेण च महर्षयः ग्रन्थान् प्रायणैषुः । इमे च ग्रन्थाः तत्तच्छाखाः अवलम्ब्य प्रवृत्ताः । यो यच्छाखीयः सः तच्छाखीयं सूत्रं कल्पं च अवलम्ब्य

कर्मानुष्ठानं कुर्यात् । इति मनीषया महर्षयो ग्रन्थान् निर्मितवन्तः । तत्र बौधायनः यजुः शाखीयः आश्वलायनश्च ऋक्शाखीयः । पृथक्-पृथक् सूत्रग्रन्थ-निर्माणे महर्षीणामयमाशयः वेदविहितेषु कर्मसु परिशील्यमानेषु त्रिविधानि कर्माणि उपलभामहे इष्टिः, पशुः, सोमश्चेति । तत्र व्रीह्यादिद्रव्यैः क्रियमाणानि कर्माणि इष्टिशब्देन व्यवह्रियन्ते । एवं पशुद्रव्येण क्रियमाणानि पाशुकानि सोमलतया च क्रियमाणानि कर्माणि सौमिकानीति कर्मणां त्रैविध्यम् । एतेषु ऐष्टिक कर्माणि वेदद्वय साध्यानि । ऐष्टिककर्मणां पाशुकानि कर्माणि विकृति भूतानीति, तत्रापि वेदद्वयसाध्यत्वं प्राप्यते । किन्तु क्वचित् पाशुककर्मसु विधिविशेषबलेन साम्नामपि प्रयोगो दृश्यते । सौमिकानि च कर्माणि वेदत्रय साध्यान्येव भवन्तीति स्थितिः । अस्यां स्थितौ यजुर्वेदस्य सर्वेष्वपि कर्मसु प्रवृत्तिः, यथास्तथा ऋग्वेदस्यापि । सामवेदस्य तु यत्र उद्गातृगणस्य प्रवृत्तिरस्ति तत्रैव प्रवृत्तिः । एवं च यजुः शाखायां बौधायन-आपस्तम्बादयोमहर्षयः, ऋक्शाखायां आश्वलायनः, साम-शाखायां लाट्यायनप्रभृतयः सूत्राणि जग्रन्थुः । अस्यां स्थितौ बौधायन-आश्वलायनीय लाट्यायनीयसूत्र ग्रन्थान् पर्यवेक्ष्य, निबन्धोऽयं प्रस्तूयते । यद्यपि बौधायनस्य आश्वलायनस्य च अनुष्ठीयमानेषु कर्मसु विप्रतिपत्तिः न भवत्येव तथापि ब्राह्मणग्रन्थेषु यत्र किञ्चित्वैलक्षण्यमुपलभ्यते, तत्तु सूत्रकारैः अनुस्त्रियते । तदिदं समीक्ष्य, निबन्धोऽयं लिखितः । अनेन निबन्धेन तत्र-तत्र अनुष्ठीयमानाः पदार्थाः एव केवलं न विवेचिताः, किन्तु अनुष्ठानप्रकारोऽपि निरूपितः । निबन्धमिममधीत्य, सूत्रग्रन्थेषु पाठ्यमानेषु सूत्रार्थावबोधः सुकर इति मदीयः प्रयासः । अस्मिन्निबन्धे तत्तदाकारनिर्देशोऽपि कृतः, येन अध्येतृणां तत्तदाकार स्थानानि विलोक्य वेदवाक्यार्थोऽपि तत्तत् भाष्याध्ययनेन ज्ञायते । एतस्मिन् निबन्धलेखने मार्गनिर्देशं कृतवद्भ्यः मत्

पितृव्यचरणेभ्य: घनपाठि डा० श्रीविश्वनाथ वामनदेव महोदयेभ्य: पद्मभूषण, पं० पट्टाभिरामशास्त्रिवर्येभ्यश्च भूयस: प्रणामान् समर्पयामि । निबन्धलेखनाय येषां ग्रन्थानामावश्यकता आसीत् तेषामवलोकनसौविध्यं दत्तवते विश्वनाथपुस्तकालयाध्यक्षाय, एवं सरस्वतीभवन पुस्तकालयाध्यक्षाय च कृतज्ञतां प्रकटयामि ।

गंगाधर



## कृतज्ञताज्ञापनम्

शास्त्र्याचार्यपरीक्षायामधीयानोऽहं तातचरणैः विश्लेषणात्मक बुद्ध्याऽध्ययने भूरिशः प्रेरितः । तत्कृपावशादेवाहमस्मिन् शोधकार्ये प्रवृत्तोऽभवम् । यद्यपि न सन्तोषमुल्लेभे, तथापि तान् प्रत्येवेदं कर्म "त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये" इति बुद्ध्यासमुपाहारो क्रियते । पितृतुल्यान् वात्सल्यभरितान् अनुसन्धान कर्मणि प्रवर्तकान् पण्डितैरपिस्तुल्यान् श्रीपट्टाभिरामशास्त्रिणः प्रति कैः शब्दैः कृतज्ञतां ज्ञापयामीति विचार्यमाणेऽस्मिन् विषये अनागतशब्द-कृत्वादहं केवलं श्रद्धासुमनाञ्जलिपरिपूरितः तदाशिषं कामये । यत्ते मदीये समस्ते जीवने गहनाध्ययनात्मिकां मदीयां प्रवृत्तिं कुर्युरिति ।

आचार्यपरीक्षां समुत्तीर्य कं विषयमवलम्ब्य मयाऽनुसन्धानकार्यं-कर्तव्यमिति जिज्ञासमानेन प्रातःस्मरणीयानां भूतपूर्ववेदविभागाध्यक्ष श्रीगोपालचन्द्रमिश्र महोदयानां सविधे गमनमकारि । तैरेव विषयोऽयं समुपदिष्टः तदर्थं तेऽपि हार्दिकया कयाचिदव्यक्तभावनया संस्मर्यन्ते इदानीं भूरिशः ।

एतद्विषयविज्ञान प्रातःस्मरणीयान् पण्डितवर्यान् श्रीवे०मू०गणेश-भट्टवापटमहोदयान् संस्मर्य संस्मर्य स्वकीयां कृतज्ञतां ज्ञापयामि । शोधप्रबन्ध शरीरात्मक संस्काराणां डा०श्रीगजाननशास्त्रिमुसलगांवकरमहोदयानां भूरिशोऽहं कृतज्ञोऽस्मि । यैः शोधप्रबन्धात्मनः इवमदात्मनोऽपि संस्कारो विहितः ।

शोधप्रबन्धमार्गदर्शकाः प्राधान्येन शास्त्रिवर्यामिन्द्रिदेशकाः सन्त्येव तथापि मन्दितुव्यचरणैः डा०वे०मू०विश्वनाथवामनदेव 'घनपाठी' महोदयैः सौमनस्यात् वात्सल्यात् साहचर्याच्च शभिन्दिवं सदृशोऽहं प्रेरितः येनायं शोधप्रबन्धः तद्विभाग कल्पनाकल्पितः शीघ्रमेव पूर्तिंगमात् । एतदर्थेन्तेऽपि मनोवाक्कर्मभिः नोनूयन्ते ।

मदीयाः सहयोगिनः डा०जनार्दनशास्त्रिरटाटेमहोदयाः, पं०श्यामबापटमहोदयाः, वे०मू०जोगलेकरमहोदयाः अन्येपि श्रौतकर्म-निष्णाताश्च साधुवादैरभ्यर्च्यन्ते ।

विभिन्नान् तान् पुस्तकालयाध्यक्षानपि नमोवाचा संस्तौमि यैः यथासमयं पुस्तक दानेनाहं भूरिशः उपकृतः । अन्येऽपि ये केचन साक्षात् परम्परया अस्मिन् शोधकर्मणि साहाय्यं प्रदत्तवन्तः सन्ति ते सर्वेऽपि भूरिशो धन्यवादैः सत्कार्यन्त इति शम् ।

गंगाधर



# संकेताक्षराणां तालिका

| | | |
|---|---|---|
| (१) | आरण्यगान | आरण्यगान |
| (२) | आश्वलायनगृह्यसूत्रम् | आ० गृ० सू० |
| (३) | आश्वलायनश्रौतसूत्रम् | आ० श्रौ० |
| (४) | ऊहगान | ऊहगान |
| (५) | ऊह्यगान | ऊह्यगान |
| (६) | ऋग्वेदसंहिता | ऋ० सं० |
| (७) | ऋग्वेदीयनिखिल-कुन्तापप्रैषाध्यायचरणव्यूहाः | नि०कु०प्रै०च० |
| (८) | ऐतरेयब्राह्मणम् | ऐ० ब्रा० । ऐब्रा० |
| (९) | काठकसंहिता | का० सं० |
| (१०) | कृष्णयजुर्वेदतैत्तिरीयब्राह्मणम् | तै० ब्रा० । तैब्रा० |
| (११) | कृष्णयजुर्वेदीयतैत्तिरीयसंहिता | तै० सं० । तैसं० |
| (१२) | छान्दोग्यब्राह्मणम् | छाब्रा० |
| (१३) | तैत्तिरीय आरण्यकम् | तै० आ० ।तैआ० |
| (१४) | बौधायनअग्निष्टोमप्रयोगः | अ० बौ० प्र० |
| (१५) | बौधायनश्रौतसूत्रम् | बौ० श्रौ० ।बौ०श्रौ० |
| (१६) | मैत्रायणीसंहिता | मै० सं० |
| (१७) | गेयगान | गेयगान |
| (१८) | शतपथब्राह्मणम् | श० ब्रा० |
| (१९) | शांखायनब्राह्मणम् | शा० ब्रा० |
| (२०) | श्रौतकोशः (भागद्वयात्मकः) | श्रौतकोश |

## मङ्गलाचरणम्

वेदत्रयात्मन्नलत्रयात्मन्,
ईशत्रयात्मन्प्रकृतेर्गुणात्मन् ।
जन्तोरवस्था तृतयानुबिम्बो,
बिम्बत्रयात्मन्नवमामनर्थात् ॥

## प्रथमाध्याय:

## बौधायनाश्वलायनश्रौतसूत्रेऽनुसृत्यअग्न्याधेयप्रकरणस्य नित्याग्निहोत्र होमान्तो विचार:

अग्न्याधानम् -

श्रौतकर्मानुष्ठानेषु सस्त्रीकाः द्विजाः अधिकुर्वन्ति । तत्र पाणिग्रहणावसरे स्मार्ताग्नि सिद्ध्यर्थं प्रवेशहोमनाम्ना किञ्चित्कर्म- विहितम्, तेन कर्मणा स्मार्ताग्निः सिध्यति । तमग्निं परिरक्षन् यजमानः सायं प्रातराहुतिं यथा विधिरनुष्ठाय पर्वकाले प्राप्ते स्थाली- पाकरूपेण तदेव कर्म अनुतिष्ठेत्, यच्च कर्म दैनं दिनं तण्डुलद्रव्येण अनु- ष्ठितम् । एवं परिरक्षितेन अग्निना गार्हस्थाश्रमे सम्बद्धानि गर्भाधान - सीमंतोन्नयन - जातकर्मादीनि यथाविधि अनुतिष्ठेत् । इमानि कर्माणि अनुतिष्ठन् गृह्यसूत्रेषु विशेषरूपेण तत्तत्काले अनुष्ठेय तया विहितानि यानि तान्यप्याचरेत् । एवमाचरन् सद्विजः "यदहरं वैनं श्रद्धोपनमेत्तदहरेवा दधीत" इति ब्राह्मण-वाक्यानुसारेण श्रौताग्नीनाऽदधीत । अत्र स्मार्ता- ग्निरिति श्रौताग्निरिति च भेदेन व्यवहारः किं प्रयुक्तः ? इति प्रश्नस्य इदमेव उत्तरं वक्तव्यं भवति यत् विवाहानन्तरं प्रवेश होमाख्येन कर्मणा योऽग्निः सिद्धः, तेन् अग्निना क्रियमाणानि कर्माणि स्मार्तानीति, श्रौताधानेन सिद्धैरग्निभिः क्रियमाणानि कर्माणि च श्रौतानीति । एवं श्रौताग्नि साध्येषु कर्मसु संख्यातीतेषु आधानाख्यं कर्म प्रथमं परिगण्यते । तस्य इदं स्वरूपम् श्रौताधानं कर्तुमिच्छन् पुरुषः ब्राह्मणानुज्ञातः सपत्नीकः कूष्माण्डहोम, गणहोम, गोदानादिभिः आत्मानं पावयित्वा श्रौताधाने प्रवर्तेत ।

अग्न्याधेयस्य व्युत्पत्तिः -
------------------

'अग्नीनामाधानं अग्न्याधेयम्' अग्नीनां धारणमित्यर्थः । विशिष्टे काले विशिष्टेदेशे विशिष्टपुरुषेण विशिष्टैर्मन्त्रैः गार्हपत्त्याधग्न्युत्पत्त्यर्थं यदरण्युत्पादिताङ्गाराणां निधानं तदग्न्याधेयम् ।

आधानस्य पक्षाः -
--------------

अग्न्याधाने त्रयः पक्षाः उच्यन्ते - (१) अग्न्याधानम्, (२) पुनराधानम्, (३) तृतीयाधानम् (अर्धाधानं) चेति । पुनरपि पक्षान्तरं प्रस्तूयते - (१) सोमपूर्वम् - सोमात्पूर्वं सोमपूर्वम् । तत्र च आधानानन्तरं सोम सङ्कल्पादिकं सम्पादयेत् । (२) इष्टिपूर्वमाधानम् - पूर्णिमायां कृतमाधानमिष्टि पूर्वं भवति । (३) अग्निहोत्रपूर्वमाधानम् - तत्र अमावस्यायां - क्रियमाणमाधानं नक्षत्राधानमित्युच्यते । तच्चाऽग्निहोत्र पूर्वं भवति ।

अग्न्याधानस्य कालः -
----------------

अग्न्याधानग्रहण विचारसमये महर्षिणा बोधायनेन आश्वलायनेन स्वकीय प्रणीत कल्पग्रन्थे ऋतु-तिथि-नक्षत्राणि विचार्यन्ते । तत्र शिशिर, वसन्त, ग्रीष्माऋतवः उक्ताः । पौर्णमास्यमावास्यौ यजनीयातिथीः । तथा च कृत्तिका, रोहिणी, पुनर्वसु पूर्वोत्तराफाल्गुनी चित्रादीनि नक्षत्राणि

उद्धृतानि । कस्यचिदृषेर्मतानुसारेण मृगशीर्ष - विशाखा - प्रोष्ठपदा श्रवणानुराधादीन्यपि ग्राह्याणि । पद्धतिकारेणतु रोहिणीयुक्ता वैशाख्यमावास्या प्रधानत्वेन ग्राह्येत्युक्तम्।। अग्न्याधानसमये ऋतुनक्षत्र पर्वणां योग: प्रधानम्, अथवा रोहिणीयुक्तौ यजनीयोपवसथौ प्रधानौ । तदभावे ऋतुनक्षत्र योग एव ग्राह्य:, अथवा रोहिणीनिर्दिष्टपक्ष एव ग्राह्य: । ऋतुपर्वणोर्योगो वा ग्राह्य: । आतुराधाने तु ऋतुनक्षत्रपर्वणां नियमो नास्ति । सोमपूर्वाधाने तु आधान दिन एव यथा दीक्षा भवति - तत्पूर्वकाल एव[1] । तथा च ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां (रथकारोपजीवी) कृते क्रमेण वसन्त:, ग्रीष्म:, शरदवर्षेति ऋतव: उक्ता: ।

अग्न्याधानस्य सङ्कल्प: -
---------------------

आधान सङ्कल्प ग्रहणस्यैक दिनात्पूर्वं नांदीश्राद्धं पश्चात् रात्रौ

-----------------------------------------------

(१) अथातो नक्षत्राणामेव मीमांसा । "कृत्तिकास्वग्निमादधीत" बौ० श्रौ० २।१२, कृत्तिकासु - - - - - - - - - - - -
सोमेन यक्ष्यमाणोनर्तुं पृच्छेन्ननक्षत्रम्, आ० श्रौ० २।१ ।
कृत्तिकासु ब्राह्मण आदधीत -- - - - - - - - - - - - - -
सूर्योन्नक्षत्रम् । आ० श्रौ० ३ । कृत्तिकास्वग्निमादधीत०
योरोहिण्यामग्निमाधत्ते इत्यादि तै० ब्रा० १।१।२।४।६,
फाल्गुनीपूर्णमासे ब्राह्मणस्या दध्यात० मै० सं०
(१-६-६।१०।३।१२) यत् कृत्तिकास्वग्निमाधत्ते० का० सं०
(८+१।३, १०।७।१५), सयोऽमावास्यायामग्नी आधत्ते०
श०ब्रा० ११।१।१।, २।१।२-३ ।

उदकशान्तिः प्रतिसरबन्धं च विधाय संकल्प दिने स्नानोत्पवन - मंत्राचमन - मंत्रप्रोक्षणादि कुर्यात्[१] । ऋत्विजश्च स्नानादि चतुष्टयं कुर्युः । तदनन्तरं पुण्याहं वाचयेत् । ततोऽग्न्यादयः प्रीयन्तामिति विशेषः । तत औपासनाग्नेः पश्चात्[२] प्राक्कूलेषु दर्भेषु पत्नीयजमानावुपविशतः । उपवेशनसमये उत्तरतः पतिः, दक्षिणतः पत्नी, ऋत्विजस्तयोरुत्तरतः प्राङ्मुखा उपविशन्ति । ततः पत्नी यजमानौ "याः[३] पुरस्तादित्यादि निविष्टं" मित्यन्तं जपति । "सर्वकामोऽग्नीनाधास्ये" इति मनसा त्रिःसङ्कल्प्य त्रिरुच्चैर्वदेत्[४] । सोमपूर्वे तु सोमेन यक्ष्यमाणः "सर्वकाम[५]" इति विशेषः ।

ऋत्विग्वरणम्[६] -

यजमानो वरणार्हान् ऋत्विजः प्रति "तन्मऋध्यतां[७]" इति मन्त्रं

---

(१) "यो यक्ष्य इत्युक्त्वा न यजेत" ।
(२) "प्राक्कूलान् दर्भान्स्तीर्य तेषु प्राङ्मुखो यजमान - उपविश्य जपति" । बौ० श्रौ० २।१ ।
(३) याः पुरस्तात् प्रस्रवन्त्युपरिष्टात्सर्वतश्चयाः, - - - - - - यज्ञमारभे, बौ० श्रौ० २।१ ।
(४) "मनसा त्रिः संकल्पयते त्रिरुच्चैः", बौ० श्रौ० २।१ ।
(५) "सर्वतु फलकामः" इति पद्धतिकारः, बौ० श्रौ० २।४ ।
(६) "ऋत्विजो वृणीते" । आ० गृ० सू० १।३ ।
(७) "तन्म ऋध्यतां तन्मे समृध्यतां तन्मे सम्पद्यतां कामः, बौ० श्रौ० २।१ ।

वदेत् । ते च प्रतिब्रूयुः प्रत्युच्चरसमये "तन्मं" इति स्थाने "तच्चं" "तच्चं" - पठनीयम् । पश्चात् यजमानः "ओं तथा" इति वदति । ततो यजमानः अहमाध्वर्येण त्वां गच्छामि, याजयतु मां भवान् । ब्रह्मत्वेन - हौत्रेणौ- द्गात्रेणाग्नीध्रीयेणेत्याद्युच्चारयन् पादावुपसंगृह्य प्रार्थयेत् । यदि यजमानः आश्वलायनशाखीयः स्यात् तर्हि स्व शाखानुसारेण ब्रह्मादी- नृत्विजो वृणीते ।

ब्रह्मवरणम् [1] -

यजमानः "चन्द्रमा[2]मे ब्रह्मा समे ब्रह्मा ब्रह्माणं "त्वां[3] वृणे" इति ब्रह्मवरणं कुर्यात् । वृतो ब्रह्मा "महन्मेवोचो०" मंत्रस्यान्ते ब्रह्मा- हन्ते मानुषः" इत्यन्तं जपं कुर्यात् । यजमानः - "ओं तथे"ति सर्वत्र प्रतिवचनं कुर्यात् ।

होतृवरणम् [4] -

यजमानः अस्मिन्नाधाने "अग्नि[4]र्मेहोतासमे होताहोतारं त्वा

---

(१) "ब्रह्माणमेव प्रथमं वृणीते" आ० गृ० सू० १।२३।२ ।
(२) "चन्द्रमादेवो दैवो ब्रह्मा०" बौ० श्रौ० २।४
"चन्द्रमामे ब्रह्मा०" आगृ० सू० १।२३।८ ।
(३) "त्वा वृणे" इत्यस्याग्रे यजमानो ब्रह्म प्रभृतीनां नामानि वदेत् ।
(४) होतारमेव प्रथमं वृणीते । अग्निर्मेहोतासमेहोता० ।
आ० गृ० सू० १।२३।६-७ ।

वृणे । इति ब्रह्मवरणं कुर्यात् । ततो होता - महन्मेऽवोचो० इत्यादि जपित्वा अग्निष्टे होता स ते होता होता - - - - - - - अहं ते मानुषः इति मन्त्रं पठेत् ।

अध्वर्युवरणम्[1] -

---

यजमानः अस्मिन्नाधाने आदित्योमेऽध्वर्युः समेध्वर्युरध्वर्यु त्वा वृणे इत्यध्वर्युं वरणं कुर्यात् । वृतोऽध्वर्युः महन्मेऽवोचो०[2] इत्यादि जपित्वा आदित्यस्तेऽध्वर्युः सतेऽध्वर्युरध्वर्युः[3] - - - - - - - - - अहं ते मानुषः इति मन्त्रं पठेत् ।

उद्गातृवरणम्[4] -

---

तदनन्तरं उद्गातृपदो यजमानः - अस्मिन्नाधाने पर्जन्यो देवो

---

(१) आदित्योदेवो देवोऽध्वर्यु० बौ० श्रौ० २।४ ।
आदित्योमेऽध्वर्युरित्यध्वर्युम् । आ० गृ० सू० १।२३।६ ।

(२) स वृतो जपेत् । महन्मेऽवोचोमर्गोमेऽवोचो० । आ०गृ०सू० १।२३।६, वृतो वृतो जपति महन्मेऽवोचो० । बौ० श्रौ० २।४ ।

(३) - - - - - - - - - इत्थमङ्कितौ चिन्हे ब्रह्मप्रभृतयः स्वं स्वं नाम-वदेयुः ।

(४) पर्जन्योदेवो बौ० श्रौ० १।४ ।
पर्जन्योमउद्गातेत्युद्गातारम्, आ० गृ० सू० १।२३।६ ।

देवउद्गाता० - - - - - - - - त्वावृणे इति उद्गातृवरणं कुर्यात् ।
तत उद्गाता "महन्मेवोचो०[1] - - - - - इति पर्जन्योदेवो देवउद्गाता
- - - - - - - - इति च जपेत् ।

आग्नीध्रवरणम्[2] -

ततो यजमानः अस्मिन्नाधाने आग्नीध्रं त्वा वृणे इति आग्नीध्रं वृणुयात् । तत आग्नीध्रः स भविष्यामीति वदेत् । श्रौतयज्ञे ऋत्विग्वरण समये कीदृग्गुणयुक्तानां ऋत्विजां चयनं सम्पादनीयमित्यस्मिन् प्रसङ्गे महर्षिणा बौधायनेन स्वकीय कल्पग्रन्थे आश्वलायनेन गृह्यसूत्रे श्रौतसूत्रे च गुणाः स्पष्टतया संगृहीताः । इतः परं केचित् सामान्य गुणाः दोषाश्च सामान्येन अवलोक्यन्ते ।

बौधायनमतेन सामान्यगुणाः[3] -

ऋत्विजः योनि - गोत्र - श्रुतिवृत्तसम्पन्ना अविगुणांगा, अत्रिकिण्विनः, न परिस्वाति क्रान्ता, नाऽन्तगा, नान्तजा, नाऽननूचाना:, इमे गुणाः बौधायनमतेन प्रतिपादिताः ।

---

(१) महन्मे० पर्जन्योमउद्गातेत्युद्गातारम्, आश्व गृ० सू० १।२३।६ ।
(२) आग्नीध्रवरणं पद्धतिकारेणोक्तम् ।
(३) "अथर्त्विजां वरणम्" बौ० श्रौ० २।३ ।

आश्वलायनमतेन गुणाः[१] -

ऋत्विजः महापातकादिरहिता अविशुद्धा स्तथाऽपस्मारादि दोषरहिता भवन्ति । येषां ऋत्विजां मातृतः पितृतश्चोभयतो ये दश-पूर्वाः पुरुषास्ते क्रियया तपसा पुण्यैः कर्मभिः प्रतिषिद्धवर्जितैश्च युक्ताः - सम्यगनुष्ठितवन्तोवैदिकं पन्थानमपि चाब्राह्मण्यं न निनयेयुर्निश्चयेन अब्राह्मण्यं न गमयेयुः त एव ऋत्विजो वरणार्थं ग्राह्याः ।

बौधायनमतेनदोषाः[२] -

हालेय, वालेय, पुत्रिका-पुत्रपरदौत्र-सहोढकानीनाऽऽनुजावर द्विप्रवरा इति दोषाः ।

आश्वलायनमतेनदोषाः -

महापातकादि युक्तास्तथा अपस्मारादिरोगयुक्ताश्च न ग्राह्या । तथैव अब्राह्मण्यगमनशीला अपि न ग्राह्या । एवं प्रकारेण ऋत्विग्वरणं सम्पाद्येत वरणसमये यदि यजमानः बौधायनशाखीयः स्यात् तर्हि सर्वेषां स्वशाखानुसारेण

---

(१) कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् आ०गृ०सू० १।५; "ये मातृतः पितृतश्च" आ० श्रौ० ९।३।२० ।

(२) "हालेय वालेय०" बौ० श्रौ० २।३ ।

वुरणं करोति ।

मधुपर्कः -

अनन्तरं यजमानो वृतानृत्त्विजो मधुपर्केणार्हयिष्ये इति संकल्पपूर्वकं वरणक्रमेण ब्रह्मादीन्[१] काण्डानुसमयेन पदार्थानुसमयेन[२] वार्हयेत् ।

मधुपर्कप्रकारः -

वृणीतान्तं ऋत्विजां कृते मधुपर्कं यजमानशाखया ददाति ।

तस्मिन प्रसङ्गे --

बौधायनानुसारेण मधुपर्कप्रकारः[३] -

यजमानः शुद्धागारमध्ये एणकाचर्मसने उदग्दशमहतं बहुगुणं वासनमास्तीर्य, तत्र प्राङ्मुखं वृतमृत्त्विजमुपवेश्य तस्यैवागारस्यैशानभागे प्रागग्रेषु

---

(१) काण्डानुसमयोनामस्यैकस्यैव विष्टरादि गोनिवेदनान्तं समाप्य ततोऽन्यस्य ततोन्यस्ये त्यनुष्ठानम् ।

(२) पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरं दत्वा ततः पाद्यं ततोऽर्घ्यादीनामनुष्ठानम् ।

(३) मध्येऽगारस्योदीचीन प्रतिवेषणा एरका उपस्तृणाति, बौ० गृ० १।२।२ ।

दर्भेषु स्थूलापिधान सहितं कांस्यपात्रं चतुरः कूर्चान् दधिमधुघृतमापः पयश्च पृथक्-पृथक् पात्रेषु वस्त्रयुगं, कुण्डलयुगं, भोजनपात्रं, प्रगलं करणीयम्, उदकुंभं प्रोक्षणीपात्रमुदपात्रं व्रीहीन्यन्वा इत्यासादयेत् । तथा च यस्यागोर्मधुपर्कार्थं पय आनीतं तां दक्षिणार्थं च अन्यां संनिधापयेत्[1] । पवित्रे कृत्वा प्रोक्षणी-पात्रमुत्तानीकृत्य, प्रोक्ष्य तस्मिंस्तिरः पवित्रमप आनीय त्रिरुत्पूयानि पात्राणि उत्तानीकृत्य त्रिः प्रोक्ष्य कांस्यपात्रं कूर्चे स्थापयित्वा तस्मिन् तिरः पवित्रमध्यानीय दध्यानयति । अनन्तरं घृतमानीयपय आनयति । ततोऽपआनीयवर्षीयसा तेजोमयेनापिधाय कूर्चं ऋत्विजे प्रयच्छति "कूर्चं इति, ऋत्विक्सुकूर्चमित्युक्त्वा प्रतिगृह्य प्रदक्षिणं परिभ्राम्यं तमासनस्या-धस्तात् प्रत्यृचं पुरस्तादुपगूहति । उपगूहनमंत्रः - राष्ट्रभृदस्याचार्यसंदी-मात्वयोषमिति[2] । पश्चात् यजमानः उदपात्रे आनीयकूर्चाभ्यामधस्तादुपरिष्टा-च्च परिगृह्य पाद्य आप इति प्राह[3] । ऋत्विक् ता अभिमंत्रयते ।

---

(१) तास्वहतानि बहुगुणान्युत्तर दशानि वासांस्यास्तीर्य तेष्वृत्विजः प्राङ्मुखा उपविशन्ति - - - - - - - - - - - - - - - - - - - - - - - - - - - - - यस्यै गोः पयश्चमधः प्रगगलङ्करणीयं चेति, बौ० गृ० १।२, सू० ३ से ८ ।

(२) पवित्रे कृत्वा - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - मात्वयोषमिति, बौ० गृ० १।२, ६-१८ ।

(३) अथास्मा उदपात्रमादाय कूर्चाभ्यां परिगृह्यपाद्याआप इति प्राह बौ० गृ० सू० १।२।१६ ।

अभिमन्त्रणमन्त्रः -
---------------

आपः पादावनेजनीर्द्विषन्तं नाशयं तुमे । अस्मिन्कुले ब्रह्मवर्चस्य सानीति[१] । ततो दक्षिणं पादं पूर्वं प्रक्षालयति, ततो वामं स्त्री प्रक्षालयति पुमानभिषिञ्चति विपरीतं वा । ऋत्विक् पादाववनेक्तुः पाणीसंमृशति ।

पाणीसंमृशमन्त्रः -
---------------

"मयिमहो मयिभर्गो मयियशः[२] इति । अपउपस्पृश्यात्मन उरोभिमृशति - उरोभिमृशमन्त्रः - "मयीं श्रियं वीर्यम्" इति[३] । अपः स्पृशति यजमानः - पात्रान्तरेऽप आनीय व्रीहिभिर्यवैर्वा संमिश्रय कूर्चाभ्यां परिगृह्य अर्हणीया आप इति प्राह[४] । ऋत्विक् अभिमृश्य मन्त्रं ब्रूयात्, मंत्रः - आमआगाद्वां सा वर्चसा यशसा स सृजपयसा तेजसा च । तं मा प्रियं

---------------------------------------------

(१) ता अभिमन्त्रयते - - - - - - - - - - - - - - - -
ब्रह्मवर्चस्यसानिं इति । बौ० गृ० १।२।२० ।

(२) दक्षिणं पादं पूर्वं - - - - - - - - - - - - - - - -
मयि यश इति । बौ० गृ० १।२।२१-२४ ।

(३) बौ० गृ० १।२।२५, अथाप - - - - - - - - - - - - -
प्रत्यभिमृशते ।

(४) "अपोव्रीहिभिर्यवैर्वा - - - - - - - - - - - - - - - -
प्राह" बौ० गृ० सू० १।२।२६ ।

प्रजानां कुर्वधि पतिं पशूनाम्,[१] इति । यजमानस्तासामेकदेशं ऋत्विगं जला-
वानयति । ऋत्विक् आनीयमानमेकदेशमनुमन्त्रयते । मंत्रः - "विराजो-
होसि विराजोदोहममपथाय विराजः[२] । यजमानस्ताः परीचीर्नीयमानाः
आपोनुमंत्रयते । मंत्रः - "समुद्रं वः प्रहिणो - - - - - - - - मत्यय:"
इति[३] । पुनरपि पात्रान्तरेऽप आनीय कूर्चाभ्यां परिगृह्योपस्तरणीया आप
इति प्राह - ऋत्विक् ता आदाय "अमृतोपस्तरणमसी" ति सकृन्मंत्रमुक्त्वा
त्रिः पिबेत् । द्विः परिमृजेत् । आचमनशेषं समापयेत्[४] । यजमानः कूर्चाभ्यां
मधुपर्कपात्रं परिगृह्य "मधुपर्क" इति प्राह । ऋत्विबनुमंत्रयते । मंत्रः - "त्र्यं
विधायं यशोसि०" अनेन मंत्रणेति । "देवस्यत्वा०" मंत्रेण उभाभ्यां हस्ताभ्यां
परिगृह्णाति[५] । पिधानं दूरीकृत्य तत्र यत् किंचित्तृणादिकमापतितमंगुष्ठोप-
कनिष्ठिकयोपसंगृह्य नैर्ऋत्यां दिशि निरस्येत् ।

---

(१) ता अभिमन्त्रयते - - - - - - - - - - - - - - - - - -
पशूनामिति, बौ० गृ० १।२।२७ ।

(२) एकदेश - - - - - - - - - - - - - - - - - - - - -
विराज इति, बौ० गृ० १।२।२८ ।

(३) अतिशिष्टाः - - - - - - - - - - - - - - - - -
मत्यय इति, बौ० गृ० १।२।२९ ।

(४) "अथतथैव - - - - - - - - - - - - - - - - - - - -
द्विरित्येके, बौ० गृ० १।२।३०-३२ ।

(५) आचान्तायापावृताय - - - - - - - - - - - - - - -
प्रतिगृह्णामि इति बौ० गृ० १।२।३३-३५ ।

निरसनमन्त्रः -
------------

"नैष्ठाषिद्धिं कृता०" इति[१]। अपउपस्पृश्य सर्वाभिरं गुलीभि-र्मिश्रीकृत्य प्राश्नाति। प्राशनमंत्रः - "यन्मधुनो०" इति। सकृदेवमंत्रमुक्त्वा त्रिः प्राश्नाति। प्राशितमनु त्रिः पिबति। शेषमात्मनः प्रियाय दद्यात्[२]। यजमानः पात्रान्तरेणआनीय कूर्चाभ्यां परिगृह्य "पिधानीयाआप" इति प्राह। ऋत्विक् ताः "अमृतापिधानमसी" ति मंत्रेण पिबेत्। पश्चात् उदङ्मुखं पूर्ववदाचम्य प्राङ्मुखोपविशेत्[३]। यजमानः कृतान्जलिः "गौरिति दर्शयति। ऋत्विक् - "गौरस्यपहतं०" इति मंत्रपठनपूर्वक यजमानस्य च षष्ठ्यन्तं नाम गृह्णाति[४]। तामुत्प्रक्ष्यन्ननुमंत्रयते "मातारुद्राणां०" इति मंत्रेण। पिबतूदकं तृणान्यत्वोमुत्सृजतेति[५]। यजमानः पिष्टान्नं सिद्धान्नं भूतमिति प्राह। ऋत्विक् "सुभूतं" मित्युक्त्वा "भूतं सा विराट्०"

---------------------------------------------

(१) तस्मिंश्चित् ------------------
द्विष्मः" इति बौ० गृ० १।२।३६ ।

(२) अथाप उपस्पृश्य ----------------
दद्यादिति" बौ० गृ० १।२।३७-३६ ।

(३) आचान्तायाः -----------------
द्विरित्येके" बौ० गृ० १।२।४०-४२ ।

(४) आचान्तायापावृत्ताय --------------
नामगृह्णाति" बौ० गृ० १।२।४३-४४ ।

(५) अथयदुत्प्रक्ष्यन् ------------------
ओमुत्सृजत" बौ० गृ० १।२।५० ।

इति मंत्रेण तदनुमन्त्रयते[1]। ततः चतुरो नानागोत्रान् ब्राह्मणान् भोजयेत। तेषु भुक्तवत्सु भोजनपात्रे अन्नमस्मा उपहरंति। तत् ऋत्विक् प्राश्नाति। प्राशनमंत्रः - "विराडसि०" इति मंत्रेण। यजमानः ऋत्विजे वस्त्रयुगं, कुण्डलयुगं, दोग्ध्रीं गां, प्रगलं करणानि च यथासंभवं दद्यात्[2]।

"आश्वलायनानुसारेणमधुपर्कः"

---

आश्वलायनानुसारेण दर्भमयं विष्टरं[3] त्रिर्निवेदयति। विष्टरो-विष्टरो विष्टर इति[4]। ऋत्विगुदगग्रे तस्मिन्नुपविशति।

उपवेशनमन्त्रः -

---

"अहं वर्ष्म०"[5] इति। तदनन्तरं यजमानेन पाद्ये उदके[6] त्रिर्निवेदिते

---

(१) "अशक्तौ पिष्टान्नं संसिद्धं ------------- वर्गो कल्पयेत", बौ० गृ० १।२।५४-५७।

(२) "चतुरो नाना गोत्रान् ब्राह्मणान् भोजयेतत्येव ब्रूयात् --- ----- दद्यावित्येके, बौ० गृ० १।२।५८-६२।

(३) एकविंशति दर्भसमूहः विष्टरः।

(४) विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते, आ० गृ० सू० १।२४।७।

(५) अहं वर्ष्मसजातानां ----------------- उपविशे दाक्रम्य वा, आ० गृ० सू० १।२४।८।

(६) आ० गृ० सू० १।२४।७।

इदं दक्षिणं पादं प्रक्षालनार्थं प्रयच्छति[1]। ततः गंधपुष्पाद्यन्वितजलरूपे अर्घ्यें त्रिर्निवेदिते तमन्जलिना - प्रतिगृह्णाति[2]। आचमनीये जले त्रिर्निवेदिते सावशेषं "अमृतोपस्तरणमि[3]" ति मंत्रेण तदाचामति। पुनः शुद्धार्थं पुनरन्येन जलेन आचामति। मधुमिश्रे सर्पिमिश्रे वा दधिनि सापिधाने मधुपर्के[4] त्रिर्निवेदिते "मित्रस्यत्वा चक्षुषाप्रतीक्षे" ति मन्त्रेण आह्रियमाणं तमीक्षते[5]। "देवस्यत्वा सवितुः प्रसवे०" इति मंत्रेणाञ्जलिना प्रतिगृह्णाति। "मधुवाता०" इति तृचेनावेक्षते। सव्येपाणौ कृत्वा, अनामिकया चांगुष्ठेन त्रिः प्रदक्षिणमालोड्य, तदेकदेशं गृहीत्वा "रुद्रास्त्वा०" इति मन्त्रेण पुरस्तान्निमार्ष्टि। पुनः तदेकदेशं गृहीत्वा "रुद्रास्त्वा०" इति मन्त्रेण दक्षिणतः। "आदित्यास्त्वा०" इति मन्त्रेण पश्चात्। "विश्वेत्वा देवा०" इति मंत्रेणोत्तरतः। पुनः "भूतेभ्यस्त्वा" इति त्रिवारं मन्त्रपठनपूर्वकं मध्यात् गृहीत्वा मंत्रान्ते उत्क्षिपति[6]।

---

(१) पादौ प्रक्षाल्य पयौतदक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्। आ० गृ० सू० १।२४।६।

(२) प्रक्षालितपादोऽर्घ्यमन्जलिना प्रतिगृह्य, आ०गृ०सू० १।२४।११।

(३) अथाऽऽचमनीयेन चामतिअमृतोपस्तरणमसीति, आ०गृ०सू० १।२४।१२।

(४) दधनिमध्वानीय। सर्पिर्वा मध्वलाभे। आ० गृ० सू० १।२४।५-६।

(५) मधुपर्क - - - - - - - - - - - - - - - - - - - - - - - - प्रतीक्ष इति, आ० गृ० सू० १।२४।१३।

(६) देवस्यत्वा - - - - - - - - - - - - - - - - - - - - - त्रिरुद्गृह्य, आ० गृ० सू० १।२४।१४-१५।

ततो मधुपर्कपात्रं भूमौ निधायैकदेशं गृहीत्वा "विराजोदोहोसि" इति मन्त्रेण भक्षयति । शुद्ध्यर्थमाचम्य, पुनर्गृहीत्वा "विराजोदोहमशीय" इति मन्त्रेण भक्षयति, शुद्ध्यर्थमाचम्य, पुनर्गृहीत्वा "मयि दोहः पद्यायै विराजः" इति मन्त्रेण स शेषं तृतीयं प्राशनम्[१] । अवशिष्टमुदगुपविष्टाय ब्राह्मणाय प्रयच्छेदप्सुवा क्षिपेत्[२] । शुद्ध्यर्थमाचम्य, "अमृतापिधानमसि"[३] इति मंत्रेण पूर्वंनिवेदिताचमनीयेन स शेषमाचामति शुद्ध्यर्थमाचम्य "सत्यं यशः[४] श्रीर्मयिश्रीः श्रयताम्" इति मंत्रेण अवशिष्टेनाचामति[५] । गवित्रिर्निवेदितायां ऋत्विजः "मातारुद्राणां[६]०" इति मन्त्रपठनपूर्वकं मुत्सृजत" इति वदेत् । पश्चात् यजमानो गंध, पुष्प, यज्ञोपवीत, वस्त्रालंकारादिभिः पूजयित्वा मधुपर्काङ्गभोजनमृत्विजेदद्यात् ।

---

(१) विराजोदोहोऽसीति - - - - - - - - - - - - - - - - - -
इति तृतीयम् । न सर्वम् । न तृप्तिं गच्छेत् ।
आ० गृ० सू० १।२४।१६-१८ ।

(२) ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेदलाभेऽप्सु,
आ० गृ० सू० १।२४।१९ ।

(३) अथाऽऽचमनीयेनान्वाचामात्यमृतापिधानमसीति,
आ० गृ० सू० १।२४।२१ ।

(४) सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयम्,
आ० गृ० सू० १।२४।२२ ।

(५) आचान्तोदकाय गां वेदयन्ते, आ० गृ० सू० १।२४।२३ ।

(६) माता रुद्राणां दुहिता वसूनामिति जपित्वो
मुत्सृजतेत्युत्प्रब्रुवन्, आ० गृ० सू० १।२४।२५ ।

उभयोरपिमधुपर्कयोः समानता -

(१) प्रत्येकवस्तु प्रदानसमये त्रिवारं निवेदने सादृश्यम् ।

(२) पदार्थप्रदाने समानता अवलोक्यते ।

(३) पादप्रक्षालने ऐकमत्यमुभयोरपि सूत्रयोः ।

विरोधः -

उभयोरपि सूत्रयोर्विशेषतया वैविध्यं दृश्यते । यथा -

(१) बौधायनसूत्रे पात्रासादनार्थं विशेषस्थलं निर्दिष्टम् ।

(२) प्रत्येक क्रियासम्पादनसमये कूर्चस्य समीपे आवश्यकता सूत्रकारेण प्रतिपादिता ।

(३) शाखाभेदेन मंत्रोपि भिन्नः ।

(४) पिष्टान्न सिद्ध्यर्थं विशेषनिर्देशः ।

आश्वलायनानुसारेण वैविध्यम् -

(१) आश्वलायनसूत्रे आसनार्थं विष्टर प्रदानम् ।

(२) अनामिकाङ्गुष्ठाभ्यामालोडनं तथा समंत्रकं चतुर्दिक्षु ऊर्ध्वञ्च प्रोक्षणम् ।

(३) मंत्रोभिन्नः ।

विचार्यमाणे सति अल्पीयसि भागे वैविध्यमवलोक्यते, भेदोऽयं शाखाभेदेन भवति, अन्यथा सर्वं समानं दृश्यते ।

गोपितृयज्ञः[1] - वपनप्रकारः[2] -

गोपितृयज्ञे अध्वर्युः प्राङ्मुखस्यासीनस्य यजमानस्य दक्षिण-गोदानप्रदेशे ऊर्ध्वाग्राणि त्रीणि दर्भपिञ्जूलानि निधाय केशवपनादि नख निकृन्तनान्तं "वपेत्प्रवपे०" इति मन्त्रेण करोति । आच्छ्याप-उपस्पृश्य । यजमान उप्तदेशम् "यानिम इत ऊर्ध्वं लोमानि तानि मे स्वस्तये सन्तु" इति मन्त्रेणाभि मन्त्रयति । पत्न्या अपि मंत्रवर्जं केश-व्यतिरिक्तोपपक्षादि वापनम् ।

स्नानविधिः[3] -

यजमानमुदकुम्भेनाभिषिञ्चन् "इमामआपः०"[3] इति मन्त्रं वाचयति । तूष्णीं पत्नीं स्नापयति ।

---

(१) इदं प्रकरणं संहिता ब्राह्मण विभागे नास्ति । एतत्संबन्धीनि कानिचन विधि वाक्यानि "आधानाङ्गेष्टयः" प्रकरणे द्रष्टव्यानि । बौधायनसूत्रं वर्जयित्वान्येषु श्रौतसूत्रेष्वत्रस्थो विधिर्नोपदिष्टः ।

(२) "एतस्मिन्परिश्रिते प्राक्पावृत्तस्य केशान्तं करोति वपेप्रवपे

- - - - - - - - - - - - - - - - - - - -

स्वस्तये सन्तु, बौ० श्रौ० २।८ ।

(३) उदकुम्भेनाभ्यवनयन्वाचयतीमाम आपः शिवाः सन्तु दुष्कृतं प्रवहतु मे । शुद्धाः प्रयुञ्जीमहि क्रतूनिति, बौ० श्रौ० २।८ ।

स्नातौ[१] पत्नी यजमानौ प्राग्देशं गत्वा अहतं वासः परिधायाग्नि कृत्या जाते अथाध्वर्युर्यजमानमेकविंशत्या दर्भपिन्जूलैः त्रेधाविभक्तैः शिरोनाभिं गुल्फौ च पावयित्वा, उदपात्रमादाय पत्नीयजमानाभ्यां सह नैर्ऋतीं दिशं गत्वा, चतुष्पथे गोमयाद्युपलिप्ते परिस्तीर्य ब्रह्मासनार्थं दर्भानास्तीर्य उदपात्रे आत्मानमवेक्षमाणं यजमानं पत्न्यामपि आत्मानम् अवेक्षमाणायां ब्रह्मणि-तद्दिक्षणत आसीने "सिंहे[२] मे" इत्यनुवाकस्य वाचनं करोति । पश्चात् "अपेहि पाप्मन्[३]०" इत्यपि मंत्रस्य पाठः ।

अथैता आपोन्जलिनोप संहति, "सुमित्रान[४] आपओषधयः० संतु" इति मन्त्रेण नैर्ऋतीं दिशं प्रक्षिपति, "दुर्मित्रास्तस्मै०" इति मन्त्रेण पात्रं परास्याप उपस्पृश्य । अनवेक्षमाणा यथागतं सर्वेप्रदक्षिणमावृत्यागत्य हस्तपादौ प्रक्षाल्याचमनं कुर्युः । पश्चादध्वर्युः "पवमानः सुवर्जन०" इत्येत-मनुवाकं यजमानं वाचयन्नात्मानं पत्नीं च यजमानं चाद्भिः प्रत्यृचं

---

(१) स्नातः प्राङुत्सृप्याहतं वासः - - - - - - - - - - - -
पाप्मनो विनिधीन्वाचयति, बौ० श्रौ० २।८ ।

(२) सिंहे मे मनुव्याघ्रे मेऽन्तरामय इत्यान्तम् बौ० श्रौ० २।८ ।
सिंहेमेमनुव्याघ्रे अनुवाकः, बौ० श्रौ० २।५ ।

(३) "अपे हि पाप्मन् पुनरपनाशितो भवानः - - - - - - - - - -
- - - - - - - - - - - - - - - - - - द्विष्मस्तमुजहि,
बौ० श्रौ० २।५ ।

(४) अथाऽन्जलिनाऽपउपहन्ति सुमित्रान ओषधयः सन्तु इति,
बौ० श्रौ० २।५ ।

प्रोक्षति[1]।

संकल्प: -
--------

अथ यजमान: प्राचीनावीतिर्भूत्वा श्रीपरमेश्वरप्रीत्यर्थं गोपितृयज्ञं करिष्ये। इति संकल्प्य लौकिकमग्निमन्वाहार्यं पचने (दक्षिणाग्नौ) प्रणीय ज्वलयित्वा, जलेन परिषिच्य, परिस्तीर्य, पवित्रे कृत्वा, आज्यस्थालीं स्रुवं च सादयित्वा प्रोक्ष्याज्य संस्कृत्य, अन्वाहार्य पचनस्योत्तरत: सादयति।

पात्रासादनक्रम[2]: -
-------------

चतुरउदकुंभान्, औदुंबरीं दर्वीं, दक्षिणतोऽग्ने: सकृदाच्छिन्नं बर्हि:, एणकोपबर्हणे, आञ्जनाभ्यञ्जने, - पात्रान्तरे आज्यं, स्फ्यं, दशाव्यतिरिक्तं सूत्रं, प्रक्षालिते उलूखलमुसले, कृष्णाजिनं, शूर्पं, चरु-स्थालीं, मेक्षणं, आज्यस्थालीं, प्रोक्षणी सादयति।

---

(१) हस्तपादान् प्रक्षाल्य०। अद्भिर्मार्जयति।
बौ० श्रौ० २।५।

(२) अमात्यादिक्ष्मादीप्या - - - - - - - - - - - - - - - -
दक्षिणतोऽधिदेवनं करोति, बौ० श्रौ० २।८।

अक्षस्थापनरेखाकरणं च -
--------------------

एणकादीनां दक्षिणतोऽधि देवनस्थानं कृत्वोद्धृत्याप: प्रोक्ष्य एकोनपन्चाशत्संख्याकान् अक्षान् बिभितकान्निधाय तद्दक्षिणत: पिंड-निर्वापस्थाने स्फ्येन दक्षिणापवर्गां रेखां "अपहताअसुरारक्षांसि०" इति मन्त्रेण करोति। अथैनामद्भि: "उदीराणाइहसन्तुन:०" इति मन्त्रेण प्रोक्षति[१]।

उल्मुकग्रहणस्थापनबर्हिरासादनप्रकार: -
------------------------------

"य आददाना०" इति मंत्रेणोल्मुकमादत्ते। "अग्नि: पावक-सुदिनानि०" मंत्रेणोद्धृतं देशमभितपति। अथोल्मुकमग्निसमीपे पृथङ्० निदध्यात्। तस्मिन्नाज्यबिंदून् प्रावयति। "सकृदाच्छिन्नं०" इति मंत्रेणोद्धृतदेशे दक्षिणाग्रं बर्हिरास्तृणाति[२]।

पितृनाह्वानविधि: -
----------------

अथ बर्हिणी हस्ते उत्थाय प्राञ्जलि: प्रह्वीभूत्वा "उदीराणा-

---

(१) तदेकान्नपन्चाशतोक्षान्निवपति० अपहताअसुरा० उदीरता०।
बौ० श्रौ० २।८।

(२) अथोल्मुकमादत्ते - - - - - - - - - - - - - - - - - -
शंकरा इति, बौ० श्रौ० २।६।

इहसन्तुन:०" इत्यनेन मन्त्रेण पितॄनावाहयति । बर्हिर्निधाय पितॄणां पुरस्ताद्दक्षिणतो वा एणकोपबर्हणंदक्षिणोत्तरे निदधाति । "आसन शयनं चर्म०" मन्त्रेण एकेनोद कुम्भार्धेन तूष्णीं मार्जयति[१] ।

मधुपानक्षीरपानसक्तुपानप्रदानविधि: -
--------------------------------

अथैभ्य: पानान्याहारयति । मधुपानं, क्षीरपानं, सक्तुपान-मेषामन्यतमद्वा सक्तुपानमद्भि: पयसावा मिश्रितं भवति । एकैकञ्च पात्र-द्वये संभरणीयम् । तत्र षट्सु, द्वौ वा त्रितयमेकं वा ब्राह्मणेभ्य: अवशिष्टं त्रितयमेकं वा प्रत्येकं त्रिधा कृत्वा एतद्व: पितर: पानम्, एतद्व: पितामहा: पानम्, एतद्व: प्रपितामहा: पानमिति नवकृत्वा त्रिर्वा दद्यात् । पूर्वमार्जित-शेषेणोदकुम्भेन तूष्णीं मार्जयति[२] ।

अक्षै: सह द्यूतक्रीडाविधिद्वारा घृतौदननिर्माणविधि:[३] -
---------------------------------------------

अथ सादितानक्षान्परितश्चत्वार: - पिता पुत्रा: पूर्वादि प्रादक्षिण्येन यथाज्येष्ठमुपविशन्ति । अनुजा बहवश्चेदुत्तरदेशे । तत्र द्वादशाक्षान्पिताकर्षति एवं ज्येष्ठानुजौ ते त्रयो विजयिन: समसंख्या कर्षणात् । अवशिष्टांस्त्रयोदश कनीयाकर्षति । स पराजितो विषम-

---------------------------------------------

(१) अथपितॄनावाहयति - - - शंकरा इति बौ० श्रौ० २।६ ।

(२) अथैभ्य: पानान्याहरति - - - मार्जयति तूष्णीम्, बौ० श्रौ० २।६ ।

(३) तदक्षान् पर्युपविशन्ति - - द्यूता गौ: इत्युक्त्वोत्तिष्ठन्ति, बौ०श्रौ०२।६ ।

संख्या कर्षणात् । अथ यदि द्वौ पुत्रौ स्याताम्, तदा पिता चतुर्विंशत्यक्षान् द्विरावृत्त्या हरेत् । अथैकः पुत्रस्तदाजाया तृतीया अत्रापि द्विरायामः । पितापुत्रौ द्वादशाक्षान्कर्षति त्रयोदशाक्षान् भार्येति सा पराजिता । पुत्राभावे जायापती एवं प्रत्येकं द्विवारमाकर्षतः । अत्रापि भार्यैव पराजिता भवति । "कृतं कृत"मिति मन्त्रमुच्चारयन्तः - अक्षान् कर्षन्ति, "कृतं कृत"मिति पराजितो जपेद्वा । द्यूतावसाने सर्वेषां जप इत्यन्ये । एवं प्रकारः त्रिवारं कृत्वा "द्यूतओदनइत्युक्तोत्तिष्ठन्ति । यदा पराजितावशिष्टेषु पुनः पुनर्द्यूतप्रसङ्गेनावशिष्टानामपि पराजयः ।

द्यूतमोदनस्य निर्वापप्रोक्षणविधिः -[1]

पितैव विजयिजितमोदनं निर्वपति, "पितृभ्यस्त्वा, पितामहेभ्यस्त्वा, प्रपितामहेभ्यस्त्वा, जुष्टमुपाकरोमीति" मन्त्रेण ।

प्रोक्षणम्[2] -

"पितृभ्यस्त्वा । पितामहेभ्यस्त्वा । प्रपितामहेभ्यस्त्वा । जुष्टं प्रोक्षामी"ति मन्त्रेण सकृदेव प्रोक्षति । निर्वापप्रोक्षणेतूष्णीं वा ।

---

(१) "पितृभ्यस्त्वा०" बौ० श्रौ० २।६ ।

(२) बौ० श्रौ० २।६ । अथैनामद्भिः प्रोक्षति - - - - - - - - - - - - - - - - - - - - - - - - - - प्रोक्षामिति ।

घृतमोदनमधिश्रयणप्रकार: -
-----------------------

पश्चात् कृष्णाजिने उलूखलमुसले निधाय अवहत्य, सुफलीकृतान् प्रक्षाल्य तण्डुलोदकं पात्रान्तरे निधाय चरुमाज्यं च मधिश्रयति ।

पर्यग्निकरणमुदगुद्वासनं च प्रकार:[1] -
-----------------------------

सिद्धे चरुमाज्यंमुभयं पर्यग्नीकृत्य चरोरुपरिष्टात् प्रभूतमाज्यमानीय, स्रुवं दर्वीं च संमृज्य - स्रुवेण चरुमभिघार्य-मुदगुद्वासयति ।

वपाहोम:[2] -
-----------

वपाहोमार्थं चरोरेकपिण्डमुद्धृत्य "या: प्राची: संभवं" इत्यादि पन्चमन्त्रेण प्रतिमन्त्रं स्रुवाहुतीर्जुहोति । पश्चात् वपाहोमार्थं त्रेधा विभज्य उपस्तरणमभिघारणवर्जमौदुम्बर्यादि व्याँर्जुहोति[3] । तत्र मंत्र:[4] -

सोमाय पितृमते शुष्मिणे जुहोमि हवि: ।

---

(१) अपि वा घृतमोदनं पक्त्वा - - - - - - - - - - - - - - - -
तण्डुला इति, बौ० श्रौ० २।७ ।

(२) शृतायां वपायां पन्च स्रुवाहुतीर्जुहोति "या: प्राची: - - - - - - - - - - - - - - बौ० श्रौ० २।६-१० ।

(३) "त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोति" बौ० श्रौ० २।१० ।

(४) बौ० श्रौ० २।१० । सोमायपितृमते० ।

वाजिन्निदं जुषस्वनः स्वजाहव्यं देवेभ्यः पितृभ्यः
स्वधानमः स्वाहा ।। १ ।। सोमाय पितृमत इदं
नममेति त्यागः कुर्यात् । अंगिरस्वंतमूतये यमं पितृमं त
माहुवो वैवस्वते दमद्विनः । स्वाजा हव्यं देवेभ्यः
पितृभ्यः स्वधानमः स्वाहा ।। २ ।। यमायां भिरस्वते
पितृमत इदं नममेति त्यागं॰ कुर्यात् । यदग्ने कव्य-
वाहन पितृन्यक्षृतावृधः । प्रदेवेभ्योवहा हव्यं
पितृभ्यश्च स्वजाहव्यं देवेभ्यः पितृभ्यः स्वधानमः
स्वाहा ।। ३ ।। अग्नये कव्यवाहनायेदं नममेति
त्यागं॰ कुर्यात् ।

एवं प्रकारेण विभागकृतभागस्याहुति प्रदानानन्तरं तूष्णीं दर्वीमग्नौ स्थापयति [1] ।

पिण्डदानप्रकारः -
--------------

ततः पिंडान् कृत्वा, द्वितीयस्योदकुंभस्यार्द्रेन तेषु त्रिषु स्थानेषु तूष्णीं मार्जयित्वा पिंडानुपस्तीर्णाभिघारितान् ददाति [2] ।

पिंडदानमन्त्राः -
--------------

एतत्ते पिता अमुकशर्मन् ये चत्वा मनु यांश्चत्वमत्रान्वस्येषाते

---

(१) "तूष्णीं दर्वीमभ्याधाय", बौ० श्रौ० २।१० ।

(२) पिंडानामावृततान्यवदानानि ददाति । बौ० श्रौ० २।१० ।

ततस्वधाक्षितिर्यावती पृथिवी तावती ते मात्रा तावतीं त मात्रां भूतां ददामि पृथिव्यामितमसि तता यमाक्षीष्ठाः । इति मन्त्रेण प्रथमंपिण्डं ददाति । पित्रे इमं पिण्डं नममेति त्यागः । एवं सर्वत्र यथालिङ्गानुसारेण त्यागः कुर्यात् । एतत्ते पितामहा अमुकशर्मन् ये चत्वामनु यांश्चत्वमत्रान्वस्यैषाते पितामह स्वधाक्षितिर्यावदंतरिक्षं तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददाम्यन्तरिक्षेण मितमसि पितामहा यमाक्षीष्ठा इति मन्त्रेण द्वितीयं पिण्डं ददाति । एतत्ते प्रपितामहा अमुक शर्मन् ये चत्वामनु यांश्चत्व मात्रान्वस्यैषाते प्रपितामह स्वधाक्षितिर्यावती द्यौस्तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि दिवा मितमसिप्रपितामहायमाक्षीष्ठा" इति मन्त्रेण तृतीयं पिण्डं ददाति ।[१]

पिण्डोपरिमार्जनविधिः[२] -

---

ततः "अत्र पितरो यथामार्ग मंदध्वं" मिति उक्त्वा पश्चात् द्वितयस्योदकुंभस्य शेषण पूर्ववत् मार्जनं कुर्यात् । तृतीयोदकुंभजलं तण्डुलप्रक्षालन जलेनालोऽय भूमौपि उसमीपे - "यानिरक्षास्य सृक् भागानि ये[३]

---

(१) बौ० श्रौ० २।१० ।

(२) "अत्र पितरो - - - - - - - - - - - - - - - - - - - - तूष्णीं", बौ० श्रौ० २।१० ।

(३) "अथर्म्यागामुपरेत्य लोहितमुपप्रवर्तयति" यानि रक्षांसि० ३ । बौ० श्रौ० २।१० ।

चापि पितरो हरन्तां तृप्यन्तु रुधिरस्यते येन: पतिता गर्भा असृग् भाग उपासते तेभ्य: स्वजा स्वधानमस्तृप्णुवन्तु मदन्तु च ।। १ ।। य आमा ये च पक्वा ये च दुष्टा: पतन्तिन: । तेभ्य: स्वजा स्वधा नमस्तृण्णुवन्तु मदन्तु च ।। २ ।। ये कुमारा या स्त्रियो ये विज्ञाता: पततिन: । तेभ्य: स्वजास्वधानमस्तृण्णुवन्तु मदन्तु च ।। ३ ।। इति मन्त्रोच्चारण-पूर्वकं प्रवाहयेत् ।

आञ्जनाभ्यञ्जनप्रदानम् [1] -
------------------

तत: पिंड समीपमागत्य "आंजतां पितर: । आन्जतां पितामहा: । आञ्जतां प्रपितामहा: । इति मन्त्रेण पिण्डोपरि आञ्जनं ददाति । पश्चात् अभ्यन्जनरुपघृतं पिंडोपरि अनेनैव मंत्रेण ददाति । तत्र अभ्यन्जताभित्यूह: ।

वासप्रदानप्रकार: [2] -
---------------

तत: "एतानिव: पितरो वासा स्येतानिव: पितामहा वासा स्येतानिव: प्रपितामहा: इति मन्त्रपूर्वकं वासांसि त्रीणि सूत्राणिच्छित्वा ददाति । [2]

---

(१) "आगत्याऽऽञ्जनं ददाति", बौ० श्रौ० २।१० ।
(२) "अथ वासांसि ददाति" । बौ० श्रौ० २।१० ।

नमस्कारप्रदानप्रकार: -

पश्चात् "नमो व: पितरो०" इति मन्त्रसमूहेन ब षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते ।[1]

याचनाप्रकार: -

अथ "वीरं मे पितरो०" पुत्रं याचते । याचनाप्रकारमन्त्रे पितामहादच, प्रपितामहादचेत्याधनुगं ग: कर्तव्य: ।[2]

पितृनुत्थापनविधि: -[3]

तत: "उत्तिष्ठतपितर: प्रेतशूरा०"[4] इति मंत्रेण पितृनुत्थापयति । "यं तु पितरो०" पाठेन एनान् पितृन् स्वस्थानं नयन् मनसा, मनसानुगच्छति । अथ पितृननुगतं मन: "मनोन्वा०"[5] तिसृभि: ऋग्भिराहूयति ।

---

(१) अथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते, बौ० श्रौ० २।१० ।

(२) "अथ वीरं याचते" बौ० श्रौ० २।१० ।

(३) अथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वते मनोन्वाहुवामह, आन स्तु मन: पुन: पुनर्न: पितरो मन इति । बौ० श्रौ० २।१० ।

(४) अत्रैतदहतं वास एवं विदे ब्राह्मणाय - - - - - - - - - - - - - अमात्य होमांश्च जुहोति, बौ० श्रौ० २।१०-११ ।

(५) मनोन्वाहुवामहे० तै० सं० १।८।५ ।

स्नानविधि: -
------------

अथ यजमान: स्वपरिहितमहतं वासोगोपितृयज्ञविदे ब्राह्मणाय दत्त्वाऽन्यत्परित्यागार्हं वास: परिधाय, आचम्य, दक्षिणां दिशं गत्वा चतुर्थेनोदकुम्भेन स्नायात् । तत्र मन्त्रा: -

(१) यासुगन्धारसावर्णा० ।

(२) याऊर्जमभि० ।

(३) यासामिमिश्रयो० ।

(४) यासां निष्क्रमणो० ।

(५) या: प्राग्चीया० ।

आचम्य, तदपिवास: परित्यज्य क्षौमं वास:, परिधायाचम्य प्राजापत्यर्चा यज्ञोपवीत्यग्ने: समीपमुपगच्छति । पूर्वं पृथक् उल्मुकमग्नौ "अभूद्दूतो हविषो०" इत्यनेन मन्त्रेण प्रक्षिपति । ब्राह्मणेभ्य: पिंडानोदनं च ददाति । अथाध्वर्यु-र्यजमानो वा तस्मिन्नेवाग्नौ जयान् - अभ्यातान् - राष्ट्रभृत् - अमात्य-होमांश्च जुहोति ।

देवयजनयाञ्चाप्रकार:[१] -
----------------

देवयजनयाञ्चाप्रकारे आदौ यजमान: - अध्वर्यो: "देवयजनं मे

----------------------------------------

(१) अथर्त्विजो देवयजनं याचते, बौ० श्रौ० २।२ ।

देहि[1] इति अध्वर्युं याचते । ततोऽध्वर्युः 'आदित्यो देव इत्यादि ददात्वि-
त्यन्तं मन्त्रं पठति । यजमानः प्रणवपूर्वकं 'ओंतथे'ति वदति ।

ब्रह्मा -[2]

तत: 'ब्रह्मन् देवयजनं मे देहि' इति ब्रह्मणम् । ततो ब्रह्मा
'चन्द्रमा देव इत्यादि ददात्वित्यन्तं मन्त्रं पठति । यजमानः पूर्ववत्
वदति ।

होता -[3]

तदनन्तरं 'होतर्देवयजनं मे देहि' इति होतारम् । ततो
होता 'अग्निर्देवेत्यादि ददात्वित्यन्तं मन्त्रं पठति । यजमानः पूर्ववत् ।

सदस्यम् -

तत: 'सदस्य देवयजनं मे देहि' इति सदस्यम् । पश्चात् सदस्यः

---

(१) अध्वर्यो देवयजनं मे देही - - - - - - - - - - - - - - -
प्रतिवचनम्, बौ० श्रौ० २।२ ।

(२) ब्रह्मन्देवयजनं - - - - - - - - - - - - - - - - - - -
ओंतथेति प्रतिवचनम्, बौ० श्रौ० २।२ ।

(३) होतर्देवयजनं मे देहीति - - - - - - - - - - - - - -
ओं तथेति प्रतिवचनम्, बौ० श्रौ० २।२ ।

"आकाशो देव" इत्यादि मन्त्रं पठति । यजमानः पूर्ववदाह[1] ।

उद्गाता[2] -

ततः "उद्गातर्देवयजनं मे देहि" इति उद्गातारम् । ततः उद्गाता "पर्जन्यो देव" इत्यादि मन्त्रं पठति । यजमानः पूर्ववत्

उद्धननावोक्षणसंस्कारः -

तदनन्तरं अध्वर्याः दयो गार्हपत्यस्य पश्चादुपविश्य "इडेत्यादि[3]-मदन्त्वित्यन्तं" शान्तिमन्त्रं जपति । अध्वर्युः[4] स्फ्यं गृहीत्वा उदग्देशेन गत्वा यजमान पत्नीभ्यां सह वेद्युत्करयोर्मध्येन (संचरेण) प्रविश्य, तिष्ठन् यजमानान्वारब्धः । ततः अध्वर्युः गार्हपत्यायतनं "उद्धन्यमान०[5]" इत्यृचा स्फ्येन उद्धन्ति । ततः "शंनोदेवीरि[6]" त्यृचा जलेनावोक्षति । एवमेव प्रकारेण

---

(१) सदस्य देवयजनं मे देहीति ------------ प्रतिवचनम्, बौ० श्रौ० २।२ ।

(२) उद्गातर्देवयजनं मे देहीत्युद्गातारं ------------ ओतथेति प्रतिवचनम्, बौ० श्रौ० २।२ ।

(३) इडादेवहूर्मनुर्यज्ञनीः --------------- मदन्तु तै० सं० ३।३।२ ।

(४) स्फ्यमादायान्तरेण० ----------- उद्धन्यमान शंयोरभिस्रवन्तुनः, बौ० श्रौ० २।६ ।

(५) उद्धन्यमान्य०, तै० ब्रा० १।२।१ ।

(६) शंनो देवी०, तै० ब्रा० १।२।१ ।

दक्षिणाग्न्यायतनं, आहवनीयायतनं च संस्करोति[1] ।

संभारणस्थापनम् -

आधानार्थं सम्पादितस्य संभारस्य द्वौ भागौ स्तः । पार्थिवसंभारः, वानस्पत्य संभारश्चेति ।

(१) पार्थिवसंभाराः[2] -

(१) सिकताः । (२) ऊषरमृत्तिका । (३) मूषकबिल-मृत्तिका । (४) वल्मीकमृत्तिका (५) महाहृदमृत्तिका । (६) अरण्य-वराहोत्खातमृत्तिका । (७) पद्मिनीपत्रम् । (८) शर्कराः । (९) षट्हिरण्य शकलानि ।

(२) वानस्पत्यसंभाराः[3] -

(१) अश्वत्थः । (२) उदुम्बरः । (३) पलाशः ।

---

(१) एवमेवान्वाहार्यपचनस्यायतन - - - - - - - - - - - - - आहवनीयस्य, बौ० श्रौ० २।६ ।
(२) अग्नीनाधास्य मानो भवति स उपकल्पयत उषाश्च - - - - - - - - - - अष्टौ पार्थिवाः, बौ० श्रौ० २।१२ ।
(३) अथ वानस्पत्या अश्वत्थश्चोदुम्बरश्च - - - - - - - - - - - त्रीणि राजतान्य, बौ० श्रौ० २।१२ ।

(४) शमी । (५) विकङ्कत: । (६) अशनिहतवृक्ष शकलानि । (७) अरण्यौ मुन्जकुलाय: । (८) अश्वत्थस्य आर्द्रा: सप्रग्रा: - सप्ररोहा: प्रादेशमात्रा:, अशुष्काग्रास्तिस्र: समिध: । (९) त्रीणि सुवर्ण शकलानि, (१०) त्रीणिरजत शकलानि ।

संभार संभरणम्[1] -

---

एवं संभारान्त्संपाद्य, तत: अध्वर्यु: संभारान् वेद्यां प्रागग्रान्स्थापयति । तन्मध्ये प्रथमत: "वैश्वानरस्य[2] रूप०" मित्यृचा सिकतां स्थापयति । तत: "यदिदं[3] दिव०" इत्यृचा ऊषरमृत्तिकां, "ऊती-कुर्वाणा०[4]" इत्यृचा मूषक बिलमृत्तिकां, "ऊर्जं[5] पृथिव्या०" इत्यृचा वल्मीकमृत्तिकां, "प्रजापति सृष्टाना०[6]" मित्यृचा महाह्रदमृत्तिकां, "यत्पर्य-[7]पश्यदित्यृचा पद्मिनीपत्रम् । "याभिरहं[8]" दित्यृचा शर्करा:, "अश्वो[9]रूप०"

---

(१) एकैकं संभारमेकैकेन यजुषा संभरति, बौ० श्रौ० २।६ ।
(२) वैश्वानरस्य रूपं - - सिकता: संभृत्य निदधाति, बौ०श्रौ० २।६ ।
(३) यदिदं दिवो०, तै० ब्रा० १।२।१ ।
(४) ऊतीकुर्वाणो०, तै० ब्रा० १।२।१ ।
(५) ऊर्जं पृथिव्या०, तै० ब्रा० १।२।१ ।
(६) प्रजापतिसृष्टानां०, तै० ब्रा० १।२।१ ।
(७) यत्पर्यपश्यत्०, तै० ब्रा० १।२।१ ।
(८) याभिरहं० तै० ब्रा० १।२।१ ।
(९) अश्वो रूपं०, तै० ब्रा० १।२।१ ।

मित्यृचा अश्वत्थम्, "ऊर्जः[1] पृथिव्या०" इत्यृचा उदुम्बरं, "गायत्रियाह्रिय-[2]
माणस्ये"ति चक्रुग्भ्यां पलाशम्, "यत्सृष्टस्ये[3]" त्यृचा विकङ्०कतम्,
"यत्तां[4] तस्ये" त्यृचा अशनिहतम्, "चित्रियादश्वत्था०[5]" दित्यृचा अश्वत्थस्य
तिस्रः समिधः - "याते अग्ने[6]" इति यजुषा मुन्जकुलायम्, "अश्वत्थाद्व्येति[7]"
"यो अश्वत्थ[8]" इति च द्वाभ्यामृग्भ्यां अरण्यौ, ततो "यं त्वासममरग्नि[9]"
त्यृचा संभृतान् संभारान् पुनः पुनः संभरति । ततः अरणी, मुन्जकुलाय,
चित्रियादश्वत्थ समिद्धिरण्य रजत शकलव्यतिरिक्तानां संभाराणां त्रेधा
विभज्य स्थापनं क्रियते । एतत्सर्वं कर्मसंभारसंभरण मित्युच्यते ।

सर्वौषधिहोमप्रकारः - कालः[10]

---

यस्मिन्काले सूर्यकिरणा भूमिं त्यक्त्वा वृक्षारूढा भवन्ति ।

---

(१) ऊर्जः पृथिव्या०, तै० ब्रा० १।२।१९ ।
(२) गायत्रियाह्रियमाणस्य० तै० ब्रा० १।२ ।
(३) ययतोसृष्टस्य०, तै० ब्रा० १।२।१ ।
(४) यत्तातान्तस्य०, तै० ब्रा० १।२।१ ।
(५) चित्रियादश्वत्था०, तै० ब्रा० १।२।१ ।
(६) यातेअग्न०, तै० ब्रा० १।२।१ ।
(७) अश्वत्थादव्यवाहाद्धि०, तै० ब्रा० १।२।१ ।
(८) योअश्वत्थ०, तै० ब्रा० १।२।१ ।
(९) यंत्वासमभरन्जातवेदः०, तै० ब्रा० १।२।१ ।
(१०) अथाधिवृक्षसूर्ये याचति सर्वौषधम्, बौ० श्रौ० २।१३ ।

तस्मिन्नेव काले सर्वौषधि होमः सम्पादनीयः । सम्पादनक्रमः - तस्मिन्नेव काले - (१) तिल, (२) माष, (३) व्रीही, (४) यव, (५) प्रियंगवोऽणवो, (६) गोधूमाः, कुलित्थावा समा इति ग्राम्याः । श्यामाका, नीवारा, जर्तिला, गवीधुका, गार्मुला, वेणुयवाकुर विन्दाः सप्तमा इत्यारण्याश्चेति । सर्वं समुच्चित्य प्रक्षालितं सर्वौषधमाज्यस्थालीं सध्रुवां, स्रुचं, बर्हिर्विषी दीप्यान्ककलानित्यादाय वाससा संप्रच्छन्नाः, अध्वर्युः, ब्रह्मा, पत्नी, यजमानाः, औपासनाग्निं प्रति प्रव्रजन्ति[1] । ततः काष्ठान्यौपासनाग्नौ प्रक्षिप्य, अग्निमादीप्य, दर्भैः परिस्तीर्य, गृह्योक्त विधिना पात्रासादनादि आज्यसंस्कारान्तं कृत्वा - अध्वर्युर्यजमानान्जलावुपस्तीर्य, तिलमाषादि ओप्य, अभिघारयति[2] । [3]अग्नये सर्वौषधाय पुष्ट्यै प्रजननाय-स्वाहा इति मन्त्रेण जुहोति । अग्नये सर्वौषधाय पुष्ट्यै प्रजननायेदं नममेति त्यागः कर्तव्यः इति । तस्मिन्नेवाग्नौ जयानभ्यातान् राष्ट्रभृतोऽमात्य होमान्जुहोति ।

प्राजापत्यहोमः -

स्रुचि चतुर्गृहीतं गृहीत्वा समिधमादाय, पर्युक्ष्य 'प्रजापते०'

---

(१) सर्वौषधमाज्यस्थालीं - - - - - - - - - - - - - - - समादाय, बौ० श्रौ० २।१३ ।

(२) अन्जलिनोपस्तीर्णाभिघारितं सर्वौषधं जुहोति, बौ० श्रौ० २।१३ ।

(३) अग्नये सर्वौषधाय०, बौ० श्रौ० २।१३ ।

इत्यृचा जुहोति । प्रजापतयइदं नममेति त्यागं कुर्यात्[1] ।

आनुख्याहोम:[3] -
-------------

स्रुचि मध्ये स्रुवेणाज्यं चतुर्गृहीतं गृहीत्वा "अन्वाग्निरुषसा"[4]
मित्यृचा जुहोति । अग्नये जातवेदस इदं नममेति त्यागः[2] ।

अंगाराणां स्थापनम् - अङ्गाराणां ग्रहणम् -
-----------------------------------

यजमानः शरावे औपासनाग्नेः सर्वानङ्गारान् - (अर्धाधानश्चे-
त्तर्हि अर्धानङ्गारान्) "आयुषे वो गृहणामि" - "तेजसे वो गृह्णामि"
"तपसेवो गृह्णामि" "वीर्यायवो गृह्णामि" "ब्रह्मवर्चसेवोगृह्णामि" मन्त्र-
समूहेन ग्रहणं करोति[5] ।

---------------------------------------------

(१) अथ स्रुचि चतुर्गृहीतं - - - - - - - - - - - - - - - -
प्रजापतेनत्वदेता न्यन्य, इति, बौ० श्रौ० २।१३ ।

(२) प्रजापतेनत्वदेतान्यन्य०, तै०सं० २।२।१२ ।

(३) अपरं चतुर्गृहीतं गृहीत्वानुख्यां जुहोति, बौ० श्रौ० २।१३ ।

(४) अन्वग्निरुषसा०, बौ० श्रौ० २।१३ , तै० सं० ४।१।२ ।

(५) अथैतानङ्गारान्सते वा शरावे वा यजमानोगृह्णात्यायुषे वो
गृह्णामि - - - - - - - - - - - - - - - - - - - - - -
ब्रह्मवर्चसायवो गृह्णामिति, बौ० श्रौ० २।१३ ।

अंगाराणां दानम् -

पश्चात् यजमानः 'आयुर्मामा विशं त्विति' मन्त्रेणाङ्गारानादयोपतिष्ठति। तानङ्गारान् अध्वर्युर्ददाति[1]।

अङ्गाराणां स्थापनम् -

ततः अध्वर्युणान्वारब्धे यजमाने सर्वे यथागतं गच्छन्ति, अध्वर्युरङ्गारान् गार्हपत्ये निदधाति[2]।

पात्रासादनम् -

गार्हपत्यं परिस्तीर्योत्तरतः दर्भेषु पात्राणि - आसादयति[3]।

पात्रासादनक्रमः -

(१) प्रोक्षणीम्, (२) आज्यस्थालीम्, (३) चरुस्थालीम्, (४) मेक्षणम्, (५) उद्धरणपात्रीम्, (६) स्रुवम्, (७) निर्वपण-

---

(१) अथैनानादायोपोतिष्ठत्यायुर्मामाविशतु - - - - - - - - - -
लान्ध वर्यवे सम्प्रदायो दायन्ति, बौ० श्रौ० २।१३ ।

(२) अन्वारब्धे यजमान एतेनैव - - - - - - - - - - - - - - -
न्युप्योप समादधाति, बौ० श्रौ० २।१३ ।

(३) परिस्तृणन्ति, बौ० श्रौ० २।१३ ।

स्थालीम् । (८) आनडुहं चर्म, (६) उलूखलमुसले, (१०) शूर्पम्, (११) चित्रियाश्वत्थसमिधस्तिस्रः ।

ब्रह्मयजमानस्य स्थाननिर्देशः -

गार्हपत्याद्दक्षिणतः ब्रह्मा समन्त्रकं निरसनोपवेशने करोति, यजमानश्चोप विशति[१] ।

पात्राणां प्रोक्षणम् -

अध्वर्युः प्रोक्षणार्थं पवित्रं कृत्वा, प्रोक्षणीः संस्कृत्य उत्तानानि पात्राणि कृत्वा प्रोक्षति ।

ब्रह्मौदननिर्वापः - ह ब्रह्मौदनहोमः -

सुलोहितचर्मानडुहं प्राचीनग्रीवमुत्तरलोमम् गार्हपत्यस्य पश्चादास्तीर्य सपवित्रया निर्वापणस्थालीं गृहीत्वा, तस्मिन् चर्मणि पृष्ठे (ग्रीवायां वा) स्थाप्य, "ब्रह्मणेजुष्टं निर्वपामि" इति मन्त्रावृत्त्या चतुष्कृतो व्रीहीन्निर्वपति[२] ।

---

(१) दक्षिणत उपविशतो ब्रह्मा च यजमानश्च, बौ० श्रौ० २।१३ ।
(२) निर्वापप्रकारे शालीकीमतम् - तूष्णीकमिति, अथैतल्लोहितं चर्माऽऽनडुहं जघनेनाऽग्निं प्राचीनग्रीवमुत्तरलोममुपस्तृणाति - - - - - - - - - - - - - - - - - - - - - - - तूष्णीं वा ।
(०) चर्मविषये शालिकीमतम् - अध्यरोहितंस्यादिति ।

केचित्तूष्णीं सम्पादयति ।

ब्रह्मौदनाभिमर्शनम् -
---------------

अध्वर्युः निरुप्तस्य द्रव्यस्य "आकूत्यैत्वे" त्यादि मन्त्रेणाभिमर्शनं करोति[1] ।

ब्रह्मौदनप्रोक्षणम् -
--------------

शूर्पस्थित व्रीहीन् "ब्रह्मणे जुष्टं प्रोक्षामि" इति मन्त्रयावृत्त्या चतुर्वारं प्रोक्षति[2] ।

अवहननम्[3] -
--------

लोहितचर्माभ्युक्ष्य निरस्यति । पश्चात् चर्मणि - उलूखलं निधाय, तस्मिन् व्रीहीन्नोप्य मुसलेन कण्डनं करोति ।

---

(१) अथ निरुप्तानभिमृशति "आकूत्यै त्वा कामायत्वा समृधेत्वा" इति, बौ० श्रौ० २।१३ ।

(२) अथतान्व्रीहीञ्छूर्पे समुप्याद्भिरभ्युक्ष्य चर्मौ दूहति, बौ० श्रौ० २।१३ ।

(३) अथतस्मिन्नेव चर्मण्युलूखलमुसले निधायाऽवहन्ति, बौ० श्रौ० २।१३ ।

ब्रह्मौदनाधिश्रयणम्[1] -

ब्रह्मौदनतण्डुलानां त्रिः फलीकरणम् । त्रिः प्रक्षालनम् । ततः चरुस्थाल्यां पवित्रं निधाय, निर्वपण पात्रेण निर्वापवदुदकमानयति । स्थालीमग्नावधिश्रित्य, तिरः पवित्रन्निधाय, तण्डुलानावपति । आज्यं आज्यस्थाल्यां निरुप्याधिश्रयति ।

पर्यग्निकरणम्[2] -

ब्रह्मौदनमाज्यं च उभयोः पर्यग्निकरणं कृत्वा, मेक्षणं स्रुवं च सम्मृज्य, चरुं संस्कृताज्येनाभिघार्योदगुद्वासयति । शृते ब्रह्मौदने परिकर्मिणः गवागमनकाले "शृतो ब्रह्मौदन" इत्याहुः । अध्वर्य्वादयः सर्वे सहागत्य उत्तरतउपविशन्ति । ब्रह्मा दर्भनिरसनपूर्वकमुपवेशनं करोति[3] ।

यजमानः ब्रह्मौदनमुद्धरणपात्र्यामुपस्तीर्य, तस्यां स्थालीमचालयन् उद्धृत्य, ओदनमध्ये गर्तं कृत्वा प्रभूतमाज्यमानीय[4], मेक्षणेनावदाय "प्रवेधसेकवये०"[5]

---

(१) अथ तेनैव पात्रेण - - - - - - - - - - - - - - - - -
स समोदकः संपद्यते, बौ० श्रौ० २।१३ ।

(२) तं य एव कश्च कुशलः परिन्यैन श्रपयित्वाऽभिघार्योदन्चमुद्वासयति, बौ० श्रौ० २।१४ ।

(३) आयति गव ऋत्विग्भ्यः प्राहुः । उपसंगच्छन्त एनमेत ऋत्विजः, बौ० श्रौ० २।१४ ।

------अग्रिमपृष्ठेऽपि

इति मन्त्रेण जुहोति । ततोऽध्वर्युवादीनुत्तरतोऽनुदिशं परस्पराभिमुखमुपविष्टान् आनुपूर्व्येणाचमय्य, ओदनसहितामुद्धरणपात्रीं - तेषां मध्यभूमिमुपस्पृशन्नाकर्णाग्निव प्रवेशयति[6] । "यज्ञोमोपनमत्विति"[1] मन्त्रेण ओदनं चतुर्धा कृत्वा, पृथक्-पृथक् पात्रेषु परिवेषयति । ते ऋत्विजः ओदनमध्यात् ग्रासत्रयं प्राश्य "राद्धस्ते ब्रह्मौदन" इति यजमानं प्रशंसन्ति[2] ।

दक्षादानम् -
----------

यजमानः ऋत्विग्भ्यः साण्डवत्सतरीं[3] ददाति । ऋत्विजो भुक्त्वाचाम्य, वत्सतरं प्रतिगृह्णन्ति । अन्यः कश्चित् ब्राह्मणः उत्तरत आसीनः, चरुस्थाल्यां संलग्नं क्षामकायमोदनं[4] प्राश्नाति । यजमानस्तस्मै किञ्चित् द्रव्यं[5] ददाति ।

-----------------------------------------

पूर्वपृष्ठस्याग्रे----------

(१) अथैतां पात्रीं निर्णिज्योपस्तीर्य -------------
प्रभूतमाज्यमानीय, बौ० श्रौ० २।१४ ।

(५) अथैतस्यै ओदनस्योपघातं० प्रवेषसेकवर्येतेध्याय --------
यजेहेध्यान् स्वाहा, प्रवेषसे० तै० ब्रा० १।२।१,बौ० श्रौ० २।१४ ।

(६) अथैतांश्चतुरआर्षेय -------------------
भूमिं स्पृशन्ननुच्छिन्दन्निवोपोहति, बौ० श्रौ० २।१४ ।

(१) यज्ञोमोपनमतु बौधायनस्य मतम् । तूष्णीं वा शालीकीमतम् ।

(२) त्रिः प्राश्य प्रश सन्ति राद्धस्ते ब्रह्मौदनः इति, बौ० श्रौ० २।१४ ।

(३) तेभ्यः साण्डं वत्सतरं ददति, बौ० श्रौ० २ २।१४ ।

(४) अथैनउत्तरत आसीनो ब्राह्मणः क्षामकार्णं प्राश्नाति,बौ० श्रौ० २।१४ ।

(५) तस्मै यदस्योपकल्पते तद्ददाति, बौ० श्रौ० २।१४ ।

## अरणीग्रहणम् -

संस्कृताज्य शेषमुदरणपात्र्यामुपस्तिाज्ये समानीय, प्रसिद्धा-श्वत्थस्य सिद्ध: समिधोऽभ्यज्य, "समिधाग्निं[1]" मित्यृचा अग्नौ जुहोति । "उपत्वाग्न०[2]" इत्यृचा द्वितीयाम् । "तं त्वा[3] समिद्भि:"० इत्यृचा तृतीयाम् । वत्सतरीं[4] ददाति । सर्वत्र समित्प्रदानानन्तरं अग्नय इदं नममेति त्याग: कर्तव्य: । अथा[5]ध्वर्युरपरात्रे आहुत्य, यजमानस्य हस्ताद्दक्षिणेनोत्तरारणिं सव्येनाधरारणिं गृहीत्वा, "जातवेदोभुवनस्यरेत०" इत्यृग्भ्यां अरण्यो: ब्रह्मौदनाग्निं समारोपयति ।

## आयतनोपलेपनम् -

तत: ब्रह्मौदनाग्निं शरावे निधाय, गार्हपत्यात् दक्षिणत: परिक्रमिण: तं अग्निं[6] ज्वलयन्त आसते । यदास्माद्दक्षिणाग्ने: आधानं

---

(१) समिधाग्निं दुवस्यत० बौ० श्रौ० २।१४, तै० ब्रा० १।२।१ ।
(२) उपत्वाग्न० बौ० श्रौ० २।१४, तै० ब्रा० १।२।१ ।
(३) तंत्वासमिद्भिरंगिरो० बौ० श्रौ० २।१४, तै० ब्रा० १।२।१ ।
(४) समित्सु वत्सतरीं ददातीति, बौ० श्रौ० २।१४ ।
(५) अथाऽध्वर्युरपरात्र आहुत्याऽरणी निष्टपति । जातवेदो भुवनस्य - - - - - - नौ वर्धयारयिम्, बौ० श्रौ० २।१६ ।
(६) अथैतमग्निं सते समुप्य दक्षिणतो ज्वलयन्त आसते, बौ० श्रौ० २।१६ ।

तदानीमेवोपशामयेत । ततोऽन्यायतनानि "अध्वर्यो" त्यृचा पठनपूर्वकं गोमयेन[1] आयतनं लेपयति । (अयं विधिः पद्धतिकारेणेन तूष्णीमेव कुर्यादित्युक्तम्) ।

आयतने संभार निधानम्[0] -

सपत्नीकेन यजमानेन समिदाधानान्तमन्वारब्धः । संभाराणां तृतीयभागमादाय गार्हपत्यायतने "यत्पृथिव्या०" इत्यृचा निदधाति[2] । सपत्नीको यजमानः अध्वर्युमन्वारब्धः, "यददश्चन्द्र०" मिति मन्त्रेणाभिमन्त्रयते । "दिवस्त्वावीर्येण०" ति मन्त्रेण संभारानग्नित्वेन निश्चिनोति[3] । "संवः सृजामी" त्यृग्भ्यां संभारान्मिश्रयति[4] । ततः कल्पेतां द्यावापृथिवी०" इति यजुषा संभारान् समान्करोति[5] । पश्चात् अध्वर्युः यजमानाय अरणी-

---

(०) सिकतानिवपति० ऊषान्निवपति० तै० ब्रा० १।१।३।६ ।

(१) अथैतान्यग्न्यायतनानि शकृत्पिण्डेन परिलेपयति, बौ० श्रौ० २।१६ ।

(२) अथ तृतीयं संभाराणामादाय गार्हपत्यस्याऽऽयतने निदधाति । यत् पृथिव्या - - - - - - - - - - - - - - - - मयम्, बौ० श्रौ० २।१६ ।

(३) अथैनाना दधाति दिवस्त्वावीर्येण - - - - - - - - - पशुमादधे इति, बौ० श्रौ० २।१६ ।

(४) अथैनान् संप्रयौति संवः सृजामि - - - - - - - - - - - मम इति, बौ० श्रौ० २।१६ ।

(५) अथैनान् कल्पयति कल्पेतां द्यावापृथिवी - - - - - - - - - संविशन्तु इति, बौ० श्रौ० २।१६ ।

प्रयच्छन्नाह - "वाचं यमो[1] भविष्यसि" । "संज्ञाप्यैव संज्ञिष्यमि" ति ।
यजमानः परिकर्मिणः प्राह । ब्राह्मणान् आशयत[2] अश्वं, तदभावे अनड्वाहं,
तदभावे अजं, तदभावे अवां, तदभावे कमण्डलुं वा गोपायत संभारान्निवच
इति । ततो यजमानः अध्वर्योः सकाशात् अरणिं गृह्णन् - "महोविश्[3]पत्नी-
त्यादि यजायै" इत्यन्तं जपति । "कृत्त्विपवतीस्थाराम्यसुवर्गोंलोके"
इत्यन्तेन अरणीं २ उरसि[4]श्लेषयति ।

लौकिकाग्निसमारोपः -

---

अध्वर्युर्यजमानमाह अनृतं विहाय सत्यवदनेति -संकल्पं कारयति ।
मानुषात्कार्यादपच्छिद्य, दैव्यमेव कार्यं कारयति । ततो यजमानः "इदमह-
मनृतादित्यादि मन्त्रं जपति[5] । ऋत्विजः यजमानं च वाचं यमं रात्रिं जागरयन्व

---

(१) अथाऽस्या अरणोप्रयच्छन्नाह वाचं यमो० इति, बौ० श्रौ० २।१५ ।
(२) स आह ब्राह्मणानाशयताऽश्वं गोपायत संभारान्निवच इति,
बौ० श्रौ० २।१५ ।
(३) अथाऽस्यारणी प्रयच्छति तेप्रतिगृह्णाति महोविशपत्नी० - - -
- - - - - - - - - - यज इति, महोविशपत्नी०, तै० ब्रा०
१।२।१, बौ० श्रौ० २।१५ ।
(४) अथैनेउपनिगृह्णाति कृत्त्वियवतीस्थौ - - - - - - - - - - -
सुवर्गे लोक इति, कृत्त्वियवतीस्थो० तै० ब्रा० १।२।१,
बौ० श्रौ० २।१५ ।
(५) अथैनमनृतात्सत्यमुपनयति मानुषादैव्यमुपनयतादमहमनृता० इति ।
अनृतात् सत्यमुपैमि० यच्छामि, तै० ब्रा० १।२।१,बौ०श्रौ० २।१५ ।

आसते । "शर्करग्नि" मित्यादि मन्त्रेण[1]। अध्वर्युर्गार्हपत्यस्योत्तरत: कल्माषमजं बध्वा, "प्रजा अग्ने सं०" मिति मन्त्रेण यजमानं प्रतिदर्शति[2]। वाचं यमत्वादि अरणी प्रदानादि च अपररात्रे वा भवति । अन्यआचार्यमतेन अरणीदानोपश्लेषवर्जं पूर्वरात्रे भवति । अध्वर्युर्यजमानेन्वारब्ध:, अवशिष्टानां संभाराणां अर्धमादाय, दक्षिणद्वारेणापनिर्हृत्य "यदन्तरिक्षस्यं" त्यृचा द्वाराअन्वाहार्यपचने निदधाति । अभिमन्त्रणादि गार्हपत्यवद्भवति । अध्वर्युर्यजमानान्वारब्ध:, अवशिष्टान् संभारान् पूर्वद्वारेण निर्हृत्य आहवनीयायतने "यत्पृथिव्याइत्यृचा निदधाति[3]। अभिमन्त्रणादि गार्हपत्यवत् ।
[4]अध्वर्युर्गोप्तारमाह एतत् सर्वं रक्षणीयमिति विहृतता अग्न्योमाकश्चनान्तरेण संचारोदिति ।

अग्निमन्थनम् -
-----------

तत: अध्वर्यु:[5] प्रदक्षिणमावृत्य गार्हपत्य संभारेषु पश्चात्

---

(१) तं वाचं यमं रात्रिं जागरयन्त आसते । शर्करग्निमिन्धान० ।
शर्करग्निमिन्धान बौ० श्रौ० २।१५ ।
(२) उत्तरेण गार्हपत्यस्याऽऽयतनं कल्माषमजं बध्नाति । प्रजा अग्ने संवासयाश्मश्च०, बौ० श्रौ० २।१५, बछ तै० ब्रा० १।२।१ ।
(३) अथ तृतीय संभाराणामादाय गार्हपत्यस्या यतने निवपति, "यत्पृथिव्या०" बौ० श्रौ० १६ ।
(४) अथ गोप्तार समादिशति । स आह विहृता अग्न्योमा कश्चनान्तरेण संचारीदिति, बौ० श्रौ० २।१६ ।

कृष्णाजिनमुन्नकुलायं निधाय तस्योपरि प्रागायतामुदगायतां वा अधरारणीं तूष्णीं निदधाति [1]। पश्चिममन्थनप्रदेशे दशहोतारं व्याख्याय "चित्तिः स्रुक् - - - - - अस्मासुनृम्णं धात्स्वाहा" [2] इत्यन्तेन मन्त्रेणोत्तरारणीं निदधाति। अध्वर्युराह - "मन्थतेति" [3] मन्थनदेशे अध्वर्युरधरारणीं "प्रतीचीन प्रजननां, अग्निर्जनित्रमि" त्यादि मन्त्रेण स्थापयति। "उर्वश्यस्यायुरसि पुरूरवा" इति मन्त्रेण मन्थं गृहीत्वा "घृतेनाक्ते" इति मन्त्रेण प्रजननम्, "वृषणौस्थ" मन्त्रेण अधरारण्यां मन्थस्थापनं, "वृषणं दधाया" मिति मंत्रेण निष्पीडनस्थापनं, "गायत्रं छन्द" इत्यादि मन्त्रेण रज्जुभ्रमणं "अग्नयेमथ्यमानाये" त्यादिना यजमानः प्रथमं मन्थयति। होता सामिधेनी स्थानस्य पश्चात् पदमात्रेऽवस्थाय, अभिहिं कृत्य सामिधेनीवत् "अभित्वादेव-सवित" [क] रित्यृचं त्रिवारमभ्यस्य "महीर्धौ" [ख] रित्यृचं, "त्वामग्नेपुष्करा" [ग] दित्यृचं, "तमुत्वादध्यङृिण" त्यृचं "तमुत्वापाथ्यो" इत्यृचं, एतावता-

---

(१) अथाध्वर्युः प्रदक्षिणमावृत्य - - - - - - - - - - - - - -
दशहोत्रोत्तरारणिमवदधाति, बौ० श्रौ० २।१६ ।

(२) तै० आ० ३।१-१० ।

(३) स आह मन्थत इति, बौ० श्रौ० २।१६ ।
अग्नेर्जनित्रमसि इत्यारभ्य गायत्रं छन्द इत्यन्तं मन्त्र विभागः
तै० सं० १।३।७ ।

(क) अभित्वादेव सवित०, ऋ० सं० १।२४।३ ।

(ख) "महीर्धौः पृथिवीचनः० ऋ० सं० १।२२।१३ ।

(ग) त्वामग्ने० । तमुत्वादध्यङ्० । तमुत्वापाथ्यो० ।
ऋ० सं० ६।१६।१३-१५ ।

यदग्निर्नजायते तर्हि "अग्ने हंसी" ति सुकमावपेत्[घ] । अग्निमन्थनाय हिता इति हेतोः अग्निमन्थनीया कृचा इत्युच्यन्ते[०] । उद्गातामन्थनारम्भकाले अरणीं स्पृष्ट्वा "अरण्योरिति" सामगायति । मथ्यमाने "अग्निं नरं" इति सामगायति । धूमे उत्पन्ने इति "त्वेषस्ते धूमकृण्वतो" ति साम गायति । अग्नौजाते यजमाने "वरं ददामी" ति वाचं विसृजेत । उद्गाता प्रज्वलितेऽग्नौ "अदर्शिगातुवित्तम[१]" इति सामगायति । अध्वर्युर्यजमानश्च जातमग्निं "अजीजनन्नमृतं" मिति मन्त्रेणोपतिष्ठते ।

गार्हपत्याधानम् -
---------------

"प्रजापतेस्त्वाप्राणे०[२]" इति मन्त्रेण यजमानः अग्नेरुपरि नासा-

---------------------------------------------------------------

(घ) अग्ने हंसि० ऋ० सं० १०।११८,१-६ । क धे घ तक - अभित्वा देवसवितः, तै० सं० ३।५।११ ।

(०) अग्नयेमथ्यमानायानुब्रूहि इत्याहाध्वर्युः अभित्वादेव सवितरिति सावित्रीमन्वाह० महीद्यौः पृथिवीचन इति द्यावापृथिवीमन्वाह० उक्थया परिदधाति, ऐ० ब्रा० १।१४-१७ ।

(१) अरण्योसाम वेयगान सं० १२७, सा० कौं० सं० पृ० ७९ । अग्निं नर, वेयगान सं० ११८, त्वेषस्ते धूमकृण्वतोति, वेयगान सं० १३२, सा० कौं० सं०, पृ० ८३ । अदर्शिगातु वित्तम, वेयगान सं० ८३, सा० कौं० सं० पृ० ४७ । ऋतु, नक्षत्र, संभार साम, वपन चातुष्प्राश्य, आवरण, इध्मपूर्वाधान्वारंभणसापं-राज्ञीर्नं वा कुर्यात्, का० श्रौ० सू० ४।१०।३ ।

(२) अथैनमभिप्राणाति । प्रजापतेस्त्वा० । बौ० श्रौ० २।१६ ।

पुटाभ्यां वायुं निष्क्रामयति । पश्चात् यजमानः गार्हपत्यं निदधाति, निधीयमाने गार्हपत्ये उद्गाता "अग्निमीडे" इति सामगायति[1] । अध्वर्यु-रुद्गातारमाह "रथंतरंब्रू ३ हि" इति[2] । तत उद्गाता "रथन्तरं साम" गायति[2] । उद्गातुरभावे "ब्रह्मन् छन्दांसि ब्रू ३ ही" ति । प्रैषानन्तरं ब्रह्मा हिं ३ इति ब्रवीति । योनिं वा द्विर्ब्रवीति, समस्तव्याहृतीर्वा त्रि-र्ब्रवीति । पश्चात् अध्वर्युः गार्हपत्यं स्पृष्ट्वा "भृगुंवीयर्वः" इत्यादि मन्त्रं जपति[3] । तत्र मन्त्रे भृगूणां त्वा व्रतपते इति, अंगिरसां तु अंगिरसान्त्वा व्रतपते इति[4] । एतद्वद्वयभिन्नानां तु "आदित्यानां त्वा व्रतपते"[5] इति । गायत्रेण छन्दसेत्यादि यथा यजमानगोत्रोच्चारणम्[6] अथाग्नेरुत्तरतः [illegible] अग्नौ वा सौवर्णं शकलं "स्वयातनुवे"[7] ति मन्त्रेण निदधाति[7] । राजतं शकलं भूत्वापि ब्राह्मणाय वृषलाय वा प्रयच्छति[8] । "अहं त्वदस्मि"[9] इति मन्त्रेणा-

---

(१) अग्निमीडसाम आरण्यगान १७६ । कौ०सं०पू०आरण्यिक मं०सं० ६०५ ।

(२) अथोद्गातारमाह रथन्तरं ब्रूहो इति, बौ० श्रौ० २।१६, रथन्तरं साम, ऊह्यगान १।१।१ । सा०कौ०सं०उ० ६८० ।

(३) भृगुंवीयर्वः० । बौ० श्रौ० २।१६ । तै० ब्रा० १।१।७ । ९,२,१ ।

(४) भृग्वङ्गिरसमादध्यात्, बौ० श्रौ० २।१६ ।

(५) आदित्यानां त्वा० अन्यासां ब्राह्मणीनां प्रजानाम्,बौ०श्रौ० २।१६ ।

(६) यथर्षिर्यथा गोत्रम् । बौ० श्रौ० २।१६ ।

(७) उत्तरतो हिरण्यशल्कमुपास्यति स्वयातनुवा संभव इति,बौ० श्रौ० २।१६ ।

(८) अथैतं राजतं वृषलाय वाऽज्ञाताय वाऽति प्रयच्छति,बौ०श्रौ० २।१६ ।

(९) अथैनमुपतिष्ठते अहंत्वदस्मि०, बौ० श्रौ० २।१६ ।
अहं त्वदस्मि० तै० ब्रा० १।१।७, १।२।१ ।

ध्वर्युर्यजमानश्च गार्हपत्यमुपतिष्ठते ।

दक्षिणाग्न्याधानम्[१] -
------------------

अथ अध्वर्युर्गार्हपत्या यतनादग्नेः एकदेशं गृहीत्वा अन्वाहार्यपचनमादधाति । पश्चादन्वाहार्यपचनं स्पृष्ट्वा "भूर्भुवोवातं[२]" इत्यादि मन्त्रं जपति । यधर्षि यथा गोत्रं गायत्रेण छन्दसेति[३] । पूर्ववत् हिरण्यशकलं निदधाति, राजतं शकलं ददाति । अध्वर्युर्यजमानश्च "इमा उमा[४]" मित्यृचा अन्वाहार्यं पचनमुपतिष्ठते ।

आहवनीयाधानम् -
---------------

ततः गार्हपत्यं प्रति यथेतमेत्य गार्हपत्येप्रणायनीयमिध्मं मूलतोऽभ्या

-----------------------------------------------

(१) अथैतमग्निमादधे ------------------
अन्वाहार्यपचनमादधाति, बौ० श्रौ० २।१७ ।

(२) भूर्भुवोवातः प्राणस्तदयमग्निः ------------
------------ क्षतेनादधामिति, वातः
प्राणस्तदयमग्निः०, तै० ब्रा० १।१।७, १।२।१, बौ० श्रौ०
२।१७ ।

(३) यधर्षि यथागोत्रम् । गायत्रेण छन्दसा इति, बौ० श्रौ० २।१७ ।

(४) अथैनमुपतिष्ठत इमा उमा ----------------
-------------- जातवेदः इति । बौ० श्रौ०
२।१७, इमा उमा०, तै० ब्रा० १।१।७ । १।२।१ ।

दधाति[1]। यथा - अर्धोदिते[2] सूर्ये अग्निप्रणयन योग्यो भवति, तथा ज्वलयति, मृत्पूर्णपात्रं उपयमनं[3] च समीपे गार्हपत्यस्य सादयति। स्थापितस्तरुणोऽश्वः गार्हपत्यस्य पुरस्तात् स्थापितो भवति[4], अश्वाभावे अनड्वान्, अजो वा, अविर्वा, कमण्डलुर्वा स्थापितो भवति। अग्न्युद्धरणे प्रारब्धे उद्गातारमाह "वामदेव्यं ब्रू[5] ३ हिं" इति। उद्गातुरभावे ब्रह्मन् छन्दांसि इति विकल्पः पूर्ववत्। यजमानः मृत्पूर्णपात्रे प्रदीप्तमिध्मं निधाय, अग्रतउपयमनेनोपयम्य "ओजसे[6] बलाय" त्यादिना मन्त्रेणोपयच्छते। ततोऽग्निपात्रं जानुमात्रमुद्धृत्य, गार्हपत्याहवनीययोर्मध्यदेशं त्रेधा विभज्य, प्रथमभागं गच्छति[7]। नाभिमात्रमुद्धृत्य-

---

(१) अथैनेन यथेतमेत्याऽग्न्यादधातीध्मं प्रणयनीयम् - तं तथाऽग्न्या दधाति यथा मन्थते, बौ० श्रौ० २।१७।

(२) अर्धोदिते सूर्ये - - - - - - - - - - - - - - - - - - - - संपत्स्यते, बौ० श्रौ० २।१७।

(३) उपोपयमनीः कल्पयन्ति, बौ० श्रौ० २।१७।

(४) अश्व एव - - - - - - - - - - - - - - - - - - - - - पुरस्तात्तिष्ठति, बौ० श्रौ० २।१७।

(५) अथोद्गातारमाह वामदेव्यं ब्रू ३ हि इति, बौ० श्रौ० २।१७ वामदेव्यसाम, ऊहगान, १।१।५। सा० कौ० सं० उ० ६८२। अन्यं ब्रह्मणे ददाति। बौ० श्रौ० २।१७।

(६) अथैनमुपयच्छत ओजसे बलाय - - - - - - - - - - - - - - - - जुषमाण एहि इति, ओजसे बलाय० तै० ब्रा० १।१।१७, २।२।१, बौ० श्रौ० २।१७।

(७) तस्माऽऽऽह बौधायनो जानुदघ्ने प्रथमं हरेत्, श्रौतकोश पृ० ४७।

द्वितीयभागं गच्छति । ग्रीवामात्रमुद्धृत्य तृतीयभागं गच्छति[1] । अश्वं पूर्वं, ब्रह्मादयः उत्तरेण नयन्ति, तं अश्वं "प्राचीमनुप्रदेश" मित्यृचानुमन्त्रयते,[2] "विक्रमस्वमहानसि" त्यृचा गमनमध्ये उपरमन्ति[3] । "अन्वग्निरुषसा" मित्यृचा ततो गच्छन्ति[4] । अग्निपात्रमन्यस्य हस्ते दत्वा प्राङ्मुखमश्वं दक्षिणेन पूर्वपादेन संभाराणामुपरदेशे अतिसन्निहिते आक्रामयति[5] । यजमानः प्रदक्षिणमावृत्य, अश्वं द्विरभ्युक्ष्य, उत्तरत उत्सृज्य, अध्वर्यवे ददाति[6] । अन्यमश्वं

---

(१) अथनाभि दघ्नेऽथ ग्रीवदघ्ने प्राणास्तेनाऽति हरेदिति, आ०को० ४७ ।

(...) आददान एवैतामात्रा अभिसम्पादयेदित्येतदपरम् । शालीकिमतम् - आददान - - - - - - - - - - - अतिहरेदिति ।

(२) अश्वं पूर्वं नयन्ति । तमनुमन्त्रयते प्राचीमनुप्रदिशं - - - - - - - - - - - - - - - - - - - - - - चतुष्पद इति, प्राचीमनुप्रदिश०, तै० ब्रा० १।१।७, १।२।१ । बौ० औ० २।१७ ।

(३) विष्णुवत्युपरमन्ति विक्रमस्व महां असिवेदिषन्मानुषेभ्य स्त्रिषु लोकेषु जागृहि इति, बौ० औ० २।१७ । विक्रमस्व० तै० ब्रा० १।१।७, १।२।१ ।

(४) अथोपाति यन्ति अन्वग्निरुषसा - - - - - - - - - - - - - आततान इति, बौ० औ० २।१७, तै० ब्रा० १।१।७,१।१।२ ।

(५) अथैनाऽश्वेन - - - - - - - - - - - - - - - - - - - अभ्यवर्तीरन्निति, बौ० औ० २।१७ । शालिकोमतम् - संभाराणामाक्रमण इति, औ० को० पृ० ४७ । व्रीहस्माऽऽहबौधायन एवमेकेन - - - - - - - - - - - - - - - - - - - - - - - - अभ्यवर्तीरन् इति, पृ० ४७ ।

(६) अथैनं प्रदक्षिणमावृत्य - - - - - - - - - - - - - - - - - - भवति, बौ० औ० २।१७ ।

ब्रह्मणे ददाति । ततो ब्रह्मा आहवनीयं परीत्य आहवनीयस्य दक्षिणतः मन्त्रेण निरसनोपवेशने कृत्वा, "बृहस्पतिर्ब्रह्म" इत्यादि जपति । यजमानः अर्धोदिते सूर्ये प्रदक्षिणमावृत्य प्रत्यङ्मुखस्तिष्ठन् तमग्निं गृहीत्वा, संभारेषु "यदिदमित्यादि" इत्यन्तेन मन्त्रेण स्थापयति[1] । ततउद्गातारमाह - बृहद्वारवन्तीयं श्येतं बृ ३ हिं इति[2] । तत् उद्गाता सामानि गायति । उद्गातुरभावे पूर्ववत् । आहितमग्निं स्पृष्ट्वा "भूर्भुवः सुवरों"[3] इत्यादिमन्त्रं जपति । ततो राजतरुक्मदानान्तं पूर्ववत् । पश्चात् "आनशे व्यानशे"[4] इत्यादि

---

(१) यदिदं दिवो० तै० ब्रा० १।१।७, १।२।१, अथ प्रदक्षिणमावृत्यैध्मं प्रतिष्ठापयति यदिदं दिवो यदद: - - - - - - - - - - - - - - - - - - - - - - - - - - पृथिव्या: - - - - - - - - - - - - - - गोप्तारं गुप्त्यै इति, बौ० श्रौ० २।१७, शालिकोमतम् - तूष्णीमेवैध्मं निदध्यादिति, श्रौ०को० पृ० ४७ ।

(२) अथोद्गातारमाह बृहद्वारवन्तीयं श्येतमिति गायति - सर्वाणि संप्रेष्यति, बौ० श्रौ० २।१७ ।
बृहत्साम ऊह्यगान १।१।५ । सा० कौ० सं० उ० ८०६ ।
वारवन्तीयं साम, ऊहगान ४६१, सा० कौ० सं० १६३४ ।
श्यैतंसाम, ऊहगान २।१।३, सा० कौ० सं० [illegible]३०८११ ।

(३) बृहती गीयमान आहवनीय मादधाति भूर्भुवः - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - व्रतेना दधामि, बौ० श्रौ० २।१७ ।

(४) अथैनमुपतिष्ठते आनशे व्यानशे सर्वमायुर्व्यानशे इति । बौ० श्रौ० २।१७, तै० ब्रा० १।१।७, १।२।१ ।

मन्त्रेणाध्वर्युर्यजमानश्च आहवनीयमुपतिष्ठते । [१] रथचक्रं प्रवर्तयति सन्ततं गार्हपत्यादाहवनीयात् ।

उत्तरसर्वौषधिहोमः -

ततः अग्नीन् परिसमुह्य, पर्युक्ष्य, परिस्तीर्य, यजमानः तिल-माषादीनि पूर्वोक्तानि धान्यानि, स्वाहाकारान्ताभिर्व्याहृतिभिः सर्वेष्वग्निषु जुहोति [२] ।

पञ्चसमिद्धोमः -

ततोऽध्वर्युर्यजमानेनान्वारब्धः गार्हपत्ये - आज्यं संस्कृत्य, ध्रुवं जुहूं च सम्मृज्य, एकैकस्मिन्नग्नौ अश्वत्थ, उदुम्बर, पलाश, शमी, विकङ्कत,

---

(१) रथचक्रं प्रवर्तयति - - - - - - - - - - - - - - - - - - - -
आहवनीयात्, बौ० श्रौ० २।१७ । बौधायनमतम् -
रथचक्रस्य करण इति । कुर्यादिति श्रौ० को० पृ० ४७ ।
शान्तोक्तिमतम् - न कुर्यादिति ।
औपमन्यवमतम् - अत्रोहस्माऽऽह - - - - - - - - - - - - - -
गविः ।

(२) सर्वौषधेन व्याहृतीभिरग्नीन्हमयित्वा, बौ० श्रौ० २।१८ ।

वृक्षाणां एकैकं समिधं गृहीत्वा, संस्कृताज्येनाभ्यज्या दधाति[1]। तत्र आदौ गार्हपत्ये -

"समिध्यमानः०" इत्यृचा अश्वत्थीम्[(क)]।
"घृतप्रतीको घृतमस्य०" इत्यृचा औदुम्बरीम्[(ख)]।
"त्वामग्ने समिधानं" इत्यृचा पालाशीम्[(ग)]।
"त्वामग्ने प्रदिव०" इत्यृचा शमीमयीम्[(घ)]।
"घृतप्रतीकं वं" इत्यृचा वैकङ्कतीम्[(ङ०)]।

एतैरेव मन्त्रैरन्वाहार्यं पचने आहवनीये वा दधाति । सर्वत्र अग्नय इदं नममेति त्यागः कर्त्तव्यः ।

सर्वोपस्थानम् -
------------

यजमानः प्रदक्षिणमावृत्य गार्हपत्यस्य पश्चात्तिष्ठन् "ये ते

---

(१) पञ्च पञ्च नानावृक्ष्याः समिधोऽभ्यज्याऽभि दधाति - समिध्यमानः प्रथमोनुधर्मः - - - - - - - अपोद्धृत्य, बौ० श्रौ० २।१८ ।
(पञ्च पञ्च नानावृक्ष्याः - - - - - - - - - - - - - - - आनुपूर्व्यं भवति, बौ० श्रौ० २।७ ।
(क) समिध्यमानः प्रथमोनुधर्मं०, तै० ब्रा० १।२।१ ।
(ख) घृतप्रतीको०, तै० ब्रा० १।२।१ ।
(ग) त्वामग्नेसमिधानं० तै० ब्रा० १।२।१ ।
(घ) त्वामग्नेप्रदिवआहुतं०, तै० ब्रा० १।२।१ ।
(ङ०) घृतप्रतीकं व ऋतस्य० तै० ब्रा० १।२।१ ।

अग्ने इत्यादि त्वादधे' इत्यन्तैर्मन्त्रैः उपतिष्ठते । एवमेवान्वाहार्यपचनाहवनीया-वुपतिष्ठते [1]

सर्वाग्निजपः -

---

ततः यजमानोऽद्वेष्यं ध्यायन् गार्हपत्य समीपे 'यास्तेअग्नेघोरा०' इत्यादि द्विष्मः' इत्यन्तान् मन्त्रान् जपति । एवमन्वाहार्यपचनाहवनीययोः समीपे उपविश्य जपति [2] ।

---

(१) अथ प्रदक्षिणमावृत्य प्रत्यङ्ङुदङ्ङावृत्य जघनेन गार्हपत्यं स्तिष्ठ स्तनूभिरुपतिष्ठते, बौ० श्रौ० २।७ ।

ये ते अग्नेशिवे तनु वौ विराट्च० ।।१।। बौ०श्रौ०२।७, तै०ब्रा० १।१।७, १।२।१ ।

ये ते अग्ने शिवे तनु वौ सम्राट् च० ।। २ ।। बौ० श्रौ० २।७ तै० ब्रा० १।१७, १।२।१ ।

ये ते अग्ने शिवे तनु वौ विभूश्च ।। ३ ।। बौ० श्रौ० २।७, तै० ब्रा० १।१।७, १।२।१ ।

ये ते अग्ने शिवे तनु वौ प्रभूवीश्च० ।। ४ ।। बौ० श्रौ० २।७, तै० ब्रा० १।१।७, १।२।१ ।

यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादधे, बौ० श्रौ० २।७, तै० ब्रा० १।१।७, १।२।१ ।

सर्वाभिर्गार्हपत्यम् । सर्वाभिरन्वाहार्य पचनम् - सर्वाभि-राहवनीयम्, बौ० श्रौ० २।७ ।

---------अग्रिमपृष्ठेऽपि

अग्न्युपस्थानम् -
-------------

ततोऽप

ततोऽपउपस्पृश्य तिष्ठन् 'नर्यप्रजा०' इति मन्त्रसमूहद्वारा गार्हपत्य-मुपतिष्ठते । 'अथर्वपितुं०' इति मन्त्रैः दक्षिणाग्निं, शंस्यपशूनित्यादि मन्त्रैः आहवनीयमुपतिष्ठते[२] ।

पूर्णाहुतिः -
-----------

ततो गार्हपत्ये गृह्योक्त प्रकारेणाज्य संस्कृत्य स्रुचिमध्ये चतुर्वार-

-----------------------------------------------------

पूर्वपृष्ठस्याग्रे---------

(१) अत्र यं यजमानो द्वेष्टि तं मनसाध्यायति, बौ० श्रौ० २।७, अथ घोरास्तनूरनुदिशति यास्ते अग्ने घोरास्तनुवस्ताभिरमुंगच्छ इति, बौ० श्रौ० २।७, तनूनामनुदेश इति । प्रत्यघोत्याऽनुऽदिशेदिति बौधायनः, बौ० श्रौ० २।७, यास्ते अग्नेघोरा ------ गच्छेत्येवब्रूयादिति शालीकिः, ।

(२) अथाऽपउपस्पृश्य विराजक्रमैरुपतिष्ठते, बौ० श्रौ० २।७ ।
नर्यप्रजां मे गोपाय --------- इति गार्हपत्यम् ।
बौ० श्रौ० २।७, तै० ब्रा० १।१।७, १।२।१ ।
अथर्वपितुं मे गोपाय ------- इत्यन्वाहार्यपचनम्,
बौ० श्रौ० २।७, तै० ब्रा० १।१।७, १।२।१ ।
श स्य पशून् मे गोपाय -- ---- इत्याहवनीयम् ।
बौ० श्रौ० २।७, तै० ब्रा० १।१।७, १।२।१ ।
अथ गार्हपत्यआज्यं विलाप्योत्पूय -- जिव्हाः इति, बौ०श्रौ० २।७

माज्यं गृहीत्वा, आहवनीये समिधमाधाय, आहवनीयमद्भिः परिषिच्य "सप्तते अग्ने०" इत्यृचा जुहोति । अध्वर्यवे वरं ददाति । इयमाहुतिः पूर्णाहुतिशब्देन लोके प्रसिद्धा[२] । पश्चात् आहवनीये स्मार्तवत् कूष्मांडहोमं कुर्यात् । अयं कूष्माण्डहोमः आधाने उत्तरकूष्मांडहोम इति व्यवह्रियते ।

अग्न्याधाने पक्षान्तराणि : (क) पूर्णाहुत्यन्तमग्न्याधानः पक्षः

---

अग्न्याधानस्य पूर्णाहुत्या पूर्वोक्तया यदि समाप्तिस्तदा पूर्णाहुत्यन्तमग्न्याधानमित्युच्यते[२] ।

(ख) होमान्तमग्न्याधानपक्षः -

---

होमान्तत्वपक्षे अग्निसंस्कारकत्वायं प्रातर्होमौ समस्य करिष्ये इति सङ्कल्प्य, वक्ष्यमाण सायं प्रातर्होमौ समस्य सायं होमं तन्त्रेण करोति तदा अग्निहोत्रहोमान्तमग्न्याधानम् ।

---

(१) सप्तते अग्ने - - - - - - - - - - - - - - - - - - -
पूर्णस्वा छन्देन, तै० सं० १।५।३, पूर्णाहुतौ वरं ददाति ।
बौ० श्रौ० २।७ ।

(२) पूर्णाहुत्यन्तमग्न्याधेयम् । आ० श्रौ० २।६।१७ । पूर्णाहुतौ तूष्णीमग्निहोत्र इति राधोतराणाम् । अत्रोहस्माऽऽहबौधायनः पूर्णाहुतिमेव जुहुयान्न तूष्णीमग्निहोत्रमिति श्रौ०को० भा० १ पृ०४८

(ग) इष्ट्यन्तमग्न्याधानपक्षः -

इष्ट्यन्तस्य पक्षे आश्वलायनेन इष्टित्रयं विहितम् । तत्र द्वितीया इष्टिः आश्वलायनेन विकल्पिता । तथा च आद्यन्तयोरैकतन्त्रेणानुष्ठानं प्रसिद्धं, तयोर्बौधायन मतानुसारेण प्रधानदेवताः षट्, सर्वं पौर्णमासतन्त्रवत् भवति[१] ।

प्रधानदेवताः -

तत्र प्रधानदेवता स्थाने - (१) अग्निः । (२) अग्निः पवमानः । (३) अग्निः पावकः । (४) अग्निः शुचिः । (५) इन्द्राग्नी । (६) अदितिः । एता देवताः भवन्ति । ताश्च उपांशु धर्मेण इज्यते, सप्तदश सामिधेन्यो भवन्ति । इध्मसंभरणकाले एकविंशतिधेत्यस्य स्थाने त्रयो विंशतिधेत्यूहः[२] ।

---

(१) यदि त्विष्टयस्तनुयुः, आ० श्रौ० २।१।१८ ।
(२) प्रथमायामग्निरग्निः पवमानः । आ० श्रौ० २।१।१६ ।
अग्निः पावकोऽग्निः शुचिः । आ० श्रौ० २।१।२५ ।
अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि
आ० श्रौ० २।१।२७, अदितिः ।
आ० श्रौ० २।१।२८ ।

पात्रासादनेविशेषः -

पात्रासादने विशेषरूपेण त्रिचत्वारिंशत (४३) कपालानि, चरुस्थाली, मेक्षर्णं च भवति ।

यथादैवत निर्वापादिप्रकारः[1] -

यथा दैवतं निर्वापादि भवति । आग्नेयादयश्चत्वारोष्टाकपालाः । ऐन्द्राग्नएकादशकपालः । आदित्यैश्चरुः । पश्चात् आज्यभागप्रदानपर्यन्तं कर्मकुर्यात् ।

देवताक्रमेणयाज्यापुरोनुवाक्याप्रकारः - अग्निः (आश्वलायनमतेन) -

"अग्निर्मूर्धेति०" पुरोनुवाक्या ।
"अयमग्निः सहस्रिण०" याज्या[2] ।

---

(१) आग्नेयमष्टाकपालं निर्वपति । बौ० श्रौ० २।१६ । ऐन्द्राग्नमेकादशकपालं निर्वपत्यादित्यं चरुम्, बौ० श्रौ० २।१६ । त्रीणि हवींषिनिर्वपति० अग्नयेपवमानायाग्नयेशुचये० - - - - - - - - - - - - - - आदित्यं चरुं०, तै० ब्रा० १।१।५-६ ।

(२) अग्निर्मूर्धा० ऋ० सं० ८।४४।१६, अयमग्निः सहस्रिण० ऋ० सं० ८।७५।४ ।

(२) अग्निः पवमानः -

"अग्नआयूंषि पवस्य०" इत्यनुवाक्या
"अग्नेपवस्वे" ति याज्या[1]।

(३) अग्निः पावकः -

"सनः पावके" त्यनुवाक्या।
"अग्नेपावके" ति याज्या[2]।

(४) अग्निः शुचिः -

"अग्निः शुचिव्रततम०" इत्यनुवाक्या।
"उदग्नेशुचयस्तवे" ति याज्या[3]।

---

(१) अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः। आ० श्रौ० २।१।२०।
अग्न आयूंषि० ऋ० सं० ६।६६।१६। अग्नेपवस्व०
ऋ० सं० ६।६६।२१।

(२) सनः पावकदोदिवोऽग्ने पावकरोचिषा०। आ० श्रौ०
२।१।२५, सनः पावकादोदिवोऽग्ने० ऋ० सं० १।१२।१०।
अग्नेपावक० ऋ० सं० ५।२६।१।

(३) अग्निः शुचिव्रततम उदग्नेशुचयस्तव। आ० श्रौ० २।१।२५।
अग्निः शुचिव्रततम० ऋ० सं० ८।४४।२१। उदग्नेशुचयस्तव,
ऋ० सं० ८।४४।१७।

(५) इन्द्राग्नी -

"इन्द्राग्नीअवसे" त्यनुवाक्या ।

"गोभिर्विप्रः प्रमति" मिति याज्या ।

(६) आदित्यः -

"उतत्वामदितेमही" मित्यनुवाक्या ।

"महीमूषुमातरं" मिति याज्या[१]।

आश्वलायनमतेन स्विष्टकृयाज्यापुरोनुवाक्या -

"प्रेद्धोअग्न०" इत्यनुवाक्या ।

"इमो अग्ने०" ति याज्या[२]।

---

(१) उतत्वामदितेमही -

सुप्रणीतिम्, आ० श्रौ० २।१, उतत्वामदिते० ऋ० सं० ८।६७।१० ।

(२) प्रेद्धो अग्न इमो अग्न इति संयाज्ये । विराजावित्युक्तत्वे-प्रतीयादिति तिस्रः आ० श्रौ० २।१।३० । प्रेद्धोअग्ने० ऋ० सं० ७।१।३; इमो अग्ने० ऋ० सं० ७।१।१८ ।

बौधायनमतेन -

(१) अग्निः -

"अग्निर्मूर्धा०" इति पुरोनुवाक्या ।

"भुवो" इति याज्या[1] ।

(२) अग्निः पावमानः -

"अग्न आयूंषि०" पुरोनुवाक्या ।

"अग्ने पवस्व०" याज्या[2] ।

(३) अग्निः पावकः -

"अग्ने पावक०" इति पुरोनुवाक्या ।

"अग्ने पवस्व०" इति याज्या[3] ।

---

(१) अथ हविषोऽग्निर्मूर्धा, भुव इति, बौ० श्रौ० २।१६, अग्निमूर्धाभुवः १,५,११ (४।४।४) ।

(२) अथ हविषोऽग्न आयू ंषि पक्षेऽग्ने पवस्वेति, बौ०श्रौ० २।२० । अग्न आयूंषि तै० सं० १।४।२६ । अग्नेपवस्व० १।५।५ ।

(३) अथ हविषोरग्नेपावक सनः पावकाग्नि । बौ० श्रौ० २।२० । अग्नेपावक० तै० सं० १।५।५ । अग्नेपवस्व० १।५।५ ।

(४) अग्निः शुचिः -

"अग्निः शुचिव्रततमः०" इति पुरोनुवाक्या ।

"उदग्ने शुचयस्तव०" इति याज्या[१] ।

(५) इन्द्राग्नी -

"इन्द्राग्नीरोचनादिवः०" इति पुरोनुवाक्या ।

"श्नथद्वृत्रम्०" इति याज्या[२] ।

(६) आदित्यः -

"अदितिर्नउरुष्यतु०" इति पुरोनुवाक्या ।

"महीमूषुमातरम्०" इति याज्या[३] ।

---

(१) अग्निः शुचिव्रततम उदग्नेशुचयस्तवेति, बौ० श्रौ० २।२० ।
तै० सं० १।५।५ ।

(२) अथ हविषोरिन्द्राग्नीरोचनादिवः श्नथद्वृत्रमिति, बौ०श्रौ० २।१९
इन्द्राग्नीरोचनादिवः०, श्नथद्वृत्रम्०, तै० सं० ४।२।११ ।

(३) अदितिर्न उरुष्यतु महीमूषु मातरमित्यादित्यस्य,बौ०श्रौ० २।१९
अदितिर्न उरुष्यतु० । महीमूषुमातरम्, तै० सं० १।५।११ ।

दक्षिणादानेविशेषः[1] -

अध्वर्युः अन्वाहार्यमासादयति । पश्चात् अग्नीदिदन्ते उप-बर्हणम् । ब्रह्मन्नयं ते अश्वः । होतारेषातेधनुः । अध्वर्यो एषतेऽनड्वान् । उद्गातः एतेते हिरण्यवाससो । हिरण्यं चात्र शतमानम् । मोः सर्वे ऋत्विजः युष्माकमेतौ मिथुनौ गावौ, वासः, पञ्च गावश्च, यथाभागं प्रतिगृह्णीध्वमिति यजमानः वदति । सर्वान् पदार्थान् दर्भेणाभिमन्त्र्य, दद्यात्[1] ।

दानप्रतिग्रहयोर्विशेषः -

दान-प्रतिग्रहणसमये "देवस्यत्वे" त्यादि मन्त्रेणान्वाहार्यं प्रतिगृह्य, पुनर्देवस्यत्वे०" त्यादि मन्त्रेण ब्रह्मणओदन मित्यस्य स्थाने ब्रह्मण उपबर्हणमिति, ब्रह्मणेऽश्वमिति । ब्रह्मणेऽनड्वाहमिति । ब्रह्मणे धेनुमिति । ब्रह्मणेहिरण्यवाससी । ततः सर्वे ऋत्विजः देवस्यत्वेति मन्त्रे उक्त-स्थाने ब्रह्मणे मिथुनौ गावौ, पुनः तत्र स्थाने ब्रह्मणेयाः इत्यादि पठित्वा प्रति गृह्णीयुः । तथा च एतादृग्दक्षिणादानासामर्थ्ये एकां गां ददाति । तत्राप्यशक्तौ चरुं ददाति ।

---

(१) अग्नीधे ददाति० उपबर्हणं ददाति० अश्वं ब्रह्मणे० धेनुं होत्रे अनड्वाहमध्वर्यवे० मिथुनौ गावौ ददाति० वासोददाति० तै० ब्रा० १।१।५-६ ।

अजस्रधारणपक्ष: -

आश्वलायनमतेनाधानदिनप्रभृति द्वादशरात्रं त्रयोऽप्यग्नयोऽजस्रा भवन्ति, तावत्पर्यन्तं नानृतं वदेत् इत्यादि निषेधपरिपालनात्मकं व्रतम् । द्वादशरात्रमध्ये आधानदिने वा पौर्णमासीप्राप्तौ अजस्रधारणं न भवति । सन्ततं प्रज्वलिता अग्नय: अजस्रा इत्युच्यन्ते[1] ।

विहरणोद्धरणपक्षश्च -

गार्हपत्यस्तु अजस्र एव भवति । अग्निहोत्रहोमादि कार्यकाले गार्हपत्याद्दक्षिणाग्निमुद्धृत्य गार्हपत्यादेव आहवनीयाऽऽयतने आहवनीयं प्रणीय उद्धृतं दक्षिणाग्निं दक्षिणाग्न्यायतने निदधाति ।

गतश्रिय: (पक्ष:)[2] -

गतश्रियस्तु यजमानस्य अग्नित्रयस्याप्यजस्रधारणम् । "अत्यन्तं गतश्रिय:" इत्याश्वलायन सूत्रात् । सोऽयमजस्रधारण पक्ष इत्युच्यते । अन्योग्नीनां प्रणयनात् विहरणपक्ष, उद्धरणपक्षश्च कथ्यते ।

---

(१) आधानाद् द्वादशरात्रमजस्रा:, आ० श्रौ० २।१।३५ ।
तस्मादाहिताग्निर्नानृतं वदेत्, तै० ब्रा० १।१।४ ।
(२) अत्यन्तं तु गतश्रिय:, आ० श्रौ० २।१।३६ ।

पुनराधानम् - आहिताग्नेः पुनराधानप्राप्तिः -

यत्र आहिताग्नेः यजमानस्य आधानकालादारभ्य - संवत्सर समाप्तेरर्वाक् कस्यचित् पदार्थस्य हानिर्भवति, महारोगो वा जायते अन्यानि वा अभ्यनुगत्यादीनि निमित्तानि भवन्ति, स आहिताग्निः पुनराधानं करोति[१]।

पुनराधानस्य कालः -

पुनराधानस्य कालः आषाढ्याः पौर्णमास्याः पुरस्तात् अमावास्या प्रतिपत् द्वितीयादिषु अन्यतम तिथौ उक्तः। आहवनीया धानम् अनुदिते सूर्ये उदिते वा सूर्ये, पुनर्वसु नक्षत्रयोगयुक्ते काले, तादृश-योगालाभे, उदगयने आपूर्यमाणपक्षे वा पुनर्वसुयुक्ते दिवसे वा कस्मिंश्चिदहने करोति[२]।

---

(१) आधाना पद्यामयावी यदिवाऽर्था व्यथेरन् पुनराधेय इष्टिः, बा० श्रौ० २।८।१, अग्नीनाधाय पापीयान् भूयासज्याशिषि - - - - - - - - - - - - - - - - - - - संवत्सरेदृष्टम् भवति, बौ० श्रौ० २०।१६ ।

(२) सायाऽऽषाढ्याः पौर्णमास्याः - - - - - - - - - - - पुनर्वसु सम्पद्यते तस्यामादधीतेति, बौ० श्रौ० ३।१ ।

पुनराधानस्य संभारा: -

आधानोक्ता सर्वे संभारा: तथैव । अत्र च विशेष: - रथ:, वास:, अनडवान्, तिस्रो दर्भमय्योरज्जव: । इति पुनराधानसंभारा:[१] ।

पुनराधानकर्मप्रतिज्ञासंकल्पे विशेष: -

पुनर्वसुयुक्त दिनात्पूर्वेद्यु: "या: पुरस्ता" दित्यादिमन्त्रान् जपित्वा, ऋद्धिकामोऽग्नीन् पुनराधास्य इति संकल्पं कुर्यात् । संकल्प प्रतिज्ञोच्चारणं त्रिवारमुपांशुत्रिरुच्चै: कुर्यात् । तत: ऋत्विग्वरणं पुनराधानेष्ट्यर्थं कुर्यात् ।

पूर्वाधानसम्पादितानां अग्नीनां समारोप: -

पश्चात् "अयन्ते योनिरिति" मन्त्रेण अरण्योरग्नीन् उत्पत्यनुक्रमेण समारोप्य स्थानान्तरं स्थापयति । पश्चात् विहारं कल्पयित्वा, अग्निं मथित्वा, विहृत्य, परिसमुह्य, पर्युक्ष्य, परिस्तीर्य, गार्हपत्ये स्मार्त-

---

(१) तदाहु: कृतयजु: संभृतसंभारो भवति - - - - - - - - - -
रथं, पुनरुत्स्यूतं वास:, पुनरुत्स्यूत मनडवाहं तिस्रो दर्भमयीर्विंसूमिका: प्रज्ञाता आग्नेयिका संभारा: ।
बौ० श्रौ० ३।१ ।

वदाज्यं संस्कृत्य, स्रुकु स्रुवौ निष्टप्य, संमृज्य, स्रुचिचतुर्गृहीतं गृहीत्वा, आहवनीये समिधमाधाय - "मनोज्योति॰" रिति मन्त्रेण जुहोति[1]।

अग्न्युद्वासनेष्टिः[2] -

इयमिष्टिरग्न्युद्वासन निमित्तत्वात् सम्पद्यते । अतः अग्न्युद्वासनेष्टिरित्यन्वर्थसंज्ञा । ततः अग्न्युद्वासनेष्टिः क्रियते ।

अत्र प्रधानदेवता: -

(१) अग्निः । (२) अग्नयेवैश्वानरः इति ।

हविः -

(१) आग्नेयोऽष्टाकपालः पुरोडाशः । (२) अग्नये वैश्वानराय द्वादशकपालः पुरोडाशः इति । प्रधानयागे उपांशु वाचा व्यवहार इति विशेषः ।

---

(१) तस्या उपवसथेऽरण्योरग्नीन्समारोप्योदवसाथमथित्वा ० बौ० श्रौ० ३।१ । मनोज्योति० तै० सं० १।५।३ । अयन्तेयोनिर्ऋत्वियो० ऋ० सं० ३।२६।१० , तै० सं० १।५।५ ।

(२) आग्नेयमष्टाकपालं निर्वपति वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्निति सा प्रसिद्धेष्टिः संतिष्ठते, बौ० श्रौ० ३।२ ।

आश्वलायनमतेन याज्यापुरोनुवाक्या[1] -

अग्निः -

"अग्निमूर्द्धादिवः०" इति पुरोनुवाक्या ।

"भुवो यज्ञस्य०" इति याज्या ।

अग्नयेवैश्वानरः -

"वैश्वानर०" इति पुरोनुवाक्या ।

"पृष्टोदिवि पृष्टोऽग्निः" इति याज्या ।

बौधायनमतेन याज्या पुरोनुवाक्या[2] -

अग्निः

अग्निमूर्द्धादिवः इति पुरोनुवाक्या ।

भुवोयज्ञस्य याज्या ।

---

(१) अग्निर्मूर्धा० ऋ० सं० ८।४४।१६ । भुवो यज्ञस्य० ऋ० सं० १०।८।६ । वैश्वानरस्य ऋ० सं० ३।३।११ । पृष्टोदिवि० ऋ० सं० १।९८।२ ।

(२) अग्निर्मूर्धा० । भुवोयज्ञस्य० । वैश्वानर । पृष्टोदिवि० । तै० सं० १।५।११ ।

अग्नयेवैश्वानरः -

वैश्वानरद्वंसानाम्यो० इति पुरोनुवाक्या ।

पृष्टोदिवि पृष्टो अग्निः इति याज्या ।

ततः अन्वाहार्यमासाद्य, हिरण्यं ददाति, अग्नये हिरण्यमिति प्रतिग्रहणमन्त्रे विशेषः । इयमिष्टिः पौर्णमासतन्त्रेण ब्राह्मण तर्पणान्ता भवति ।

गार्हपत्यपुनराधानम् -

तदानीमेवाद्भिरग्नीन् पुनः संस्कृते पूर्वस्मिन्नेवाग्न्यंगारे तत्क्षण-संस्कृतानि पूर्वपात्राणि कृत्वा, अध्वर्युः "उद्धन्यमानं"मित्यादि मन्त्रेण गार्हपत्यादीन्युद्धन्ति[1] । संभारसंभरणमग्न्याधानवत् । मुञ्ज-कुलायस्थाने दर्भकुलायं तन्मन्त्रेण संभरति[2] । गोपितृयज्ञो विकल्पितः । गार्हपत्यस्य पश्चाल्लौकिकाग्नौ ब्रह्मौदनं पचति । श्रपणादि विहृता - अग्नयो माकश्चनान्तरेण संचारीत्यन्तं समानम् । ततोऽध्वर्युर्गार्हपत्यस्य पश्चिमभागे ब्रह्मौदनाग्निं भस्म सहितमुद्वास्य तत्र दर्भकुलायं निधाय, तस्मिन्

---

(१) अथ तदानीमेवाद्भिरग्नीन् समुह्य ब्रह्मौदनं श्रपयित्वोपवसत्यथराग्न्या-धेयिकं कर्म, बौ० श्रौ० ३।१ ।

(२) यदमुत्र मुन्जकुलायं तदिह दर्भकुलायम्, बौ० श्रौ० ३।१ ।

पूर्ववत् अरणीं निधाय मन्थेत् । चित्रिणीत्यादि उद्गातारथन्तरं ब्रूहीति प्रैषान्तसमानम् । रथन्तरे गीयमाने दर्भमयीं रज्जुं ज्वलयित्वा, तया रज्वा "मूर्धानोधर्मशिर०" इत्यृचा "भूमिर्भूम्ना" इत्यृचा, "आयं गौ०" रित्यृचा, "त्रिंशद्धामे" त्यृचा, "अस्य प्राणा" दित्यृचा "भृगूणा" मित्यादि पूर्वोक्तयजुषा च गार्हपत्य मादधाति[1]।

दक्षिणाग्नेः पुनराधानम् -

दर्भमयीं रज्जुं ज्वलयित्वा तया रज्वा अन्वाहार्यपचनं आदधाति[2]।

आहवनीयपुनराधनम् -

पुनर्दर्भमयीं रज्जुं ज्वलयित्वा तया रज्वा "यत्वाक्रुद्ध०" इत्यृचा "यत्ते मन्युः परोप्तस्य०" त्यृचा "मनोज्योति" रित्यृचा "भृगूणा" मित्यादि यजुषा च आहवनीयमादधाति[3]। शेषं पूर्णाहुत्यन्तं समानतन्त्रम् ।

---

(१) योऽमुत्रेध्मः प्रणयनीयः स इह दर्भमयो विंसूर्मिकादर्भैः गार्हपत्य मादधाति । बौ० श्रौ० ३।१ । भूमिर्भूम्ना द्यौर्वरिणेति चतस्रो-गार्हपत्ये । बौ० श्रौ० ३।२ । भूमिर्भूम्ना० । आयं गौ० । त्रिंश-द्धा० । अस्यप्राणा० । तै० सं० १।५।३ ।

(२) दर्भैरन्वाहार्य पचनम्, बौ० श्रौ० ३।१ ।

(३) दर्भैराहवनीयम्, बौ० श्रौ० ३।१ । यत्वाक्रुद्ध० तै० सं० १।५।३ । यत्ते मन्युः परोप्तस्य० तै०सं० १।५।३ । मनोज्योति० तै०सं० १।५।३

पुनराधेय इष्टि: -
---------------

प्रधानदेवता:- अग्नि: ।
---------

हवि:[1] - आग्नेय: पञ्चकपाल: पुरोडाश: । "समिधाग्निं दुवस्यत०[2]"

"एह्यूषुब्रवाणिते०" इति आग्नेयावाज्यभागौ । इमौ: क्रमेण बुद्धिपदेन्दु पदघटित्वात् बुद्धिमदिन्दुमन्तौ[3] आज्यभागस्य देवता संज्ञा ।

पञ्चप्रयाजा:[4] -
------------

(सर्वत्र आगूपूर्वकम्)[5] समिध: समिधोऽग्नआज्यस्य व्यन्त्विति[6] प्रथम: । तनूनपा दग्निमग्न आज्यस्यवेत्त्विति द्वितीय: । प्रधानयागानन्तरं ध्रुवाज्याहुतिं "सहरय्यानिवर्तस्वे" त्यृचा जुहोति । (इडा) अग्निनाऽग्न आज्यस्य व्यन्तु

---

(१) स इहाग्नेय: पञ्चकपाल: । बौं० श्रौ० ३।२ ।

(२) समिधाग्निं दुवस्यत० ऋ० सं० ८।४४।१, एह्यूषुब्रवाणिते० ऋ० सं० ६।१६।१६, समिधाग्निं दुवस्यतेह्यूषु ब्रवाणित इत्याग्नेया वाज्यभागौ, आ० श्रौ० २।८।७, आज्यभागयोरेव मीमांसा - - - - अग्नेतमयथा ह्यग्न इति, बौं०श्रौ० ३।२ ।

(३) बुद्धिमदिन्दुमन्ता वित्याचक्षते, आ० श्रौ० २।८।८ ।

(४) तस्यां प्रयाजानुयाजानु विभक्तिभिर्यजेत । आ० श्रौ० २।८।५ ।

(५) ये यजामह इत्यागू: । आ० श्रौ० १।५।५ ।

(६) समिध: समिधो अग्नवाज्यस्यव्यन्तु - -बर्हिरग्नआज्यस्यवेत्त्विति, आ० श्रौ० २।८।६, प्रयाजेषु चतस्रो विमक्तीर्दधाति - - - स्वयं समानान्तरम प्रयाजा:, बौं० श्रौ० ३।२ ।

तृतीयः । बर्हिरग्न आज्यस्यै त्त्विति चतुर्थः । इति चतुर्षु प्रयाजेषु विशेषः ।

पुनराधाने आज्यहोमः[2] -

आज्यभाग प्रदानान्तरमध्वर्युः स्रुवेणाज्याहुतिं - "पुनरुर्जा-[२] निवर्तस्वेत्यृचा जुहोति । अयं होमः पुनराधान होम इत्युच्यते । प्रधानयागः उपांशुरेव कुर्यात् ।

आश्वलायनमतेन प्रधानयागस्य याज्या पुरोनुवाक्या[3] -

अग्निः - "अधाह्यग्ने[4] क्रतोर्भद्रस्येत्यनुवाक्या ।
"आभिष्टे अद्यगीर्भिर्गृणन्तेति याज्या ।
स्विष्टकृते - "एभिर्नो[5] अर्कैरिति पुरोनुवाक्या ।
अग्नेतमद्याश्वंनस्तोमैरिति याज्या ।

---

(१) अथ पुनरुर्जासिहरय्ये - - आहुती जुहोति, बौ० श्रौ० ३।२ ।

(२) "पुनरुर्जा निवर्तस्व०" सं० सं० १।५।३, (१।५।३) ।

(३) आग्नेयं हविरधाह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्यगीर्भिर्गृणन्त एभिर्नो अर्कैरग्ने तमद्याश्वं नस्तोमैरिति संयाज्ये, आ०श्रौ० २।८।१४ ।

(४) अधाह्यग्ने क्रतोर्भद्रस्य० ऋ० सं० ४।१०।२ । आभिष्टेअद्य० ऋ० सं० ४।१०।४ ।

(५) एभिर्नोअर्कै० ऋ० सं० ४।१०।४, अग्ने तमद्याश्वंनस्तोमै० ऋ० सं० ४।१०।१ ।

बौधायनमतेन याज्यापुरोनुवाक्या[1] -

अग्नि: - "अग्नेतमद्य०" इति पुरोनुवाक्या

अभ्याह्यग्ने० इति याज्या ।

स्विष्टकृते आभिष्टेऽद्य० इति पुरोनुवाक्या । एभिर्नो अर्कैरिति याज्या ।

अनुयाजा[2]: -

[3] देवं बर्हिरग्ने वसुवने वसुधे यस्य वेत्त्विति प्रथम: ।

देवोनराशंसोऽग्नौ वसुवने वसुधे यस्यवेतु द्वितीय: ।

बुद्धिमदिन्दुमन्तावित्याचक्षते, तथानुवृत्तिरिज्या चेत्याश्वलायन सूत्रात्[4] ।

अग्निं बुद्धिमन्तमावह । अग्निमिन्दुमन्तमावहेत्यादिरीत्या आवाहन-

निगदादौ बुद्धिमदिन्दुमत्वयोरनुवृत्तिर्भवति ।

---

(१) अभ्याह्यग्ने० । आभिष्टेऽद्य० । एभिर्नोअर्कै० । अग्नेतमद्य० ।
तै० सं० ४।६।४ ।
हविषोऽग्नेतमद्याभ्याह्यग्न इति । स्विष्टकृतं निराहाभिष्टेऽद्य० ।
बौ० श्रौ० ३।२ ।

(२) तस्याऽनुयाजेषु विभक्ती दधाति । बौ० श्रौ० ३।३ ।

(३) देवं बर्हिरग्ने - - - - - - - - - - - - - - - - - - - - -
वसुधे यस्यवेत्त्विति । आ० श्रौ० ३।८ ।

(४) आ० श्रौ० २।८ ।

दक्षिणादानप्रतिग्रहे च विशेष: - [1]

अन्वाहार्यमासाद्य, रथं, वास:, अनड्वाहं, दक्षिणां ददाति ।

रथप्रतिग्रहे -

देवस्यत्वेत्यादि गृह्णामीत्यन्ते वैश्वानर: - प्रत्नथाना-क्मारुहदित्यृचं पठित्वा, राजात्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथं ते नामृतत्वमिति विशेष: ।

वास: - प्रतिग्रहे सोमायवास: इति ।

अनड्वाह - प्रतिग्रहे रुद्रायगामिति च विशेष: ।

पश्चात् अनुयाज प्रदानपूर्वकं ब्राह्मणतर्पणान्ता इष्टि: कर्तव्या [2] ।

इयमिष्टि: पौर्णमासतन्त्रेण सम्पद्यते ।

अग्निहोत्रस्य - काल: -

सायमपराह्णे सूर्यास्तसमयात्पूर्वमग्नि होत्रस्य प्रारम्भो भवति ।

---

(१) पुनराधेय दक्षिणा ददाति पुनर्निष्कृतं रथं पुनरुत्स्यूतं वास: - पुनरुत्सृष्टमनड्वाहम्, बौ० श्रौ० ३।३ ।

(२) संतिष्ठत एषेष्टि: सपूर्णपात्र विष्णुक्रमा, बौ० श्रौ० ३।३ ।

प्रातस्तु सूर्योदयानन्तरमग्निहोत्रस्य होमकालः प्राप्तः[1]। अग्निहोत्रहोमः सायंकाल एव प्रारभ्यते ।

अग्न्युद्धरणम् -

शरीरशुद्ध्यर्थमाचमनम्प्राणायामञ्च कृत्वा, तीर्थेन[2] प्रविश्य, गार्हपत्यस्य पश्चिमभागे उपविश्य, गार्हपत्यं प्रज्वाल्य, गार्हपत्य स्थित-मंगारस्यैकदेशं गृहीत्वा, दक्षिणाग्न्यायतने आदित्याभिमुखो निदधाति । प्रातःकाले एवमेव प्रकारेण अंगारान् गृहीत्वा, दक्षिणाग्न्यायतने दक्षिणाग्न्याभिमुखो[3] निदधाति । पश्चान्तरम् - [4]अजस्रपक्षश्चेत्तर्हि

---

(१) पुरादित्यस्यास्तमयाद्गार्हपत्यमुपसाधायान्वाहार्यपचनमाहृत्य ज्वलन्तमाहवनीयमुद्धरति सायमाहुतये०, बौ० श्रौ० ३।४ ।
उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वल्य - - - - - - - - - -
आहवनीयं ज्वलन्तमुद्धरेत्, आ० श्रौ० २।२।१ । एवं प्रातः ।
उपोदयं व्युषितउदिते वा, आ० श्रौ० २।४।२३-२४ ।

(२) तीर्थं - इध्ममपरेणा प्रणीते । चात्वालं चात्वालवत्सु एतत्तीर्थ-मित्याचक्षते, आ० श्रौ० १।१।५-७ ।

(३) सायमाहवनीयमुद्धरन् पुरस्तात् प्रत्यङ्मुखो निवपेत्, प्रातराहवनीयमुद्धरन् पश्चात् प्राङ्मुखो निदधाति, बौ० श्रौ० पृ० १०४, निदध्यादादित्यमभिमुखः । एवं प्रातर्व्युष्टायां तमेवाभिमुखः, आ० श्रौ० २।२।४-५ ।

(४) अजस्रः - सततं प्रज्वलितः अग्नयः अजस्रमित्युच्यते ।

अग्न्युद्धरणस्य प्राप्तिर्न भवति ।

अग्निप्रणयनम् -
-------------

आहवनीयार्थं गार्हपत्यस्थितज्वलन्तमंगारस्यैकभागं "देवंत्वा देवेभ्यः श्रियाउद्धरामि" इति मन्त्रेणोद्धरणम् । उद्धृतमंगारं "उद्ध्रियमाण-उद्धर०" इति मन्त्रसहितेन प्राक् प्रणयति । प्रणीतमग्निमाहवनीयायतने "अमृताहुतिममृतायां०" इति मन्त्रेण आदित्याभिमुखो[1] निदधाति । सायं प्रणयनसमये प्रणयनमन्त्रमध्ये "अन्हा" शब्दस्योहः कर्तव्यः । प्रातः प्रणयनसमये मन्त्रमध्ये "अन्हा" शब्दस्य स्थाने "रात्रि" शब्दस्य ग्रहणं भवति । तथैव प्रणीतमंगारमाहवनीयाभिमुखः "अमृताहुति०" मन्त्रेण निदधाति ।

द्रव्यविचारः -
-----------

सायं प्रातरग्निहोत्रहोमार्थं द्रव्याणि (१) पयः, (२) यवागू, (३) ओदनः, (४) दधि, (५) सर्पिरुक्तानि । नित्याग्निहोत्रहोमार्थं पयोद्रव्यस्य नित्यं ग्रहणं भवति । शेषद्रव्यस्य कामनापरत्वेन ग्रहणमुक्तम् ।

---

(१) देवंत्वा देवेभ्यः श्रियाउद्धरामीत्युद्धरेत् । उद्ध्रियमाण - - - - - - - - - - - - - - - - - - प्रणयेत् । अमृताहुतिममृतायां० । आ० श्रौ० २।२।२-४ ।

यथा - ग्रामकामनाचेत् तर्हि "यवागू" द्रव्यस्य ग्रहणम् । इन्द्रियकामनाचेत् "दधि" द्रव्यग्रहणम् । तेजः कामनार्थं "सर्पिषः" ग्रहणं भवति । पर्वणिसमये यवागू द्रव्यस्य ग्रहणं प्रामुख्येन प्रतिपादितम् । सायं प्रातर्होमयोरेक द्रव्यत्व-मेककर्तृकत्वं च भवति[1] ।

संभाराः[2] -
----------

नित्याग्निहोत्रहोमसिद्ध्यर्थमावश्यकसंभाराः - (१) कमण्डलुः, (२) आसनम्, (३) आज्यस्थाली, (४) स्रुक्, (५) स्रुवा, (६) अग्निहोत्री (धेनू) (७) पयोद्रव्यम्, (८) समिधः, (९) आज्यमिति[2] ।

देवता -
--------

सायमग्निहोत्रहोमे "अग्निः" प्रधानदेवता भवति प्रातस्तु सूर्यः प्रधानोस्ति । उभयत्र "प्रजापतिः" देवता द्वितीयः[3] ।

---

(१) पयसानित्यहोमः । यवागूरोदनोदधिसर्पिर्ग्रामकामान्नाद्यकामेन्द्रिय-कामतेजस्कामानाम् । आ० श्रौ० २।३।१-२, यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात्, आ० श्रौ० २।४।२ ।

(२) अथैतान्यग्नि होत्र पात्राणि प्रक्षालितान्युत्तरेण गार्हपत्यमुप-सादयति, कूर्चे वा - - - - - - - - - - - - - - - - - -
उदीचीं स्थापयति, बौ० श्रौ० ३।४ ।

(३) अग्नये सायं सूर्याय प्रातः, शां० ब्रा० २ ।

संकल्पप्रकार: - [1]

सायं प्रातर्होमौ मिलित्वा अग्निहोत्रं कर्माख्यायते यस्मात् कारणात् गार्हपत्यस्य पश्चिमभागे - उपविश्य प्राणानायम्य, तिथ्यादि संकीर्तनपूर्वकं - "श्रीपरमेश्वरप्रीत्यर्थं सत्याधिकारे यावज्जीवं सायं प्रातरग्निहोत्रहोमौ करिष्ये" इति समष्टिरूपेण संकल्पं कुर्यात् । पुन: प्राणानायम्य अग्निहोत्र होमारम्भमाण: - दशहोतारं संग्रहं होष्यामि" इति द्वितीयं संकल्पं कुर्यात् । तदनन्तरं श्रीपरमेश्वरप्रीत्यर्थं सायमग्निहोत्रं पयसा होष्यामि । प्रात:काले केवलमाचम्य, प्राणायामानन्तरं श्रीपरमेश्वर प्रीत्यर्थं प्रातरग्निहोत्रं पयसा होष्यामीति संकल्पं कुर्यात् ।

अग्निहोत्रहोमविधि: - [2]

सायमग्निहोत्रहोमार्थं प्रथममग्न्युद्धरणं कुर्यात् । तदनन्तरमग्निप्रणयनम् । पश्चात् समष्टिरूपेण संकल्पो भवति । दशहोतृहोमार्थमध्वर्युवरणम् । अध्वर्यु: - दशहोतृहोमार्थं तूष्णीमग्निप्रणयनं कुर्यात् । पश्चादाज्य संस्कारादिकं कृत्वा स्रुचिमध्ये चतुर्गृहीतं गृहीत्वा, "चित्तिस्रुक्०" आहुतिं

---

(१) द्रष्टव्य: कृताधानप्रयोगस्य, पृ० २५ ।
(२) अंगिरसो वै सत्रमासत० तै० ब्रा० २।१ ।
स वै सायं च प्रातश्च जुहोति० । शां० ब्रा० २ ।

दद्यात्[1]। यजमानः वाचस्पते ब्रह्मण इदं नममेति त्यागं पठेत्। कूष्माण्डहोम-पक्षश्चेत्तर्हि अस्मिन्नेवाग्नौ कूष्माण्डहोममपि जुहुयात्। पुनः आचम्य, प्राणानायम्य, श्रीपरमेश्वरप्रीत्यर्थं सायमग्निहोत्रं पयसा होष्यामीति संकल्पयेत्। पश्चात् सोदकेन पाणिना दक्षिणाग्निं, गार्हपत्यमाहवनीयं च ईशान्यादिदिशि प्रारम्य तूष्णीं त्रिस्त्रिः परिसमुह्य, पुनः पुनरुदक-मादाय तथैव "ऋतं त्वा सत्येन परिषिञ्चामि। मन्त्रेण पर्युक्षामि सायंकाले। प्रातःकाले तु "सत्यं त्वर्तेनपरिषिञ्चामि" मन्त्रेण पर्युक्षामि[2]।

अधिश्रयणम् -

पश्चात् "तन्तुं तन्वन्रजसो०" इति मन्त्रेण गार्हपत्यादारभ्याऽऽहवनीयपर्यन्तमुदकधारां हरेत्[3]।

---

(१) दशहोत्रोद्धृत्य प्राङ्ङुद्रति, बौ० श्रौ० ३।४ ।
विच्छिन्कु० तै० आ० ।

(२) अथ तदग्निहोत्रमग्रेणाहवनीयं पर्याहृत्य पूर्वयाद्वारा प्रपाद्य जघनेन गार्हपत्यमुपसाद्याथ परिषिञ्चति ऋतं त्वा सत्येन०, बौ० श्रौ० ३।४-५ । ऋतं त्वा सत्येन परिषिञ्चामि० सत्यं त्वर्तेन परिषिञ्चामि०, तै० ब्रा० २।१।११, ५।२।६ । ऋत-सत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत्त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायानन्तर्यैविकल्पः० पर्युक्षेत् सत्यऋताभ्यां त्वेति० आ० श्रौ० २।४।२५ । आ० श्रौ० २२।११-१३ ।

(३) गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन् रजसोभानुमन्विहीत्या हवनीयात्, आ०श्रौ० २।२।१४, ऋ० सं० १०।५३।६ ।

गार्हपत्यस्य पश्चात् उपस्थेनोपविश्य "सुहुतकृत: स्थ सुहुतं करिष्यथ" इति मन्त्रेण उदगंगारानपोहेत् । "अधिश्रितमप्यधिश्रितं हि" इति मन्त्रेण अधिश्रयति[1] । "अग्निस्तेजोमाहाषीं:" इति मन्त्रेण ज्वलतातृणेन अधिश्रितमवज्वलयति । तत्रैव तृणं निधाय पयोदोहन पात्रालनोदकं पूर्णस्रुवेण "शांतिरस्यमृतमसि पाठेनाधिश्रितं सिञ्चति[2] ।

पर्यग्निकरणम् -
-------------

ज्वलतातृणेन "अन्तरितं रक्षोन्तरिता०" इति मन्त्रेण प्रथमं पर्यग्निकरणं करोति द्विस्तूष्णीम् । उल्मुकम्परित्यज्य स्तोकसहितं कर्षन्निव "दिवेत्वा, अन्तरिक्षा यत्वा, पृथिव्यैत्वा" इति मन्त्रेण उदगुद्वासयति[3] ।

स्रुक् स्रुवं च संस्कार: -
-----------------

"सुहुतकृत:स्थसुहुतमकार्ष्ट" इति मन्त्रेण अंगारान् प्रत्यूहति ।

---

(१) आ० श्रौ० २।२ । अथ प्रदक्षिणमावृत्य - - - - - - - - - - - - - - - - - - अधिश्रयति, बौ० श्रौ० ३।५ ।

(२) अधिश्रितमवज्वलयेत्० आ० श्रौ० २।३।३-६, अभिद्योतनेनाभिद्योतयत्यग्निस्तेजोमा प्रतिधाक्षीदिति, अमृतमसीति,बौ०श्रौ०३।५ ।

(३) पुनर्ज्वलता परिहरेत्० । समुदन्तं कर्षन्निव० । आ०श्रौ०२।३।७-८, पुनरेवाभिद्योत्य त्रि: पर्यग्निकरोत्यन्तरितं रक्षो० बौ०श्रौ० ३।५

गार्हपत्ये "प्रत्युष्टं रक्षः०" इति मन्त्रेण स्रुक् स्रुवौ प्रतितपति[1]।

हविःग्रहणम् -
-------------

अग्निहोत्रस्थाल्योत्तरतः स्रुवमासाद्य, पश्चात् स्रुवहस्त एव "ओमुन्नयानि" इत्यति सञ्जयीत सायंकाले, प्रातःकाले तु "ओं मुन्नेष्यामीति मन्त्रस्य पाठं कुर्यात् । स्रुवं स्थाल्योर्मध्ये स्थापयित्वाऽपरेण वेदिं पूर्वेण गार्हपत्यमुत्तरेण दक्षिणाग्निं गत्वा, आहवनीय समीपे दक्षिणतो-दङ्०मुखोपविश्य "ओमुन्नय इत्यति सृजेत् । सर्वत्र त्रिमात्रं प्रणवं कुर्यात् । पश्चादग्रेणाहवनीयमेत्य होमद्रव्यं पूर्णस्रुवेण स्रुचिमध्ये (१) भूरिडा, (२) भुव इडा, (३) सुवरिडा, (४) भूर्भुवः सुवरिडा ( आश्वलायनमतेन वृध इडा इति ।) मंत्रद्वारा क्रमेण चतुरुन्नयति[2]। स्थाल्यां स्रुवं प्रत्यगग्रं निधाय, स्रुचिप्रागग्रां समिधं निधाय आज्यद्वयं "सजूर्देवैः सायं यावभिः" (प्रातःकाले प्रातः शब्दस्य ऊहोकर्तव्यः) इति मन्त्रेण समिधा-सहाग्निहोत्रहवणीमादायोपावहरण कूर्चमधः कृत्वा, कूर्चं त्यक्त्वा, जघनेन

---

(१) वर्त्मकुर्वन्नुदगुद्वास्य० गार्हपत्ये प्रतितपति प्रत्युष्टं बौ० श्रौ० ३।५, सुहुतकृतः स्थ - - - - - - - - - - - - - - - - - -
अरातय इति, आ० श्रौ० २।३।६ ।

(२) उत्तरतः स्थाल्याः स्रुचमासाद्यो० । आ० श्रौ० २।३।१०-१४ ।
दक्षिणेन स्रुवं समिधं च सव्येनाग्निहोत्र हवणीं देवस्यत्वा० कूर्चे स्रुचं निधाय यजमानमामन्त्र्यत० अथ चतुरः स्रुवानुन्नयति० बौ० श्रौ० ३।५ ।

गार्हपत्यमुदगग्रे उपसादनीय कूर्चे आनीयतात् "नमईशानाय" इति मन्त्रेण सादयति ।[1]

हविः प्रदानम् -

पश्चात् "रजतां त्वाग्निज्योतिषं०" इति मन्त्रेण समिधमादध्यात् । प्रातःकाले "हरिणीं त्वा सूर्यज्योतिष" मिति । समिधं स्पृष्ट्वा तया देवतयां गिरस्वद्ध्रुवासीद०" इति मन्त्रेण जपति । "विद्युदसिविधमे०" इति मन्त्रेण अपउपस्पृशेति । अग्नयेज्योतिष इदं नममेति त्यागं पठेत् । प्रातःकाले सूर्याय ज्योतिष इदं नममेति त्यागं कुर्यात् । पश्चात् समिध्यादोप्तायामग्निसूर्यौ ध्यात्वा "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति मन्त्रेण प्रथमामाहुतिं जुहोति । प्रातःकाले "सूर्योज्योतिर्ज्योतिः सूर्यस्वाहा" इति मन्त्रः । अग्निसूर्याभ्यामिदं स्रुचं सकृज्ज्वालोपरि- प्राङ्०नीत्वा कूर्चे निधाय प्रदक्षिणमावृत्य "उपप्रेतसंगच्छ्वं०" इति मन्त्रेण गार्हपत्यं प्रतीक्षते । पश्चात् पूर्वस्याहुतेरुत्तरतः तदधिकद्रव्यमसंस्पृष्टामुत्तराहुति "प्रजापतये स्वाहा" इति मनसा उपांशुर्जुहोति । प्रजापतय इदं नममेति व

---

(१) स्थाल्यां स्रुवं - - - - - - - - - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - जघनेन आहवनीयमुपसादयति
कूर्चे नम ईशानाय०, बौ० श्रौ० ३।५ । स्थालीमभिमृश्य समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वा०, आ० श्रौ० २।३।१५ ।

त्यागोऽपि उपांशुरेव-करणीयः[1]। स्रुचमग्नेरुपरि त्रिर्नीत्वानिवाल्य कूर्चे निधायापउपस्पृशति "वृष्टिरसिवृश्चमे०" इति मन्त्रेण। स्रुगग्रमारभ्य प्रत्यगं गुलिनाधो मुखेन पाणिना आबिलमवसृज्य, स्रुकउत्तरतः कूर्चे तादृशेनैवपाणिना "औषधीभ्यस्त्वौषधीर्जिन्व" इति मन्त्रेण अवमार्ष्टि। यजमानः प्राचीनावीति भूत्वा, पितृभ्य इदं ब्रूयात्[2]।

आश्वलायनमतेन[3] - स्रुचमाहवनीयेत्रिरनुकम्प्य, सकृत् दक्षिणेनानुत्तानेन पुष्करमवसृज्यलेपं "पशुभ्यस्त्वा" "पशुभ्य इदं नमम" पूर्वक कुशमूलेषु निमार्ष्टि। कुशमूलानां दक्षिणतोत्तानाऽऽङ्गुलीः कृत्वा, प्राचीनावीति भूत्वा "स्वधापितृभ्यः" इति पवित्रेणोदकं तत्रक्षिपेत्। पितृभ्य इदं नममेति त्यागं वदेत्। "वृष्टिरसिवृश्चमे०" इति मन्त्रेण अपउपस्पृशति। उपोत्थाय आहुतिं कटाक्षेण ईक्षमाणः "भूर्भुवः स्वः सुप्रजा०" इति अनुमन्त्रयते। तथा

---

(१) अंत्रतां समिधं मध्यत आहवनीयस्याभ्यादधाति रजतां त्वा
- - - - - - - - - - - - - - - - - - - - -
प्रजापतयेस्वाहा। बौ० श्रौ० ३।५-६। जान्वाच्यसमिधमादध्याद्रजतांत्वा - - - होमेषु सर्वत्र, आ० श्रौ० २।३।१५-१६।

(२) अथ त्रिरतिवाल्य - - - - - - - - - - - - - - - - - - -
पितृन्जिन्वेति, बौ० श्रौ० ३।६।

(३) भूयिष्ठं स्रुचि शिष्ट्वा त्रिरनुकम्प्यावमृज्य कुशमूलेषु - - - - -
तिसृभिः, आ० श्रौ० २।३।२०-२६। अग्नआयूंषि। अग्निऋषिः पवमानः। अग्नेपवस्वस्वपा०।
ऋ० सं० ९।६६।१९-२१।

च आग्नेयीभिः "अग्नआयूंषि पवस" इति तिसृभिरनु मन्त्रयते ।

हुतशेषप्राशनम्[1] -

---

हुतशेषं द्विः प्राशनाति । "प्रजां ज्योतिः" इति मन्त्रेण प्रथमं प्राशनाति । पुनः आचम्य, अपसव्यमुदङ्मुख आवृत्य स्रुग्गतद्रव्यं हस्ते कृत्वा, "इदं हविः प्रजननं मे अस्तु०" इति मन्त्रेण भक्षयति । स्रुच निर्णिज्य, आहवनीये निष्टप्य अद्भिः पूर्णां आहवनीयस्य उत्तरतः "सप्तऋषीन्प्रीणामि०" इति मन्त्रेणाकिंचिन्नियति । सप्तऋषिभ्य इदं नममेति त्यागं पठेत् । पुनः गार्हपत्यस्य पश्चात् "इदमहमग्नौ०" इति मन्त्रेण निनयति । अग्नये वैश्वानरायेदं नममेति त्यागं वदेत् । "अदित्यामदित्या०" इति मन्त्रेण अन्तर्वेदि किंचिन्नियति । अदित्या इदं नममेति त्यागं पठेत् । स्रुचं कूर्चे निधाय अग्निषु क्रमेण शकलान् प्रदीप्य प्रज्वाल्य पूर्ववत् परिषिन्चति । आश्वलायनमतेन - "आयुषे त्वा प्राशनामि"[2] इति मन्त्रेण प्रथमं भक्षयति । "अन्नाद्यायत्वा" मन्त्रेण द्वितीय भक्षणं कुर्यात् । गार्हपत्ये तूष्णीं "अग्नये सर्वेशपतये स्वाहा" इति मन्त्रेण प्रथमं

---

(१) अथाऽपउपस्पृश्य द्विरंगुल्या प्राश्नाति - - - - - - - - - - ब्राह्मणम्, बौ० श्रौ० ३।६-७ ।

(२) आयुषे त्वा प्राशनामीति - - - - - - - - - - - - - प्रताप्यान्तर्वेदिनिदध्यात्, आ० श्रौ० २।४।७-१५ ।

समिधमादाय, "प्रजापतयेस्वाहे" ति द्वितीयसमिधमादायेति । क्रमेण अग्नय इदं नमम । प्रजापतय इदं नममेति त्यागं पठेत् । एवमेव दक्षिणाग्नौ "अग्नयेसंवेशपतयेस्वाहा" इति मन्त्रेण समिधं दद्यात् । द्वितीयं "प्रजापतये स्वाहा" इति मन्त्रेण पूर्ववत् । क्रमेण यथालिङ्गं त्यागं वदेत् । पश्चात् "त्रिः सर्पदेवजनेभ्यः स्वाहेति" मन्त्रेण अभ्यात्ममपस्रुचानिनयते । पश्चात् विहारस्य प्रागुदग्देशे पूर्णाश्चतस्रः स्रुचौ निनये देकैकेन मंत्रेण । मन्त्राः - (१) ऋतुभ्यः स्वाहा । (२) दिग्भ्यः स्वाहा, सप्तऋषिभ्यः स्वाहा । (४) इतरजनेभ्यः स्वाहेति । तथा च "पृथिव्याममृतं जुहोम्यग्नयेवैश्वानराय-स्वाहा" इति मन्त्रेण कुशदेशे निनयेत् । "प्राणममृतेजुहोम्यमृतं प्राणे जुहोमि-स्वाहा" इति मन्त्रेण गार्हपत्यस्य पश्चात् निनयेत् । तदनन्तरमाहवनीये स्रुचप्रतपनं कृत्वा, अन्तर्वेदि देशे निदध्यात् ।

उपस्थानम्[१] -

यज्ञोपवीति भूत्वा यजमानायतने तिष्ठन् "उपप्रयन्तो अध्वरं" मित्यारभ्य "चित्रावसोस्वस्तितेपारमशीये" ति मन्त्रेण आहवनीयं रात्रिं चोपतिष्ठते । पश्चात् "इन्धानास्त्वा०" । इति मन्त्रेण आहवनीये समिध-मादाय, "संत्वमग्ने०" इत्यादि मन्त्रेणोपतिष्ठते । "संपश्यामि प्रजा०"

---

(१) उपस्थानविधिः, बौ० श्रौ० ३।८ ।
सर्वमन्त्राः, तै० सं० १।५।५-६ ।

इति मंत्रेण गृहांश्च पशूंश्चोपतिष्ठते । "संहितासि०" इति मन्त्रेणाग्निहोत्रीयंवत्समभिमृशति । पश्चात् "उपत्वाग्ने" इत्यारम्य, "अग्नयेगृहपते" इति मन्त्रान्तमुपस्थानं कुर्यात् ।

आश्वलायनमतेन - पूर्वेणाहवनीयं विहारस्य दक्षिणदेशं गत्वा, तस्य तस्याग्नेर्दक्षिणतउदङ्०मुखतिष्ठंस्तिस्रस्तिस्रः समिध आदध्यात् । केवलं प्रथमसमिदाधानं समन्त्रकं भवति । मंत्राः - आहवनीये "दीदिहि" इति गार्हपत्ये "दीदाये" ति । अन्वाहार्यपचने "दीदिवाये" ति । पश्चात् पूर्ववत् परिसमूहनं पर्युक्षणं च कुर्यात्[१] ।



---

(१) अग्रेणाऽऽहवनीयं परीत्य - - - - - - - - - - - - - -
पूर्वे तु पर्युक्षणात्, आ० श्रौ० २।४।१७-२२ ।

प्रयोग संख्या.... .... .... ....

दिनांक.... .... .... .... .... ....

# दर्शपूर्णमास विहारः

[बौधायनश्रौतसूत्रानुसारेण]

(५)




१ गार्हपत्यः
२ अन्वाहार्यपचनः
३ आहवनीयः
४ वेदिः
५ उत्करः

(स्केल- १ इंचः २० अंगुलानि)

# द्वितीयाध्यायः

## उभयोः श्रौतसूत्रयोः रीतिं विविच्य दर्शपूर्णमास-प्रकरणस्य प्रयोगानुष्ठानक्रमानुसारो विचारः

दर्शपूर्णमासप्रकरणम् - संकल्प:[१] :-

वेधुत्करयोर्मध्येन प्रपद्य गार्हपत्यस्योत्तरत्वे उपविश्य "इडादेवहू:०"[२] इति जपति । पश्चात् गार्हपत्यस्य दर्भेष्वासीनो दर्भान् धारयमाण: पवित्रपाणि: प्राणानायम्य, पत्न्यासह विष्णुं स्मृत्वा "या: पुरस्तात्० । देवागातुविदो०"[३] । अदार ३ हि । सत्येनत्वा ह्वयामि । आकूत्यैत्वा० । आकूतिमस्य०" इति मन्त्रान् जपति । दक्षिणहस्ते जलं गृहीत्वा उपांशुना अमुकमासे श्रीपरमेश्वर प्रीत्यर्थं पौर्णमासेन हविषा यक्ष्ये । किन्तु अमावस्योत्तर प्रतिपदि पौर्णमास-शब्दस्थाने अमावास्येनेति पदस्योह: कर्तव्य: । तथा च अयमेव संकल्प: त्रिरुपांशु त्रिरुच्चै: कुर्यात् । तदनन्तरं यजमान: "तन्मऋध्यतां०" इति मन्त्रं ब्रूते । ऋत्विज: अपि "तन्मऋध्यतां" ० इति मन्त्रं वदन्ति । स्वीकारार्थं यजमानेन "ओंतथा" इत्युच्यते[२] ।

---

(१) प्राक्कूलान् दर्भान् संस्तीर्य तेषु प्राङ्मुखो यजमान उपविश्य जपति या: पुरस्तात्० देवागातुविदो० "अद एहि", "सत्ये नत्वा०", आकूत्यै त्वा० आकूतिमस्यावसे० मनसात्रि: संकल्पयतेत्रिरुच्चै: स्वर्गकामोदर्शपूर्णमासाभ्यां यक्ष्य इति० तन्मऋध्यतां० तऋध्यतां० ओं तथेति प्रतिवचनम् । बौ० श्रौ० २।१ ।

(२) इडादेवहू:० तै० सं० ३।३।२ ।

(३) देवागातुविदो०, तै० ब्रा० ३।७।४ ।

अन्वाधानम् -

पौर्णमासहविः, व्रीहिमयः पुरोडाशोद्रव्यम्, आज्यं च, पञ्च-प्रयाजाः, अग्नीषोमावाज्यभागौ, अग्निः, विष्णुः, अग्नीषोमौ, इन्द्रो-वैमृधश्चेति प्रधानदेवताः । अमावास्यायां अग्निः विष्णुः इन्द्राग्नी इति प्रधानदेवताः, संवत्सरानन्तरं महेन्द्रस्य ग्रहणं भवति ।

अध्वर्युवरणं जपं च -

सङ्०कल्पानन्तरमस्मिन्कर्मणि अध्वर्युत्वामहं वृणे इत्येन प्रकारेणाध्वर्युवरणं कर्तव्यम् । अध्वर्युः यजमानादिभिः - संस्कृतो वृतोस्मि कर्मकरिष्यामिति वचनं ददाति । पश्चादध्वर्युराचम्य, वेद्युत्करयोर्मध्येन प्रपद्य, गार्हपत्यस्योत्तरत उपविश्य इडादेवहूः०[1] । देवागातुविदो०[2] । मनसस्पतिना० । इति मन्त्रान् जपति ।

उद्धरणं समिधाधानं च -

उद्धरणप्रकारश्चेत्तर्हि अग्निद्वयं विहृत्य अध्वर्युः यजमानो वा गार्हपत्यस्य

---

(१) इडादेवहूः, तै० सं० ३।३।२ ।

(२) देवागातुविदो०, तै० ब्रा० ३।७।४ ।

पश्चात् पद्मासनेनोपविश्य तिस्रः स्थूलाः समिधः समंत्रक मभ्यादधाति[1]। मन्त्रः[2] - ममाग्नेवर्चो० । ममदेवा० मयिदेवा० । "अग्नयइदं नमम" इति समिधः प्रदीपानन्तरं त्यागः कर्तव्यः । एवमेव प्रकारेण दक्षिणाग्नावपि तिस्रः स्थूलाः समिधः मन्त्रपूर्वकमभ्यादधाति मंत्रः[3] - मह्यं यजन्तु० । देवीः षडुर्वी० । अग्निर्मन्यु० । इति । तदनन्तरमपरेण गार्हपत्यानाहवनीयमागत्य प्रत्यगुदक् प्रहवस्तिष्ठन् "धाताधातृणां[4]० । उरुव्यचानो० । येन: सपत्ना० । समन्त्रकमेकैकं समिधमभ्या दधाति ।

अग्नेरुपस्थानम् -

पश्चात् आहवनीयस्योत्तरतस्तिष्ठन् "अर्वान्वमिन्द्रे० मंत्र सहितेनोपासते । ततः अध्वर्युर्यजमानः पत्नी च तीर्थेन निर्गत्य अग्रेणाहवनीयं परीत्य स्वायतन उपविश्य तिरः पवित्रमप आचामति "पयस्वती[5]०" समन्त्रकं प्रथमं ततो वारद्वयं तूष्णीम् ।

परिषेकं समिधाधानं च -

आहवनीयं परिषिच्य, अग्नेव्रतपते० । वायोव्रतपते० । आदित्यव्रतपते० ।

---

(१) त्रीणिकाष्ठानि गार्हपत्येऽभ्यादधाति त्रीण्यन्वाहार्य पचने त्रीण्याहवनीये । बौ० श्रौ० १।१ ।

(२) ममाग्ने० । ममदेवा० । मयिदेवा० । ऋ० सं० १०।१२८।१-३ ।

(३) मह्यं यजन्तु० ।देवीः षडुर्वी० । अग्निर्मन्यु० । ऋ०सं० १०।१२८।४-६ ।

(४) धाताधातृणां० । उरुव्यचानो० । येनः सपत्ना० ।ऋ०सं०१०।१२८।७-९

(५) पयस्वती० । तै० सं० १।१।१० ।

वायोव्रतपते० । आदित्यव्रतपते०[1] । व्रतानां व्रतपते० । एकैकं समिधं समन्त्रकमादधाति, क्रमेण अग्नयव्रतपतय इदं नमम, वायवेव्रतपतय इदं नमम, आदित्यव्रतपतय इदं नमम, व्रतानां व्रतपतय इदं नममेति त्यागः कर्तव्यः । ततराहवनीयं पुनः परिषिञ्चति ।

शाखाछेदनम्[2] -

पश्चादध्वर्युस्तूष्णीमसिदमादये वेयुत्करयोर्मध्येन निर्गत्य, प्राचीमुदीचीं प्रागुदीचीं वा दिशं गत्वा पलाशस्य शम्या वा प्राचीमुदीचीं वा शाखां "इषेत्वोर्जेत्वा" इति मन्त्रेण छिनत्ति । "इमां प्राची०"[3] मन्त्रेण शाखा हरति ।

वत्सापाकरणम्[4] -

वायवस्थोपायवस्थं इति मन्त्रेण षडवरार्धान्वत्सानपाकरोति । "देवो वः सविता०" इति मन्त्रेण वत्समातुः प्रेयति । "ध्रुवा अस्मिन्" मंत्रेण

---

(१) अग्नेव्रतपते० । वायो० । आदित्य० । तै० ब्रा० ३।७।५ ।
(२) अथास्य व्रतोपेतस्य पर्णशाखामाच्छेति प्रा० वोद० वा० - - - - स्वेति० । इषे मंत्रांशः, तै० सं० १।१ । बौ० श्रौ० १।१ ।
(३) इमां प्राची० । तै० ब्रा० ३।७।४ ।
(४) तया वत्सानपाकरोति वायवस्थोपायवस्थेत्यघ्न्यां मातुः प्रेयति देवोवः सविता० ध्रुवा० अस्मि० - - - - - - - - - - - - - गृहति यजमानस्य पशून् पाहीति, बौ० श्रौ० १।१ । मन्त्रविभागः देवोवेति । तै० सं० १।१।१ ।

यजमानमोक्षते यथागमनमागत्य गार्हपत्यस्योत्तरत: 'यजमानस्य०' मंत्रेण शाखा-मूर्ध्वमुपगूहति ।

अस्सिंस्कार: -[1]

ततः अध्वर्युः जघनेन गार्हपत्य समीपे तिष्ठन् 'देवस्यत्वा०' इति मन्त्रेण असि ग्रहणं करोति । 'यज्ञस्य घोषदसि०' मन्त्रेणाभि मंत्रयते । 'प्रत्युष्टं रक्ष:' इति मन्त्रेण गार्हपत्ये वज्रस्य प्रतपनं करोति । 'प्रेयमगात्०' इति मन्त्रेण आहवनीय देशं गच्छति । 'इहबर्हिरासदे' इति मन्त्रेण वेदि-मवेक्षते ।

बर्हिसंस्कार:[2] -

दर्भदेशं गत्वा प्रस्तरपर्याप्तं दर्भमुष्टिं 'देवानां परिषूतमसि' मन्त्रेण

---

(१) अथ जघनेन गार्हपत्यं तिष्ठन्नसिंद वाअवपशुं वादते देवस्यत्वा सवितु: - - - - - - - - - - - - - - - - इह बर्हिरासद इति वेदिं प्रत्यवेक्षते, बौ० श्रौ० १।२ ।

(१) यज्ञस्यघोषदसि - - - - - - - - - इहबर्हिरासदे । तै०सं० १।२ ।

(२) अथ तां दिशमेति यत्र बर्हिर्वेत्स्यन्मन्यते - - - - - त्रीन्वा पन्च वा सप्तवा नववैकादश वा यावतो वालं मन्यते । बौ० श्रौ० १।२ ।
देवानां परिषूतमसि० - - - - - - - - - - - - - - - - - - - - पृथिव्या: सम्पृच: पाहि, तै० सं० १ ।२ ।

परिगृह्णाति । "वर्षवृद्धमसि" मन्त्रेण असि साद्यायुयेनोर्ध्वमुन्मार्ष्टि, असिं छेदनदेशे "देवबर्हिः०" मन्त्रेण निदधाति । "आच्छेत्तातमारिषम्" इति मन्त्रेणाच्छिनत्ति । अपउपस्पृश्य, पश्चात् "देवबर्हिः शतवल्शं विरोह" मन्त्रेण छेदनमभिमार्ष्टि "सहस्रवल्शा०" इति मन्त्रेण आत्मानं प्रत्यभिमार्ष्टि । अपउपस्पृश्य, सर्वं छित्वा प्रस्तरचिन्हितं कृत्वा "पृथिव्याः संपृचः पाहि" इति मन्त्रेण अधो निदधाति । अत ऊर्ध्वं तूष्णीं त्रीन् पञ्चसप्तबर्नवैकादशमुष्टिर्वालुनाति ।

शुल्वनिर्माणम् [१]-

ततः संधित्रययुक्तं प्रदक्षिणमावेष्टितं द्विगुणं कृत्वा प्रदक्षिणं वेष्टितं शुल्वं करोति । तदुत्तरादिशि "आदित्यैरास्नासि" मन्त्रेण निदधाति ।

कुशमुष्टिबन्धनप्रकारः [२] -

शुल्वेदर्भमुष्टीं निधाय तदुपरि प्रस्तरं "सुसंभृतात्वा संभरामि" इति मन्त्रेण संभरति । "इन्द्राण्यैसंनहनं" मन्त्रेण संनह्यति । "पूषातेग्रन्थिंग्रथ्नातु"

---

(१) अथ त्रिरन्वाहितं शुल्वं कृत्वापसलै रावेष्टयत्यदित्यै रास्नासीति । बौ० श्रौ० १।२ ।

(२) तदुदीचीनाग्रं निधाय तस्मिन् प्रस्तरमभि संभरति सुसंभृतात्वा संभरामीति - - - - - - - - - - - - - - तदुपरवि निदधाति यत्र गुल्वं मन्यते, बौ० श्रौ० १।२ ।

इति मन्त्रेण ग्रन्थिबन्धनं करोति । 'सतेमास्थातुप्तु इति मन्त्रेण पश्चात् प्रागग्रमुपगूहति । तूष्णीं शोष्णांतुणं निधाय, बर्हिः 'बृहस्पतेर्मूर्ध्नाहरामि' उर्वन्तरिक्षमन्विहि' मन्त्राभ्यां गार्हपत्यमेति । उत्तरेण गार्हपत्यं 'देवंगममसि' इति मन्त्रेण अधो निदधाति, गुप्तं सादयति ।[0]

इध्मबंधनप्रकारः[१] -
---------------

तूष्णीं परिभोजनीयादीनि सकृदाच्छिन्नं च लुनाति । तथैव शुल्बं कृत्वा, तूष्णीमुदीचीमग्रं वा त्रिर्तीयैकविंशति दारुकमिध्मं 'यत्कृष्णो०' मन्त्रेण बध्नाति ।

वेदिनिर्माणम्[२] -
--------------

ततो अमायां वेदं निमार्य, वेदिं करोति प्रागुत्तरात् परिग्रहात् । 'अयं वेदः०'[३] इति मन्त्रेण वेदं गृह्णाति । वेदेन वेदिमुदगपवर्गं प्रागवसानं

---------------------------------------------

(०) सुसंभृतात्वा संभरामि० इन्द्राण्यैसन्नहनं - - देवं गममसि, बौ०श्रौ०१।२ ।

(१) तथैव त्रिरन्वाहितं शुल्बं कृत्वैकविंशति - - - - - - - - यत्कृष्णो० बौ० श्रौ० १।२ । यत्कृष्णोरूपं कृत्वा० तै०ब्रा० ३।७।४ ।

(२) वेदं करोति० वेदिं करोति प्रागुत्तरात्परि ग्राहात् । बौ० श्रौ० १।२ । आददे इत्यारभ्य० - - - - - - - - - - - - - - देवस्य सवितुः सर्वे० मन्त्रभागः, तै० सं० १।१।६ ।

(३) अयं वेदः पृथिवी०, तै० ब्रा० ३।७।६ ।

[1] "वेदेनवेदिं०" मन्त्रेण त्रिवारं सम्मार्ष्टि, प्रथमं समन्त्रकं द्विस्तूष्णीम् । वेदं निधाय वेद्याः पश्चात्छिन्न् दर्भाभ्यां सहस्फ्यं "देवस्यत्वा मन्त्रेणादत्ते, तं स्फ्यं सव्य हस्ते गृहीत्वा, दक्षिणहस्तेन "इन्द्रस्य मन्त्रेणाभिमन्त्रयते । दर्भं दक्षिणहस्ते कृत्वा "वायुरसिमन्त्रेण स्फ्यं निमार्ष्टि । अपउपस्पृश्य, अवशिष्टं दर्भं वेदितः पूर्वे तृतीये भागे उदगग्रं "पृथिव्यै०" इति मन्त्रेण स्थापयति । "पृथिवी०" इति मन्त्रेण दर्भमूले स्फ्येन संहत्य, अपउपस्पृश्य, मृदा सह स्फ्यं "अपहतो०" इति मन्त्रेण आदत्ते । "व्रजं गच्छ गोस्थानं" इति मन्त्रेण मृदं हरति, "वधानदेव सवितः" इति मन्त्रेण मृदमुत्करे निवपति । आग्नीध्रः उत्करदेशमुपविश्य, पाणिभ्यां मृदं गृह्णाति । अयमेव प्रकारः त्रिवारं समन्त्रकमेकवारं तूष्णीं कुर्यात् । स्फ्यप्रहरणादौ अनिधानान्तं सह बर्हिषा सम्पादनं कुर्यात् । अग्रे पूर्वम्परिग्राहम्परिगृह्णाति । "वसवस्त्वा०" इति मन्त्रेण दक्षिणां समारभ्य दक्षिणश्रोणिपर्यन्तं स्फ्येन लेखामालिखति । पश्चात् "रुद्रास्त्वा०" इति मन्त्रेण दक्षिणश्रोणिमारभ्योत्तरश्रोणि पर्यन्तं रेखां कुर्यात् । तत अपउपस्पृश्य, "आदित्यास्त्वा०" इति मन्त्रेणोत्तरां श्रोणिमारभ्योत्तरांसपर्यन्तं रेखामालिखति । रेखाकरणादि कार्यं स्फ्येनैव कर्तव्यम् । पश्चात् "इमां नराः" मन्त्रं कर्णे जपति । "देवस्य सवितुः सवे०" इति मन्त्रेण वेदिं प्राचीं निरुदन्ति । पश्चादाग्नीध्रार्थं अग्नीदितस्त्रिर्हरति प्रैषं ददाति । प्रैषानन्तरं आग्नीध्रोऽहतदेशात् त्रिर्मृदमुद्धृत्योत्करे निदधाति । ततः पिण्डपितृयज्ञः ।[2]

---

(१) वेदेनवेदिं० तै०ब्रा० ३।७।६, देवस्यत्वेति आरभ्य ।
(२) अथापराह्णे पिण्डपितृयज्ञेन चरति । बौ० श्रौ० १।२ ।
(०) इमां नराः० तै० ब्रा० ३।७।७।१३ ।

पवित्रकरणप्रकारः -[१]

---

पश्चात् दिर्वंशाखायाः पर्णानि छित्वा अग्रेण गार्हपत्यं निधाय, तस्य मूलप्रदेशाच्छित्वोपवेषार्थं धृष्ट्याकारं कृत्वा गार्हपत्यस्य पश्चान्निदधाति । "त्रिवृत्पलाशे०" इति मन्त्रेण शाखामूलमारभ्याग्रपर्यन्तं त्रिभिर्दर्भैर्ग्रन्थ्याकारं शाखापवित्रं करोति ।

दोहनम्[२] -

---

ततः सायं होमानन्तरं गार्हपत्यस्योत्तरतस्तृणानि समास्तीर्य तेषु

---

(१) अथ तस्यै शाखायै पर्णानि प्रच्छिद्याग्रेण०त्रिवृत् शाखापवित्रं करोति त्रिवृत्पलाशेदर्भं स्यात् प्रादेश संमितः । बौ० श्रौ० १।३ । त्रिवृत्पलाशे० तै० ब्रा० ३।७।४ ।

(२) अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु चतुष्टयं संसादयति दोहनं पवित्रं० प्रोक्षति शुन्धध्वं० जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति मातरिश्वनो० तेषु सांनाय्यतपनीमधिश्रयति धौरसि० तस्यां प्राचीनाग्रं शाखापवित्रं निदधाति वसूनां पवित्रमसि० अथ गा आयतीः प्रतीक्षते एता आचरन्ति० अथाहोपसृष्टां मे प्रब्रूतादित्युपसृष्टां प्राहुर्दोह्यमानामनुमन्त्रयते हुतस्तोको, पुरस्तात् प्रत्यगानयन्तं पृच्छति - - - तदुपरीवनिदधाति यत्र गुप्तं मन्यते विष्णोहव्यं रक्षस्वेति । बौ० श्रौ० १।३ । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै

---

विष्णोहव्यं रक्षस्व, तै० सं० १।१।३, यत्सांनाय्ययोरवेभक्तः० त्रिवृत् पलाशशाखायां दर्भमयं भवति० प्राक्सायमधि निदधाति० तिर्यक्प्रातः० पवित्रवत्या नयति० अन्वारभ्य वाचं यच्छति - - - उपरीव निदधाति । तै० ब्रा० ३।२।३ । अग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य संतत्यै० तै० सं० २।५।३ ।

दोहनम् । शाखापवित्रं सांनाय्यस्थाल्यां - इदंन्यञ्चि सादयित्वानुत्तानीकृत्य "शुन्धध्वं०" इति मन्त्रेण कमण्डलुस्थितजलेन प्रोक्षति, समन्त्रमेकवारं द्विस्तूष्णीम् । पश्चात् जवेन गार्हपत्यमुपविश्य "मातरिश्वनो०" इति मन्त्रेण उपवेषेणो- दीचीँगारान्निरूहति । "धौरसि०" मन्त्रेण तेषु सान्नाय्यतपनीं अधिश्रयति । "वसूनां०" इति मन्त्रेण तस्यां प्रागग्रं शाखापवित्रं निदधाति । शाखापवित्र- मन्वारभ्य वाचंयमऽआयतोगी: "एताआचरन्ति" इति मन्त्रेण प्रतीक्षते । परिकर्मिणमाह - उपसृष्टां मे प्रब्रूतात् । सवत्सं गांवोपसृज्य उपसृष्टावदति । "हुतस्तोको०" इति मन्त्रेण दुग्धधारामनुमन्त्रयते । वेयुत्कर्योर्मध्येन प्रपाय स्थाल्या- दुग्धं प्रत्यङ्मुखं सिञ्चन्तं पृच्छति - कामधुक्ष: प्रणोब्रूहीन्द्राय हविरिन्द्रियम्, स गंगाम् "यस्यां देवानां०" इति मन्त्रं पठति । "साविश्वायु:०" इति मन्त्रेण तां अनुमन्त्रयते । एवमेव प्रकारेण द्विवारं कुर्यात् । तस्मिन् समये "स गङ्गा- स्थाने" "सा विश्वायु:" स्थाने च क्रमेण यमुनां, सरस्वतीं - "सा विश्व- व्यचा:", "सा विश्वकर्मा" अस्य ग्रहणं भवति । "बहुदुग्धीन्द्राय" इति मन्त्रेण वाचं विसृजते । एकस्याङ्गविकृतौ बहुदुग्धेत्यस्यलोप:, पवित्रं त्यक्त्वा, तूष्णीमुत्तरादोहयित्वा, दोहने जलमानीय संक्षालनं कुम्भ्यामानयति - मन्त्र: - "सम्पृच्यध्वं०" इति ।

दुग्धातत्त्वोदगुद्रास्य, शीतीकृत्य पवित्रंनिधाय, "सोमेन०" मन्त्रेण ध्रुवेण दध्नातनक्ति । "यज्ञस्य संततिरसि०" इति मन्त्रेणाग्निहोत्रोच्चेषणेण- मभ्यातनक्ति । "अदस्तमसि०" इति मन्त्रेण कुंभ्यामुपरिपवित्रं निधाय, प्रोक्षणो- शेषोदक पूर्णेन केन चमसेन वा अपिदधाति । "विष्णो०" इति मन्त्रेणोपरि

शिक्यौ गुप्त्यै निदधाति । ततस्तूष्णीं दर्भैर्वत्सानपाकरोति[1] ।

<u>पात्रासादनप्रणीताप्रणयने - ऋत्विजानामासनपरिकल्पनम्[2] :-</u>

अध्वर्युः प्रतिपद्प्रातर्हुतेऽग्निहोत्रे आहवनीयस्योत्तरतस्तिष्ठन् 'कर्मणेवां० इति मन्त्रेण हस्तौ सम्मृशत्यपउपस्पृश्य, आहवनीयं परिभोजनीयै-दर्भैः परिस्तृणाति प्रथम परिस्तीर्णं भवति । पुरस्तादुदगग्रैः, दक्षिणतः पूर्वापर दर्भोपरि प्रागग्रैः, पश्चादुदगग्रैरुत्तरतः, पूर्वापरदर्भोपरि प्रागग्रैः एवं दक्षिणाग्निमेवं, गार्हपत्यं, पत्नीहोतृब्रह्म यजमान प्रणीता आग्नीध्रस्थाने दर्भैरासनं कल्पन्ति[3] ।

<u>पात्रासादनप्रकारः -</u>

<u>अग्रेण गार्हपत्यं दर्भान्समस्तीर्य, तेषु द्वं द्वं न्यञ्चि प्रक्षालितानि</u>

(१) सस्तस्मिन् काले दर्भैः प्रातर्दोहाय वत्सानपाकरोति तूष्णीं,
बौ० श्रौ० १ ।

(२) अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ संमृशते कर्मणेवां देवेभ्यः शकेयमिति नक्तं परिस्तीर्णा एवैतेऽग्नयो भवन्ति यद्युवा अपरिस्तीर्णा भवन्त्याहवनीयमेवाग्रे पुरस्तात् परिस्तृणाति० - - - - - - - - - - - - - - - - - - - - - - - - - - - एवं गार्हपत्यं ।
बौ० श्रौ० १।४ । कर्मणे वां देवेभ्यः शकेयं । तै० सं० १।१।४ ।

(३) गणेशरामलिखितबौधायनदर्शपूर्णमासपद्धतिः, पृ० १४ ।

पात्राणि सादयति ।

क्रम:[2] -

------

स्फ्यं, कपालानि च । अग्निहोत्रहवणीं शूर्पञ्च । कृष्णाजिनं शम्याञ्च । उलूखलमुसलञ्च । दृषदोपलाञ्च । जुहूमुपभृतं च । स्रुवध्रुवाञ्च । प्राशित्रहरणमिडापात्रीं च । वेदाम्पिष्टोवनीं च । प्रणीताप्रणयनमाज्यस्थालीं च । वेदं दारुपात्रीं च । यो वेदपरिवासनं च । धृष्टिमिध्मप्रवश्चनं । अन्वाहार्यस्थालीं मदन्तीं च फलिकरणपात्रमन्तर्धानकरं च । यान्युपयुक्तानि तान्येव मेवं आसादयेत् ।

ब्रह्मवरणम्[3] -

------------

यजमान: "भूपते भुवनपते०" इति मन्त्रेण ब्रह्माणन्त्वामहं वृणे इति कथनपूर्वकब्रह्मवरणं कुर्यात् ।

---------------------------------------

(१) अथाऽग्रेण गार्हपत्यं तृणानि संस्तीर्य तेषु द्वन्द्वं न्यञ्चि यज्ञायुधानि संसादयति, बौ० श्रौ० १।४ ।

(२) स्फ्यं कपालानि च - - - - - - - - - - - - - यानि चाऽन्यानि पात्राणि तान्येवमेव द्वन्द्वं संसाद्य । बौ० श्रौ० १।४ । यज्ञायुधानि संभरति० द्वे द्वे संभरति० स्फ्यश्च कपालानि च - - दशयज्ञा युधानि० तै० ब्रा० १।६।८ ।

(३) भूपते भुवनपते । महतो भूतस्य पते । ब्रह्माणं त्वा वृणीमहे । तै० ब्रा० ३,७,४,६ । तं यजमानो ब्रह्माणं वृणीते भूपते भुवनपते० बौ० श्रौ० ३।२३ ।

अपप्रणयनम्[१] -

अनुज्ञाग्रहणम् - उपविष्टे ब्रह्मणि अध्वर्युः पृष्ठ्यास्तृणानि गार्ह-पत्यादारभ्याहवनीय पर्यन्तं "यज्ञस्य संततिः०" इति मन्त्रेण सन्ततं कुर्यात् । पश्चात् परिभोजनीयेभ्यो द्वौ दर्भौ प्रादेशमात्रौ प्राग्रावनखच्छिन्नौ गृहीत्वा, "इमौ प्राणापानौ०" इति मन्त्रेण भूमौ निधायादत्ते । "पवित्रेस्थो०" इति मन्त्रेण पवित्रे "अद्भिरनुमार्ष्टि । पश्चादुत्तरेण गार्हपत्यमुपविश्य चमसं याचाति, तस्मिंस्तिरः पवित्रमपआनयन्नाह - "ब्रह्मन्नपः प्रणेष्यामि यजमानोवाचं यच्छ" इति । ततः अध्वर्युश्चमसं पूरयित्वा, नासिकायां समं धृत्वाऽस्कन्दयन् हृत्वोत्तरेणाहवनीयं दर्भेषु "अन्यापः प्रणयामि" इति मन्त्रेण सादयति । अन्यैर्दर्भैराच्छादयति ।

हविर्निर्वापः -

पवित्रमादाय, प्रदक्षिणं प्रत्यंगावृत्य, दक्षिणेन अग्निहोत्रहवणीं,

---

(१) ब्रह्माणं दक्षिणत उपवेश्य पृष्ठ्यांस्तृणाति० यज्ञस्य संतति० अथ बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समे अप्रतिच्छिन्नाग्रे अनखच्छिन्ने इमौ प्राणा० अथैने अद्भिरनुमार्ष्टि पवित्रेस्थो० उत्तरेण गार्हपत्य-मुपविश्यकं सं० ब्रह्मन्नपः प्रणेष्यामि यजमानवाचं यच्छेति प्रसूतः समं प्राणैर्धास्यमाणो० दर्भैः प्रच्छाद्य, बौ० श्रौ० १।४, इमौ प्राणापानौ० ३।७।४ ।

सव्येनशूर्पं "वेषाय त्वा०" इति मन्त्रेण आदत्ते । तं "प्रत्युष्टं रक्षः०" इत्यनेन मन्त्रेण गार्हपत्ये प्रतितपति प्रथमं समन्त्रकं द्विस्तूष्णीम् । जघनेन गार्हपत्यं उदगग्रं स्फ्यं निधाय स्फ्योपरिपात्रीं, पात्र्यां पुरोडाशीयानोप्य, शूर्पं अग्निहोत्रहवणीं तस्यां पवित्रं निधाय, अग्घस्तात "धूरसि०" इति मन्त्रेण पात्र्याः पूर्वार्धमभिमृशति "मित्रस्यत्वा:" इत्यनेन प्रेक्षते[1] । पश्चात् "उरुवाताया०" इति मन्त्रेण तृणं शूकं वा निरस्योपस्पृश्येति[2] । हविर्निर्वापप्रैषः[4] - अध्वर्युः दशहोतारं[3] व्याचष्टे "यजमानहविर्निर्वप्स्यामि" इति प्रैषं यजमानस्य अनुज्ञाप्राप्त्यर्थं



---

(१) पवित्रमादाय प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य ------------------------------ वेषायत्वेति । गार्हपत्ये प्रति तपति प्रत्युष्टं रक्षः० अथ जघनेन गार्हपत्यमग्निष्ठमनो भवति तस्योत्तरां धुरमभिमृशति धूरसिधूर्व० बौ० श्रौ० १।४ । पुरोडाशीयान् प्रेक्षते मित्रस्यत्वा० बौ० श्रौ० १।५ । त्रिर्जुषा० -------------------------- त्रिः प्रोक्षति, तै० ब्रा० ३।२।४-५, वेषायत्वा प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः । धूरसि० । मित्रस्यत्वा०, तै० सं० १।१।४ ।

(२) उरुवातायेति तृणं वा किं शारुवा निरस्यति । बौ० श्रौ० १।५ । उरुवाताय । तै० सं० १।१।४ ।

(३) चित्तिः स्रुक् । चित्तमाज्यं । तै० आ० ३।१ ।

(४) हविर्निर्वप्स्यामीति यजमानमामन्त्र्य -------------------------------------- ओं निर्वपेति यजमानो नु जानाति ।

बौ० श्रौ० १।५ ।

ददाति । यजमानः "ओं निर्वपेति कथनपूर्वकं अनुज्ञाप्रदानं करोति । अध्वर्युः[1] पवित्रवत्यामग्निहोत्रहवण्यां मुष्टिमात्रं निधाय, तयाशूर्पे "देवस्यत्वा - - - - - - - - - - - - - - - - अग्नयेजुष्टं निर्वपामि" एवमेव प्रकारः समन्त्रकं त्रिवारं तथा चतुर्थी तूष्णीं कुर्यात् । यजमानो निरूप्यप्राणं "अग्निं होतारं०" इति मन्त्रेण अनुमन्त्रणं करोति । अयमेव प्रकारेणाध्वर्युः अग्नीषोमौ तथा च दर्शे - "इन्द्राग्नी" इन्द्राय वै मृधाय देवतार्थमपि निर्वापं कुर्यात्, इदं देवाना[2]मिति मन्त्रेण निरुप्तानभिमृशति, अतिशिष्टान् "इदमुन्तसह" मन्त्रेणाभिमर्शनं कुर्यात् । "स्फात्यैत्वानारात्यै०" इति मन्त्रेण एकीकरोति । "सुवरभि० - मन्त्रेणाहवनीयमीक्षते । "दृंहन्तां०" इति मन्त्रेण गृहान्वीक्षते । "उर्वन्तरिक्ष-मन्विहि" इति मन्त्रेण शूर्पमादायेतिष्ठति । पश्चात् उत्तरेण गार्हपत्यं "आदित्यास्त्वोपस्थे सादयामि" मन्त्रेणाधः सादयति । "अग्नेहव्यं रक्षस्व" इति मन्त्रेण गार्हपत्यं अभिमन्त्रयते ।

प्रोक्षणम् -

तदनन्तरं सशूर्पायामेव स्रुचि तिरः पवित्रमपआनीय, उदीचीनाग्राभ्यां पवित्राभ्यां "देवोवः सवितां०" इति मन्त्रेण पञ्चोत्पुनाति । पश्चात्प्रोक्षणी-

---

(१) अथनिर्वपति देवस्यत्वा० - - - - - - - - - - - - अग्नेहव्यं रक्षस्वेति । बौ० श्रौ० १।५ । देवस्यत्वा० इदं देवानाम् । इदमुनसह । स्फात्यैत्वानारात्यै । सुवरभिविख्येषम् दृंहन्तां० । उर्वन्तरिक्ष० । अदित्या० । अग्नेहव्यं रक्षस्व । तै० सं० १।१।४ ।

(२) तै० सं० १।५।१० ।

रादायोत्तिष्ठति । "आपोदेवी०" इति मन्त्रेण ताभिरेवाद्भिस्ताराव्प्रोक्षति ।
त्रिः प्रोक्षितास्थेति । पौर्णिमायां दिवसे देवस्यत्वा - - - - - - - - - -
अग्नये वोजुष्टं प्रोक्षाम्यग्नीषोमाभ्यामिन्द्रायवैमृधाय" इति मन्त्रेण पुरोडा-
शीयान् प्रोक्षति । समन्त्रकमेकवारं द्विस्तूष्णीम् । अमायां दिने उपर्युक्तमन्त्रमध्ये
अग्नये वो जुष्टं प्रोक्षामीन्द्राग्निभ्यां इत्यूहपूर्वक पूर्वक् प्रोक्षणं कुर्यात् ।
सर्वैपात्राण्युत्तानानि कृत्वा "शुन्धध्वं०" इति मन्त्रेण प्रथमं समन्त्रकं द्विवारं
तूष्णीं प्रोक्षणं कुर्यात्[1] ।

हविःकण्डनादिकपालोपधानान्तम्[2] - अवधूननम्[3] :-

---

गार्हपत्यस्य पुरस्तात् प्रोक्षणीर्निधाय, कृष्णाजिनमूर्ध्वग्रीवं

---

(१) अंतस्यामिव० पवित्राभ्यां त्रिरुत्पुनाति देवीव: सविता० पवः:
अंथना उन्नह्यन्नुपोत्तिष्ठत्यापो देवी० अद्भिरेवाप: प्रोक्षति
प्रोक्षितास्थ० अथपुरोडाशीयान् प्रोक्षति देवस्यत्वा०
उत्तानानि पात्राणि कृत्वा प्रोक्षति शुन्धाध्वं इति । बौ० श्रौ०
१।६, देवीव: इत्यारभ्य शुन्धध्वं दैव्यायकर्मणे देवयज्यायै इत्यन्तं
तै० सं० १।१।५ ।

(२) पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय० - - - - - -
- - - - - - - - - - - - - - - - - - - - चतुष्पदयर्चा विमुञ्चति
तै० ब्रा० ३।२।५-७ ।

(३) अतिशिष्टा: प्रोक्षणीर्निधाय कृष्णाजिनं० - - - - - - - - - -
- - - - - - - - - लोमोपस्तृणात्यदित्या, बौ०श्रौ० १।६
मन्त्रभाग:, तै० सं० १।१।५ ।

आदायापसव्यमावृत्त्या "अवधूतं रक्षो०" इति मन्त्रेणावधूनोति । तत्प्रत्यग्ग्रीव-मुर्ध्वलोमोपस्तृणाति, आदित्यास्त्वगसीति ।

कण्डनम्[1]

"अधिषवणमसी" ति मन्त्रेण तस्मिन्नुलूखलं स्थापयति । "अग्नेस्तनूरसि०" इति मन्त्रेण तस्मिन् पुरोडाशीयानावपति । "अद्रिरसि०" इति मन्त्रेण मुसलमवदधाति । हविष्कृतमाह्वयति – हविष्कृदे ३ हि" इति प्लुतिपूर्वकं त्रिवार-मुच्चारयति । अध्वर्युः उच्चैः समाहन्तवै" इति कथयति ।

आग्नीध्रवरणम्[2] –

यजमानः अस्मिन् कर्मणि आग्नीध्रन्त्वामहं वृणे वरणानन्तर-माग्नीध्रः आचम्य, तीर्थेन प्रविश्योत्तरेण गार्हपत्यमुपविश्य "इडादेवहू" रिति जपति । शम्यामादाय,[3] "इषमावदो०" इति मन्त्रेण द्विर्हषदं सकृदुपलां समाहन्ति । ततस्तूष्णीं पात्राणि समाहन्ति ।

---

(१) तस्मिन्नुलूखलमध्यूहत्यधिषवणमसि० तस्मिन् पुरोडाशीयान् आवपत्यग्ने० मुसलमवदधात्यद्रिरसि० । बौ० श्रौ० १।६ । मन्त्रविभागः तै० सं० १।१।५ ।

(२) गणेशराम लिखितबौधायनदर्शपूर्णमासपद्धतिः, पृ० १७ ।

(३) अथहषदुपले वृषारवेणोच्चैः समाहन्तीषमावदो० बौ० श्रौ० १।६, इषमावदो० । तै० सं० १।१।५ ।

उत्पवनम्[१] -

"वर्षवृद्धमसी" ति मन्त्रेणाध्वर्युः पुरोडाशीयान् वितुषान् कृत्वोत्तरतः शूर्पमुपयच्छति "प्रतित्वावर्षवृद्धंवेत्तु" इति मन्त्रेण तस्मिन् पुरोडाशीयानुद्वपति । उदगावृत्त्य "परापूतं०" इति मन्त्रेण परापुनाति । सव्यहस्तेन "रक्षसां भागोसि" इति मन्त्रेण तुषान् नैर्ऋत्यां दिशि निरस्यति ।

विवेकीकरणं प्रक्षालनं च[२] -

"अपउपस्पृश्य, "वायुर्वोविविनक्तु" इति मन्त्रेण व्रीहि तण्डुलान् विविनक्ति । "देवोवः सविताहिरण्य०" इति मन्त्रेण पात्र्यां तण्डुलान् प्रस्कन्दयति । पश्चात् पृथक्कृतान् व्रीहिनवहन्त्र्यै प्रयच्छन्नाह - त्रिष्फलीकर्तवै । त्रिष्फलीकृतान्संप्रब्रूतात् । पत्नीत्रि वितुषान् कृत्वा "त्रिष्फलीकृता इत्याह ।

---

(१) अवहत्योतुषान् कृत्वोत्तरतः शूर्पमुपयच्छति वर्षवृद्धमसि इति । तस्मिन् पुरोडाशीयानुद्वपति प्रतित्वा० अथोदङ्० पर्यावृत्त्य परापुनाति परापूतं० सव्येन तुषानुपहत्येमां दिशं निरस्यति रक्षसां । बौ०श्रौ० १।६ । "वर्षवृद्धमसि" इत्यारभ्य रक्षसां भागोसीति मन्त्रविभागः तै०सं० १।१।५

(२) अथापउपस्पृश्य विविनक्तिवायुर्वो० पात्र्यां तण्डुलान् प्रस्कन्दयति देवोवः सविता० अवहन्त्र्यैप्रयच्छन्नाह त्रिष्फलीकर्तवै० त्रिष्फलीकृतान् प्राहुस्त्रिष्फली० तण्डुलप्रक्षालनमन्तर्वेदिनिनयत्युत्करदेशेवा । बौ० श्रौ० १।६ ।, वायुर्वो० । देवोवः सविता० तै० सं० १।१।५ । त्रिष्फली क्रियमाणानां० । तै० ब्रा० ३।७।६ ।

"त्रिष्फलीक्रियमाणानां०" इति मन्त्रेणाध्वर्युस्तण्डुलप्रक्षालनामन्तर्वेदि प्राशित्रेण निनयति । विकल्पेन इदं कर्म उत्करेऽपि सम्पद्यते । यजमानः रक्षोभ्य इदं नममेति त्यागं कुर्यात् । तथा च अपस्पर्शनमपि कुर्यात् ।

पुरोडाशीयान् पेषणम् -

वाचं विसृज्य, "कस्त्वायुनक्ति, सत्वायुनक्तु"[1] इति यज्ञयोगमन्त्रं जपति । अध्वर्युः जघनेन गार्हपत्यमुपविश्य, उपवेषेण उदीचोंऽगारान्निरूहति । "मातरिश्वनो घर्मो सीत्यारभ्य मन्द्राधनस्य सातये इत्यन्तं सायं दोहनवदा-तञ्चनवर्जं सर्वं कृत्वा, तथैव "अवधूतं"[2] इति मन्त्रेण कृष्णाजिनमवधुनोति । "आदित्यै"ति मन्त्रेण तथैवस्तृणाति । "दिवस्कम्भनीरसि०" इति मन्त्रेण तदुपर्युत्तरतः स्थूलप्रदेशां शम्यां निदधाति "धिषणासिपर्वत्या०" इति

---

(१) एतस्मिन् काले प्रातर्दोहं धेनूर्दोहत्युदगग्रेणपवित्रेणानातनक्ति कस्त्वायुनक्ति, तै० सं० १।५।१० । बौ० श्रौ० १।६ ।

(२) तथैवकृष्णाजिनमवधूनोत्यूर्ध्वं० उत्तरलोमोपस्तृणात्यदित्या० तस्मिन्नुदीचीनकुम्बां शम्यां निदधाति दिवस्कं० तस्यां प्राचीं दृषदमध्यूहति धिषणासि० दृषदुपलामध्यूहतिधिषणासि० तस्यां पुरोडाशीयानधिवपति देवस्यत्वा० अमुष्मा अमुष्मा इति यथादेवतमधिदेवते धान्यमसि० पिंशति प्राणायत्वा० बाहू अन्वेक्षते दीर्घामनु० पिष्टानि पुस्कन्दयति देवोवः हविः प्रेष्यं प्रयच्छन्नाहासंवपन्तो० पिंषन्ति । बौ० श्रौ० १।७ । अवधूतं रक्षोऽवधूता० अनुवाकः तै० सं० १।१।३ ।

मन्त्रेण तस्यां प्रागायतां दृषदं निदधाति । "धिषणासि पार्वतीयो" इति मन्त्रेण दृषदुपलां तिरश्चीं सादयति । तस्यां पुरोडाशीयानधिवपति ।

पौर्णिमायां -
------------

देवस्यत्वा - - - - - - - - - - - - - - मग्नयेजुष्टमधिवपाम्यग्नीषोमाभ्यामिन्द्राय वै मृधायेति मन्त्रः ।

अमायां -
---------

देवस्यत्वा - - - - - - मग्नये - - - - मीन्द्राग्निभ्यामितिमन्त्रः । पश्चादभिमृश्य "धान्यमसी" ति मन्त्रं जपति । पिनष्टि - प्राणायत्वेति प्राचीं प्रोहति, "अपानायत्वेति" प्रतीचीं, व्यानायत्वेति तिरश्चीन्कर्षति । "दीर्घामनु" इति मन्त्रेण द्वौ बाहूत्कृदन्वीक्षते । "देवोवः सवितें" ति मन्त्रेण कृष्णाजिने पिष्टानि प्रस्कन्दयति । हविः पत्न्यै प्रयच्छन्नाह - अणं वपन्ती पिंषाणूनि कुरुतात् । सा पिनष्टि ।

कपालोपधानम् -
--------------

अध्वर्युः प्रक्षालितानि कपालानि गार्हपत्यस्य दक्षिणतः अष्टौएकादश उत्तरतः सादयित्वा, "धृष्टिरसिब्रह्मयच्छ" इति मन्त्रेण धृष्टिमादत्ते । तदनन्तरं "अपाग्नेग्निमामादं जहि" इति मन्त्रेण गार्हपत्यमभिमन्त्रयते । "निष्क्रव्यादं सेधं

इति मन्त्रेण अङ्गारं दक्षिणतो निरस्यति । अपउपस्पृश्य, अन्यमङ्गारं कपालोपधानस्थाने "आदेवयजनं वह" इति मन्त्रेण निदधाति । "ध्रुवमसिपृथिवीं" इति मन्त्रेण अङ्गारोपरि मध्यमं कपालं स्थापयति । "निर्दग्धं रक्षो०" इति मन्त्रेण तदुपरि अङ्गारं निदधाति । "धर्त्रमस्यं०" इति मन्त्रेण तत्पुरस्तात् द्वितीयकपालं निदधाति । "धरुणमसिदिवं०" इति मन्त्रेण तृतीयकपाल-पश्चात्स्थापयति । "धर्मासि दिशोदृं०" इति मन्त्रेण चतुर्थं कपालं दक्षिणतः निदधाति । "चितस्थप्रजामस्मै०" इति मन्त्रस्य पुनः पुनः पाठपूर्वकं क्रमेण दक्षिणकपालस्य पुरस्तात्, पश्चात् तत् पुरस्तात् कपालानि सादयति । एवमेव प्रकारेणाष्टकपाल सादनं भवति । "भृगूणामङ्गिरसां०" इति मन्त्रेण कपालोपरि अङ्गारैश्छादयति । "यानिघर्मे०" इति मन्त्रेण अध्वर्युर्यजमान-श्चाभिमन्त्रयते । एवमुत्तरतरकादश "आदेवयजं वहेत्यादि, तेष्वष्टौ प्राग्वत्, नवमादित्रीणि वायव्यतआरभ्योत्तरतः प्राक्संस्थानि प्रत्येकं "चितस्थमन्त्रेणं समानम्" यानिघर्मेकपालान्यिति । पौर्णमासेष्ट्यां वैमृधार्थं तदुत्तरतः पुनरेवं एकादश कपालान्यासाद्य, गार्हपत्ये पात्रीं मदन्तीं चाधिश्रयति[१] ।

---

(१) अथैतानि कपालानि प्रक्षालितानि० --- धृष्टिमादत्तेधृष्टिरसि० गार्हपत्यमभिमन्त्रयतेऽपाग्ने० निष्क्रव्या० दक्षिणांगारं निरस्यत्यथान्य-मावर्तयत्यादेवयजं वहेति तं दक्षिणेनैषां कपालानां मध्यमेनाभ्युप-दधाति ध्रुवमसि, अंगारमधिवर्तयति निर्दग्धं० अथपूर्वार्ध्यं० ---- बौ० श्रौ० प्र० १।८, धृष्टिरसि० अनुवाकस्य मन्त्रविभागः तै० सं० १।१।७, पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणातिमेध्यत्वाय० --- यानिघर्मेकपालान्युप चिन्वन्तिवेधस इति चतुष्पद्यर्चाभिमृशति तै० ब्रा० ३।२।५-७ ।

पुरोडाशश्रपणम्[१] -ल

---

अध्वर्युः उत्तरेण गार्हपत्यमुपविश्य, वाचंयमः "देवस्यत्वा० भ्यामग्नये-जुष्टं संवपाम्यग्नीषोमाभ्यामिन्द्रायवैमृधाय" इति मन्त्रेण पात्र्यां सव्येन तिरः पवित्रं कृत्वा, कृष्णाजिनात् पिष्टानि संवपति । दर्शे - देवस्यत्वा० मग्नये० संवपामीन्द्राग्निभ्यामित्यूहः कार्यः । सुक्ते आह - आहराप आनयेति । आग्नीध्रः - प्रणीताभ्यः स्रुवेणाजलं गृहीत्वा, पात्रान्तरे निधाय, वेदं पाणिं चाधः कृत्वा, एवं मदन्तीभ्यस्तस्मिन् प्रदिाप्यानीयमाना "अध्वर्युः "समापोऽद्भिरग्मत०" इति मन्त्रेणानुमन्त्रयते । ता आपस्तूष्णीं पिष्टेष्वानीय पात्रीमधः कृत्वा, मदन्तीजलेन "अद्भ्यः परिप्रजाता०" इति मन्त्रेण च पिष्टान्याप्लावयति । "जनयत्यैत्वा संयौमि" इति मन्त्रेण मेक्षणेन मिश्रयति । पृथक्

---

(१) अथोत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तिरः पवित्रं पात्र्यां कृष्णाजिनात् पिष्टानि संवति० बौ० श्रौ० प्र० १।६-१० देवस्यत्वासवितुः प्रसवे० मन्त्रविभागः तै० सं० १।१।८ अंगिरसो वा इत उत्माः सुवर्गं लोकमायन् । तदृषयोयज्ञवास्त्वम्यवायन् । तेऽपश्यन् पुरोडाशं कूर्मं भूतं सर्पन्तम्० उपरिष्टादभ्यज्याऽधस्तादुपानक्ति० सर्वाणि कपालान्यभिप्रथयति० अविदहताशृतं कृत्यः भस्मनाऽभिवासयति० वेदेनाऽभिवासयति । तै० सं० २।६।३ देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै० संवपामीत्याह । यथादेवतमेवैनानि संवपति० पर्यग्नि करोति० त्रिः पर्यग्निकरोति० अविदहन्तः श्रपयतेति वाचं विसृजते० भस्मनाऽभिवासयति० अन्तर्वेदिनिनयत्यवरुध्यै । उल्मुकेनाऽभिगृह्णाति शृतत्वाय० । तै० ब्रा० ३।२।८ ।

भागान् कृत्वा अग्नयेत्वा । अग्नीषोमाभ्यांत्वा । इन्द्रायवैमृधायत्वा । इति अभिमृशति । दर्शे - अग्नयेत्वा । इन्द्राग्निभ्यां त्वेति । "मखस्य शिरोसी" ति मन्त्रेण कूर्माकारं पुरोडाशं करोति । दक्षिणकपालां गारान् प्रत्यूह्य "घर्मोसि विश्वायुः" इति मन्त्रेण तेषु पुरोडाशं स्थापयति । "उरुप्रथस्वो०" इति मन्त्रेण सर्वाणि कपालानि स्पर्शयति । तदुत्तरत आज्यस्थाल्यां तिरः पवित्रं धृत्वा, "महीनां पयोसि०" इति मन्त्रेण आज्यं निर्वपति । गार्हपत्यस्योत्तरतो-भस्मभिगानङ्गारानग्निमुह्य गार्हपत्यायतन एव तेष्वाज्य मधिश्रयति । तथैवो-त्तरतः कपालेषु पुरोडाशं कृत्वा पूर्वोक्त विधिना स्थापयति एवमेव प्रकारेण तृतीयमपिस्थापनं भवति । प्रथमं पात्र्यां जलं प्रक्षिप्य, तेन जलेन "त्वचं गृह्णीष्वे" ति मन्त्रेण त्रिवारं पुरोडाशस्य त्वचं ग्राहयति । "अन्तरितं रक्षो-न्तरिता अरातयः" इति मन्त्रेण सर्वेषां हविषां पर्यग्निकरणं भवति प्रथमं समन्त्रकं द्विवारं तूष्णीमिति । "देवस्त्वासविताश्रपयतु" इति मन्त्रेण दक्षिणं पुरोडाशं श्रपयति । "अग्नेहव्यं रक्षस्वे" ति मन्त्रेण गार्हपत्यमभि मन्त्रयते । एवमेव प्रकारेण उत्तरौ पुरोडाशौ उत्तरं चेति । पश्चात् तूष्णीं भस्मनाभिवास्य, "संब्रह्मणापृच्यस्वे" ति मन्त्रेण साङ्गारं भस्मवेदेन पुरो-डाशोपरि प्रक्षिपति त्रिवारमिति । अध्वर्युः "अविदहन्त श्रपयत" इति प्रेष्यति । "इदं विष्णुर्विचक्रमे०" इति मन्त्रेण वाचं विसृजति । पात्रीसंक्षाल-नोदकं गार्हपत्यादुल्मुके नाभितप्यांतर्वेद्यां स्फ्येन प्राचीस्तिस्रोरेखाः कृत्वा, "एकतायस्वाहा । द्वितायस्वाहा । त्रितायस्वाहा" इति मन्त्रेण क्रमेण प्रत्यङ्निनयति । पश्चात् यथालिङ्गं त्यागः कुर्यात् ।

वेदिकरणम् [1] -

अध्वर्युः "अयं वेद: [2] पृथिवी" मिति मन्त्रेण वेदमादत्ते । अग्नीदित-स्त्रिः इरित्यं तं प्रागुक्तं पौर्णमास्यामिदानीमिव कुर्यात् । आग्नीध्रेण त्रिर्मृदि-हृतायां सम्प्रैषमाह - "ब्रह्मन्नुत्तरं [3] परिग्राहं परिग्रहीष्यामि" "कृतमसी [4]" ति मन्त्रेण दक्षिणांसमारभ्य दक्षिणश्रोणिपर्यन्तं स्फ्येन लेखामालिखति । "कृतसदन-मसी" ति मन्त्रेण दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं स्फ्येनलेखामा-लिखति । "कृतश्रीरसि" इति मन्त्रेण उत्तरश्रोणिमारभ्योत्तरांसपर्यन्तं लेखा-मालिखति । "धाजसिस्वधाअस्युर्वीचासि०" इति मन्त्रेण वेद्यां मृदमानीयप्राची-मारभ्यप्रत्यगपवर्गं स्फ्येनसमो करोति [5] । वेदे: पश्चिमस्तृतीयपूर्वार्धे तिरश्चीं रेखामालिख्य, तिर्यञ्चं स्फ्यं धारयंत्सप्रैषमाह - प्रोक्षणीरासादयेध्मा-बर्हिरुपसादयस्रुवं च स्रुचश्च सम्मृड्ढि पत्नीं संनह्याज्येनोदेहीति [6] । आग्नीध्र:

---

(१) अथवेदमादत्तेऽयं वेद:० बौ० श्रौ० प्र० १। ख० १० ।

(२) अयं वेद: पृथिवी० तै० ब्रा० ३।७।६ ।

(३) यदाग्नीध्रस्त्रिःइरत्यथ सप्रैषमाह ब्रह्मन्नुत्तरं० प्रसूतउत्तरं परिग्राहं परि-गृह्णात्यृतमसीति दक्षिणतकृतसदनमसीति पश्चादृतश्रीरसीत्युत्तरतो० बौ० श्रौ० १।११ ।

(४) कृतमस्यृतसदनमस्यृतश्रीरसि० तै० सं० १।१।९ ।

(५) अथ प्रतीचीं स्फ्येन वेदिं योयुप्यते धाजसि० - - - - बनुदृश्ययजन्ते इति धाजसिस्वधा० तै०सं० १,१,९ बौ० श्रौ० १,११ ।

(६) अन्तर्वेदितिर्यञ्चं स्फ्यंस्तब्ध्वा सम्प्रैषमाह प्रोक्षणी० बौ०श्रौ० १।११ ।

प्रोक्षणीरभिपूर्य, अध्वर्यवे प्रयच्छति । अध्वर्युः स्फ्योपरि किंचिन्निनीय, रेखायां प्रोक्षणीरासाद्य, "यो मा हृदा मनसा०" इति मन्त्रेण उत्करे स्फ्यमुदस्यति । हस्तौ प्रक्षाल्य, स्फ्यं च प्रक्षालयति । आग्नीध्रः प्रणीतोत्तरतः प्रागग्रमिध्मं उत्तरं बर्हिः आसादयति[1]।

स्रुक्संमार्गः पत्नीसंनहनमाज्यग्रहणं च[2]-

---

पश्चात् प्रदक्षिणं प्रत्यङावृत्य, दक्षिण हस्तेन स्रुवं जुहूपभृतावादाय, सव्येन ध्रुवां प्राशित्रहरणं वेदपरिसवनानि चादाय, युगपत् गार्हपत्ये "प्रत्युष्टं रक्षः प्रत्युष्टा०" इति मन्त्रेण प्रति तपति एकवारं द्विवारं तूष्णीमिति । वेदतृणैर्दक्षिण हस्तेन वेष्टितैः "गोष्ठं मा निर्मृक्षं०" इति मन्त्रेण स्रुवं सम्मार्ष्टि । अग्रैस्त्रिर्बिलं मध्यतः प्रागपकर्षं त्रिरभ्यात्म बाह्यतः पात्रं प्रत्यन्वं गृहीत्वा, प्रत्यग-

---

(१) आहरन्त्येताः प्रोक्षणीरभिपूर्य - - - - उत्तरं बर्हिः । बौ० श्रौ० १।११, यो मा हृदा मनसा, तै० ब्रा० ३,७,६ ।

(२) अथैताः स्रुचः समादत्ते० गार्हपत्ये प्रतितपति प्रत्युष्टं रक्षः० अथ स्रुवं सम्मार्ष्टि गोष्ठं मा० त्रिरन्तस्त्रिर्बाह्यतस्त्रिरेवं० अथ जुहूं सम्मार्ष्टि वाचं प्राणं मा० अथ ध्रुवां सम्मार्ष्टि प्रजां योनिं मा० अथ प्राशित्रहरणं सम्मार्ष्टि रूपं वर्णं पशूनां० अथैतानि स्रुक्सम्मार्जनान्यद्भिः संस्पृश्य गार्हपत्येऽनुप्रहरति दिवः शिल्पमवततं० अथाऽग्रेणोत्करं तृणानि संस्तीर्य तेषु स्रुचः सादयित्वा०, बौ० श्रौ० १,१२, प्रत्युष्टं रक्षः० । गोष्ठं मा० । वाचं प्राणं मा० । चक्षुः श्रोत्रं मा० । प्रजां योनिं मा, तै०सं० १,१,१० । स्रुचः सम्मार्ष्टि० । स्रुवमग्रे० अथ जुहूम् । अथोपभृतम् । अथ ध्रुवां (क) दिवः शिल्पमवततं० स्रुक् सम्मार्जनान्यग्नौ प्रहरति, तै० ब्रा० ३,३,१-५ ।

पर्वां स्फ्यमूलिदण्डं संमृज्य अद्भिः सम्मृज्य प्रतितप्य परिकर्मिणे प्रयच्छति । तथैव "वाचं प्राणं मा०" इति मन्त्रेण जुहूं । "चक्षुः श्रोत्रंमा०" इति मन्त्रेण उपभृतं "प्रजां योनिं मा०" इति मन्त्रेण ध्रुवां, प्राशित्रहरणं "रूपं वर्णं०" इति मन्त्रेण तूष्णीं वा पूर्ववत् सम्मार्ष्टि । संमार्गतृणान्यद्भिः संमृज्य गार्हपत्ये उत्करे वा "दिवः शिल्पमवततं०" इति मन्त्रेणानुप्रहरति । उत्करे निधानपक्षे स्वाहाकारवर्जं मन्त्रपाठः । अग्रेणोत्करं तृणानि संस्तीर्य तेषु ध्रुवादोन्या सादयति ।

पत्नीसंनहनम्[१] -

---

पत्नीं वेद्युत्करयोर्मध्येन प्रपाद्य गार्हपत्यस्य प्रत्यग्दक्षिणत उदीचीमुखीं जानुमुपवेश्य, "आशासानासौमनसं०"[क] इति मन्त्रेण योक्त्रेण सन्नह्यति । "युक्तं क्रियाताआशीः"[ख] इति मन्त्रं पत्नीं वाचयति । पत्नीतिरः पवित्रं "पयस्वतीरोषधयः०"[ग] इति मन्त्रेण अप आचामति । "अग्नेव्रतपते०"[ग] । वायोव्रत-

---

(१) अथैनां पत्नीमन्तरेण० योक्त्रेण संनह्यति आशासाना० अथैनां वाचयति युक्तं क्रियाताआशीः काम्येयुज्याते अथेनांतिरः पवित्रमपआचामयति पयस्वतीरोषधयः० अथैनां गार्हपत्ये समिधआधापयति अग्नेव्रतपते० अथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा० अथैनां वाचयति ऊनेति० अथैनां गार्हपत्यमीक्षायति, बौ० श्रौ० १।१२ ।

(क) आशासाना० । सुप्रजसस्त्वा० । तै० सं० १,१,१० ।

(ख) योक्त्रमेवयुते० युक्तं क्रियाताआशीः काम्येयुज्याता इति,तै०ब्रा० ३,३,१-५ ।

(ग) पयस्वतीरोषधयः० । अग्नेव्रतपते० । तै० सं० १,५,१० ।
तै० ब्रा० ३,७,५ ।

वायोव्रतपते०, आदित्यव्रतपते०, व्रतानां व्रतपते० इति प्रतिमन्त्रं गार्हपत्ये समिधः आधापयति, पुनः परिषिञ्चति च यथालिङ्गं त्यागः पत्नी-गार्हपत्यस्य पश्चात् आसेनात्तृणं निरस्य, प्राङ्मुख्युपविश्य "सुप्रजसस्त्वावयं०" इति त्रिभिर्मन्त्रैः जपति । "ऊनेतिरिक्तं धीयातै" इति मन्त्रं पत्नीं वाचयति । तां गार्हपत्यं "अग्नेगृहपत०" इति मन्त्रेण ईक्षयति ।

आज्यग्रहणम् -

"महीनां पयोस्योषधीनां०" इति मन्त्रेण तामाज्यमवेक्षयति । "तेजोसीति मन्त्रेण आज्यस्थालीं गार्हपत्येधिश्रयति । "तेजोनुप्रेही" ति मन्त्रेण आज्यस्थाल्या अधस्तात् समिधं धृत्वा प्राङ्हरति । "अग्निस्तेजोमाविनेतु" इति मन्त्रेण आज्यमाहवनीयेधिश्रयति । स्वाहाकारपूर्वकं समिधं आहवनीयेम्या दधाति । यजमानः अग्नय इदं नममेति त्यागं पठेत्[१] ।

आज्यसंस्कारः -

एतदाज्यमग्रेण प्रोक्षणीः पर्याहृत्या प्रोक्षणीः समं रेखायां वेद्यां

---

(१) अथैनामाज्यमवेक्षयति महीनां पयोस्योष० अथैनत् गार्हपत्येऽधिश्रयति तेजोऽसीति समिधमुपयत्यप्राङ् हरति० अथैनदाहवनीऽधिश्रयति० अंक्तां समिधं मध्यतआहवनीयस्योभ्यादधाति (स्वाहेति) बौ० श्रौ० १।१२ । मन्त्रविभागः - महीनांपयोस्योष० - - - - - - - - - - - - अग्नि-स्तेजो मा विनेतु । तै० सं० १।१।१० ।

दक्षिणतो निदधाति । यजमानः "आज्यमसि सत्यमसि०" इति मन्त्रेण अक्षिणीपूर्वं निमील्यावेक्षते[१]। अध्वर्युराज्यं यथाहृतं पर्याहृत्य, वेदुत्तरार्द्धे-स्फ्यस्य वर्त्मनि निधाय "अग्नेर्जिह्वासि" इति मन्त्रेण अवेक्षते । आज्यं उदीचीनाग्राभ्यां पवित्राभ्यां आत्मनः सकाशादारभ्य पुरस्तान्नीत्वा, पुनरात्माभिमुखं नयं शुक्रमसि । ज्योतिरसि । तेजोसि । इति समन्त्रकं त्रिवारमुत्पुनाति । "देवोवः सविता०" इति मन्त्रेण प्रोक्षणीरपुनराहारं पञ्चनुत्पुनाति[२]। जुहूमध्ये आज्यग्रहणम् - प्रोक्षणीषु पवित्रनिधाय, दक्षिणेन स्रुवं, सव्येनजुहूमादाय, तां वेदेनिधाय "शुक्रं त्वा शुक्रायां धाम्ने०" इति मन्त्रेण स्रुवेणाज्यं गृह्णाति, गृहीतं गृहीतं यजमानः "पंचानां त्वां०" इति मन्त्रेणानु-मन्त्र्यते । अध्वर्युश्चतुर्गृहीत्वा जुहूं सम्मृज्य परिकर्मिणे प्रयच्छति । दक्षिणतो यजमानाय वा प्रयच्छेत् । स इध्माबर्हिषोः प्रत्यङ्० निदधाति नोत्करे ।

---

(१) आज्यमसिसत्यमसि० तै० सं० १,६,१ ।

(२) अथेनमद्ग्रेण प्रोक्षणीः पर्याहृत्य दक्षिणार्धे वेद्यां निधाय यजमानमाज्य-मवेक्षयति निमील्या वेक्षेत विब्राह्मणमथेनपर्याहृतं प्रति(धं) पर्याहृत्योत्त-रार्धे वेद्यां निधायाध्वर्युरवेक्षतेऽग्नेर्जिह्वासि० अथेनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति शुक्रमसि० अथ प्रोक्षणीरुत्पुनाति देवोवसविता० । बौ० श्रौ० १।१२ । अग्नेर्जिह्वासि इत्यारभ्य देवोवः सविता० पर्यन्त मन्त्रविभागः ।

तै० सं० १।१।१० ।

यद्जुषाऽऽज्यं यजुषाऽप उत्पुनीयात्० पच्छो गायत्रिया त्रिः षमृद्ध-त्वाय० यश्चक्षुषा आज्यमवेक्षयते । निमील्याऽवेक्षेत ।

- तै० ब्रा० ३,३,१-५ ।

उपभृन्मध्ये आज्यग्रहणम् - अध्वर्युः उपभृतमादाय तां वेदे निधाय, "ज्योतिस्त्वा ज्योतिषि०" इति मन्त्रस्या वृत्त्या पूर्ववच्चतुर्गृहीतादल्पशोऽष्टकृत्वो गृह्णीते[1]। यजमानः (१) चरोस्त्वा पञ्च बिलस्यस्ययं०" (२) ब्रह्मणस्त्वा तेजसे, (३) क्षत्रस्यत्वौ जसे०, (४) विशेत्वा, (५) सुवीर्यायत्वा०, (६) सुप्रजास्त्वायत्वा०, (७) रायस्पोषायत्वा०, (८) ब्रह्मवर्चसायत्वा० इति। समन्त्रकमष्टवारमनुमन्त्रयते। जुहूवत संमृज्य परिकर्मणे प्रयच्छति - जुहूमुत्तरेण सादयति[2]। ध्रुवायामाज्यग्रहणम् - अध्वर्युः "अर्चिस्त्वार्चिषिधाम्ने देवेभ्यो०" इति मन्त्रेण ध्रुवायां

---

(१) आदत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदेप्रतिष्ठाप्य तस्यां गृह्णीते शुक्रं त्वा० एतेन यजुषा चतुर्गृहीतं गृहीत्वा संमृश्योत्प्रयच्छति।
बौ० श्रौ० १।१२।
शुक्रं त्वा शुक्रायां०, तै० सं० १।१।११।
पञ्चानां त्वा०, तै० सं० १।६।१।
आज्यं गृह्णाति० चतुर्जुह्वां गृह्णाति० अष्टावुपभृति० चतुर्ध्रुवायां० चतुर्जुह्वां गृह्णन् भूयो गृह्णीयात्। अष्टावुपभृति गृह्णन्कनीयः० यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत्। यदुपभृति। प्रयाजानूयाजेभ्यस्तत्। सर्वस्मैवा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम्।
तै० ब्रा० ३,३,१-५।

(२) अथोपभृति गृह्णीते ज्योतिस्त्वा० एतेनयजुषाष्टगृहीतं गृहीत्वा भूयसो गृह्णान् गृह्णानः कनीय आज्यं गृह्णीते तथैव सम्मृश्योत्प्रयच्छति। बौ० श्रौ० १।१२।
ज्योतिस्त्वाज्योतिषि० तै० सं० १।१।११।
चरोस्त्वा इत्यारभ्य ब्रह्मवर्चसायत्वा इत्यन्तं मन्त्रविभागः।
तै० सं० १।६।१।

[illegible]

पूर्ववत् ग्रहणं करोति । यजमानः प्रतिग्रहणं (१) भूरस्माकं, (२) हविर्देवानां, (३) आशिषो यजमानस्य (४) देवानां त्वा देवताभ्यो गृह्णाति, अध्वर्युः तूष्णीमभि पूरयति । यजमानः "कामायत्वा गृह्णामी"ति मन्त्रेणानानुमन्त्रयते । पूर्ववत् सम्मृज्य परिकर्मिणे प्रयच्छति, स तथैव सादयति[१] ।

बर्हिरास्तरणस्रुगासादनं च[२] -

---

अध्वर्युः सध्रुवामाज्यस्थालीं वेदेः पश्चात् निधाय, "आपोदेवोग्रे-

---

(१) ध्रुवायां गृह्णातिऽर्चिस्त्वार्चिषि० एतेन यजुषा चतुर्गृहीतं गृहीत्वाभिपूर्य तथैव सम्मृश्योत्प्रयच्छति । बौ० श्रौ० १।१२ । अर्चिस्त्वार्चिषि० तै० सं० १।६।१० । भूरस्माकमित्यारभ्य कामायत्वागृह्णामीतिपर्यन्तम् । तै० सं० १।६।१ ।

(२) अथैतामाज्यस्थालीं सध्रुवां जघनेन वेदं निधाय प्रोक्षणीरुत्पूयन्नुपोत्तिष्ठत्यापो देवोग्रेपुवो० अथेध्मं विस्रस्य प्रोक्षति

---

अथ विष्णूनिस्थ वैष्णवानि धामानिस्थ प्राजापत्यानीत्याज्यान्यभि मन्त्रयते । बौ० श्रौ० १।१३ । कृष्णोऽस्याखरेष्ठोऽग्नये त्यारम्भ एता असदन् इत्यन्तम् । तै० सं० १।१।११ । यजमानानुमंत्रणमन्त्राः - ध्रुवोसि० इत्यारम्भ इन्धानास्त्वापर्यन्तम् विष्णूनिस्थ० बौ० श्रौ० १।१३ । तै० सं० १।६।२ ।

-------अग्रिमपृष्ठेऽपि

पुवो अ०॰ इति मन्त्रेण प्रोक्षणीभिरुपोत्तिष्ठति । 'प्रोक्षितास्थे' ति मन्त्रेणाद्‌भिरपः प्रोक्षति त्रिवारम् । इध्मं विस्रस्य 'कृष्णोऽस्या खरेष्ठो ऽग्नयेत्वास्वाहा' इति मन्त्रेण अद्‌भिरुपः त्रिवारं सकृत् वा प्रोक्षति । 'बर्हिरसिस्रुग्भ्यस्त्वा स्वाहा' इति मन्त्रेण बर्हिः प्रोक्षति । बर्हिरिध्म-प्रणीतयोर्मध्येन प्राङ्‌नीत्वा, प्रणीताहवनीययोर्मध्येन पुनराहृत्य, वेद्यां

---

पूर्वपृष्ठस्याग्रे---------

(२) इध्माबर्हिः प्रोक्षति॰ वेदिं प्रोक्षति॰ दिवेत्वाऽन्तरिक्षायत्वा पृथिव्यैत्वेति बर्हिरासाद्य प्रोक्षति॰ पुरस्तात् प्रस्तरं गृह्णाति॰ इयन्तं गृह्णाति॰ बर्हिःस्तृणाति॰ अनतिदृश्नं स्तृणाति॰ उत्तरं बर्हिषः प्रस्तरं सादयति॰ परिधीन् परिदधाति॰ संस्पर्शयति॰ न पुरस्तात् परिदधाति॰ ऊर्ध्वेसमिधावा-दधाति॰ यजुषाऽन्यां तूष्णीमन्याम्॰ द्वे आ॰ दधाति ।

तै॰ सं॰ २, ६,५-६ ।

प्रोक्षिताः स्थेत्याह । तेनाऽऽपः प्रोक्षिताः दिवेत्वाऽन्त-रिक्षाय त्वा पृथिव्यैत्वेति बर्हिरासाद्य प्रोक्षति॰ अथ ततः सह्रुचा पुरस्तात् प्रत्यन्वं ग्रन्थिं प्रत्युक्षति॰ ऊर्ध्वबर्हिष-दम्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति संतत्यै॰ ग्रन्थिं विस्रं सयति॰ ऊर्ध्वं प्रान्चमुदगूढं प्रत्यन्चमायच्छति॰ पुरस्तात् प्रस्तरं गृह्णाति॰ इयन्तं गृह्णाति॰ अपरिमितं गृह्णाति॰ तस्मिन् पवित्रे अपिसृजति॰ बर्हिःस्तृणाति॰ अनतिदृश्नं स्तृणाति॰ धारयन्प्रस्तरं परिधीन् परिदधाति॰ उदीचीनाग्रे-निदधाति प्रतिष्ठित्यै॰ ।

- तै॰ ब्रा॰ ३,३,६ ।

पुरोग्रन्थिं ऊर्ध्वाग्रं निधाय, तिष्ठन् "दिवेत्वा" इति मन्त्रेण अग्राणि प्रोक्षति । "अन्तरिक्षायत्वा" इति प्रह्वो मध्यानि प्रोक्षति, "पृथिव्यैत्वा" मूलानि प्रोक्षति । प्रोक्षणीपुष्करस्याधस्तात् पाणिं समाग्रं कृत्वा, प्रत्यङ्मुखाभ्यां स्रुक्पाणिभ्यां पुरोग्रन्थिमासिच्य, शिष्टं जलं दक्षिणश्रोणिमारभ्योत्तरश्रोणि पर्यन्तं "स्वधापितृभ्य०" इति मन्त्रेण निनयति । अपउपस्पृश्येति । यजमानः - पितृभ्योबर्हिषभ्य इदं नममेति त्यागः । अपउपस्पृश्येति । अध्वर्युः अग्निहोत्रहवणीमात्मनः पश्चात् उदगग्रां निरस्यापउपस्पृश्य, बर्हिर्विस्रस्यापउपस्पृश्य, "विष्णोःस्तुपोऽसि" इति मन्त्रेण प्रथमं प्रस्तरं गृह्णाति । "यजमाने प्राणापानौ दधामि" इति मन्त्रेण प्रस्तरे पवित्रे आनयति । प्रस्तरमग्रेण आहवनीयं पर्याहृत्य, यजमानाय ब्रह्मणे वा दत्वा, बर्हिः सन्नहनं विस्रस्य अपउपस्पृश्य, दक्षिणां श्रोणिमारभ्योत्तरांसपर्यन्तं निधाय, बर्हिर्मुष्टिं प्रागग्रमुदक्संस्थं "देवबर्हिरूर्णा म्रदसंत्वा०" इति मन्त्रेण आस्तृणाति । प्रथमं द्वितीयं तृतीयम् । प्रत्यक्वेदिं प्रागास्तृतबर्हिर्मूलानि च प्रच्छादयन् । पुनः प्रस्तरं गृहीत्वा प्राङ् निसृप्य, प्रस्तरपाणिरुदगग्रं मध्यमं परिधिं "गंधर्वोऽसि०" इति मन्त्रेण परिदधाति । "इन्द्रस्य बाहुरसि०" इति मन्त्रेण तन्मूलोपरि दक्षिणं प्रागग्रं परिदधाति । "मित्रावरुणौत्वोत्तरतः०" इति मन्त्रेणाध्वर्युर्मध्यमाग्रस्याधस्तात् प्रागग्रमुत्तरं परिधिं परिदधाति । "सूर्यस्त्वा पुरस्तात्०" इति मन्त्रेण अध्वर्युः सूर्यं पुरस्तात् मनसा परिधि कल्पयति । यजमानः (१) ध्रुवोऽसि०, (२) उग्रोऽस्युग्रोऽहं०, (३) अभिभूरस्यभिभूरहं०, (४) युनज्मित्वा० इति क्रमेणानुमन्त्रयते । ऊर्ध्वे समिधावग्नावादधाति "वीतिहोत्रं त्वा कवे०" इति

मन्त्रेण दक्षिणां, तूष्णीमुत्तरामिति । यजमानः "ईंधानास्त्वा०" इति मन्त्रेणानुमन्त्रयते । परिभोजनीयेभ्योमध्यामादातोवन्यितौ वा दर्भद्वयमादाय, विधृति संज्ञे उदगग्रे "विशोयन्त्रेस्थः" इति मन्त्रेण निदधाति । "वसूनां रुद्राणां" इति मन्त्रेण तदुपरि प्रागग्रं प्रस्तरं शाखापवित्रेण सहप्रस्तरं निदधाति । "जुहूरसिघृताची०" इति मन्त्रेण प्रस्तरोपरिजुहूं निदधाति । "उपभृदसिघृताची-नाम्ना०" इति मन्त्रेणोत्तरतो विधृत्योरधस्तात् उपभृतं निदधाति । "ध्रुवाऽसि घृताचीनाम्ना०" इति मन्त्रेण तदुत्तरतो ध्रुवामासादयति । पूर्वंपूर्वमनुत्सृजंनुत्तर-मुत्तरं सादयति । "एता असदन्सुकृतस्यलोके०" इति मन्त्रेण स्रुचः सकृदेवाभिमृशति । आज्यस्थालीं स्रुवं च तदुत्तरतस्तूष्णीं सादयित्वा, "विष्णूनिस्थ वैष्णवानि०" इति मन्त्रेण सर्वाण्याज्यान्यभि मन्त्रयते ।

हविरासादनम् -

अध्वर्युः दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन दारुपात्रीं वेदं चादाय, प्रदक्षिणं प्रत्यङ्ङुदङ्ङावृत्य, जघनेन गार्हपत्यमुपविश्य, पात्र्यां पुरोडाशसंस्थया "स्योनं ते सदनं करोमि०" इति मन्त्रयावृत्त्योपस्तृणोति धृष्टिमादाय, प्रथमं पुरोडाशस्यांगारान् "इदमहं सेनाया०" इति मन्त्रेण अपोहति । "सूर्यज्योति-र्विभाहि०" इति मन्त्रेण पुरोडाशं प्रकाशयति । धृष्टिं निधाय, वेदेन विरजसं कृत्वा, "आप्यायतां घृतयोनिरग्निर्हव्या०" इति मन्त्रेणाभिघारयति । "प्रत्नउस्नातिजनितामतीनां०" इति मन्त्रेण पुरोडाशमुद्वासयति । "आर्द्रः प्रथस्नुर्भुवनस्यगोपाः" इति मन्त्रेणाज्येन सन्तर्पयति । आज्याक्तहस्तेनापर्यावर्त-

पुरोडाशमपस्तात् "यस्त आत्मा०" इति मन्त्रेणाभ्यङ्क्ते । पात्र्यां तूष्णीं निधाय, पूर्ववत् उत्तपुरोडाशस्याङ्गारानपोहति ।

दर्शः -

दर्शे अभिघारणमन्त्रे "अग्नीषोमाभ्यां" स्थाने "इन्द्रायवैमृधाय" अस्य वाक्यस्य ऊहः कुर्यात् । शेषं पूर्ववत् । शृतं तूष्णीं अभिघार्य, उदगुद्वास्य, प्रत्यभिघार्य, पुरोडाशोत्तरतः स्थापयित्वा, "यस्तआत्मापशुषु-प्रविष्टोदेवानां०" इति मन्त्रेण अलंकरोति [1]। कपालोद्वासनम् "इरामूतिः पृथिव्यै रसोमोत्क्रमीत्[2]" इति मन्त्रेणैवं दधिकपालानि सकृत् प्रत्येकमन...।

---

(१) अथादत्ते दक्षिणेनाज्यस्थालीं स्रुवां सव्येन पात्रीं वेदमित्येतत् समादाय प्रदक्षिणमावृत्य प्रत्यङ्ङुदावृत्य जघनेन गार्हपत्यमुपविश्य पत्र्यां द्वेधोपस्तृणोति स्योनं ते० अथवृष्टिमादाय दक्षिणस्य पुरोडाशस्याङ्गारानपोहतोदमहं सेनाया० अथैनं विदर्शयति सूर्यज्योतिर्विभाहि० वेदेन विरजसं कृत्वाअभिघारयत्याप्यायतां० अथैनमुद्वासयतिशृतउत्स्याति० आज्येन सुसं तर्पयत्यार्द्रः प्रथस्नुर्भुवनस्य० अथ सांजायुषे अलंकरोति यस्त आत्मा० । बौ० श्रौ० १।१४ ।
स्योनं ते सदनं करोमीत्यारभ्य यस्त आत्मा० इत्यन्तं मन्त्राः ।
तै० सं० ३।७।५ ।

(२) इरामूतिः । तै० सं० ३।७।५ ।

अष्टौ कपालानि संख्यायोद्वासयति यानि कर्मकपा० - - - - विमुक्तामिति । एवमुत्तराण्येकादश, तदुत्तराणि च[1] । आसादनम् - ध्रुवमभिपूर्य पुरोडाशयोर्मध्ये स्थापयित्वा सर्वाणि हवींष्यादाय, अन्तर्वेदि स्रुचां पश्चात् "भूर्भुवः सुवः" इत्यनेन अन्वारब्धे यजमाने सादयति । शृतं वेद्यां दक्षिणपश्चिमदेशे निधाय, दध्युत्तरपश्चिमदेशे निदधाति । आज्यपूर्णं ध्रुवमग्रेण स्रुचः पर्याहृत्य दक्षिणेन जुहूं प्रस्तरे "स्योनामे सदि०" इति मन्त्रेण सादयति । यथाहृतमानीयध्रुवाया-माज्यं "कृष्णमोसि शाक्वरो०" इति मन्त्रेणावनयति[2] । "यन्मे अग्ने अस्य यज्ञस्य०"[3] इति मन्त्रेण यजमानः हवींष्यनु मन्त्रयते । होतारं वृणीते ।

होतृवरणकालः -

हौत्रमिति ऋग्वेदस्य समाख्या तद्वेदविहितानां पदार्थानां कर्ता होतेत्युच्यते । "दर्शपूर्णमासयोर्हविःष्वासन्नेषु होतामन्त्रितः[4]" हविष्वासन्नेषु

---

(१) प्रत्यज्यकपालान्युद्वासयतीरामुतिः पृथिव्यै० संख्यायोद्वासयति यजमानस्य गोपीथायेति ब्राह्मणम् । बौ० श्रौ० १।१४ अभिधायोद्वासयति० संख्यायोद्वासयति० । तै० सं० २।६।३ ।

(२) अथैनं ध्रुवमाज्यस्य पूरयित्वान्तरेण पुरोडाशाववदधात्यथैनानि संपरिगृह्यान्तर्वेदि आसादयति - - - - - - - - - - - - - - - - - - - - - - - - - - - - - ध्रुवायामवदधात्युवभोसि बौ० श्रौ० १।१४ ।

(३) यन्मे अग्ने अस्य० तै० सं० २।६।२ ।

(४) आ० श्रौ० १।१।४ ।

इति आर्षिकं छान्दोग्यं च बौधायनसूत्रमाध्वर्यवमवलम्ब्य प्रवृत्तमिति । अतः अत्र आध्वर्यव पदार्थक्रमः प्रतिपाद्यते । कृतोऽध्वर्युः अग्नीन् विहृत्य, अन्वाधाय, समन्त्रा-भिध्यावर्हिरानीय, वेदं निमाय, अग्नेः दक्षिणतः ब्रह्मासनं यजमानासनं च परिकल्पयति । एवं प्रकारेण आज्यावेक्षणान्तं कर्मकृत्वा, जुह्वां चतुः, उप-भृत्यष्टौ, ध्रुवायां चतुरित्याज्यानि गृहीत्वा, पर्वं हविरभिघार्य, पात्र्या-माज्यमुपस्तीर्य, हविरुद्वास्य, उपस्तृतेदेशे निधाय, अभिघार्य क्वां हवींषि आज्य, अन्वाज्य पात्रं चासादयति । तदेतत् हविः षुवासन्नेष्विति ।

होतृवरणम् - अध्वर्युः होतारं वृणोति "अस्मिन् पौर्णमासयागकर्मणि होतारं त्वामहं वृणे" इति । होता - कृतोऽस्मि कर्मकरिष्यामीति वदति । आधाने वरण प्रकारः पूर्वमेव उक्तः[१] ।

होतृनामकऋत्विजार्थं देवतानिदर्शनम् -

अध्वर्युः "होतरेहि" इति होतारं आमन्त्रयति । होता - अध्वर्यु-दैवता आचक्ष इति वदति । अध्वर्युः - तमुद्दिश्य कथयति पौर्णमासतन्त्रम् - वार्त्रघ्नावाज्यभागौ, अग्निः, विष्णुः, अग्नीषोमौ, इन्द्रोविमृधश्च प्रधान देवताः, पञ्चप्रयाजाः, त्रयोनुयाजाः, पत्नीसंयाजाः इति दर्शे - अमावास्य-तन्त्रम्, वृधन्वन्तावाज्यभागौ, अग्निः, विष्णुः, इन्द्राग्नी इति प्रधानदेवताः,

---

(१) बौधायनीकदर्शपूर्णमासप्रयोगः, पृ० सं० ३९ ।

शेषं पूर्ववत् । इति होतृवरणं इष्टेः प्राप्त कर्मस्य प्रख्यापनं चेति[1] ।

होतुः प्रवेशविधिः -

आमन्त्रितो होता "प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्या चम्य दक्षिणावृद्विहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीताः । इध्ममपरेणा प्रणीते । एतत्तीर्थमित्याचक्षते[2] । एतमध्वानं तीर्थमित्याचक्षते वेदविदः । उत्करावभावेऽपि तद्देशस्तीर्थसंज्ञक एव भवति । अतः अग्निहोत्रादिष्वपि तेनैव पथा प्रपदनं सिद्धं भवति ।

होतृनियमाः -

तस्य होतुः चेष्टाः नित्याः प्राञ्चाः भवन्ति[3] । "अङ्कधारणा च[4] अंकंनाम उरूपस्थः तस्य करणं दक्षिणोत्तरेणोपस्थेनेति, वक्ष्यमाणरूपं धारणेत्युच्यते । शुचित्वं, यज्ञोपवीतित्वं नित्यमेव[5] । "विहाराद्व्यावृत्तिश्च[6] व्यावृत्तिः नाम पृष्ठतः कृतिः, न विहारं पृष्ठतः कुर्यात् । अतः - विहारव्यावृत्ति निषेधात् पश्चादस्योपविश्येति । "प्रसंगादपवादो

---

(१) बौधायनोक्तदर्शपूर्णमासप्रयोगः, पृ० सं० ३१ ।

(२) आ० श्रौ० १।१।४-७ ।

(३) तस्य नित्याः प्राञ्चश्चेष्टाः । आ० श्रौ० १।१।८ ।

(४) आ० श्रौ० १।१।६ ।

(५) यज्ञोपवीतशौचे च, आ० श्रौ० १।१।१० ।

(६) आ० श्रौ० १।१।११ ।

बलीयान्[1] सामान्यविधेर्विशेषविधिर्बलीयानित्यर्थः । तीर्थेन विहारं प्रपद्येतेत्युक्तम् । इदानीं प्रपद्येत्युच्यते । वेदेः अपराश्रियोः श्रोणिरिति संज्ञा, वेदेः पूर्वयोः अंस इति । उत्तरयाश्रोण्या दक्षिणस्य पादस्य पार्ष्णी (पादस्य अपरोभागः पार्ष्णिः) समानिधाय, तस्यैव प्रपदेन (पादस्य पूर्वोभागः प्रपदः) वेद्यामास्तीर्णं बर्हिराक्रम्य, बहिर्वेदिसव्यं पादं निधाय, आत्मनः सव्यदक्षिणहस्तौ पृथक्-पृथक् विरलांगुलिकौ कृत्वा, तौ पाणीपरस्परं संहितौ च कृत्वा, तौ हृदयसम्मितौ अंकसम्मितौ वा धारयन् द्यावापृथिव्योः संधिमीक्षमाणः प्राङ्मुखस्तिष्ठेत्[2] । "एतद्धोतुः स्थानम्[3]" एतत् शब्देन श्रोणिदेशेन हस्तपादादि लक्षणेनच विशिष्टं तदत्रस्थानशब्देनोच्यते ।

सामिधेन्यर्थं जपः -

---

होता पूर्वोक्तस्थाने समागते सति अध्वर्युः - इध्ममभ्युज्य, इध्मात् समिध माददानः "अग्नये समिध्य मानायानुब्रूहि" इति प्रैष्यति[4] । अध्वर्युः प्रैषिते होता - "नमः प्रवक्त्रे० इत्यादि हौत्रं कुमध्वमित्यन्तं सामिधेन्यर्थं जपेत् । प्रैषोत्तरकालवर्तित्वात् अयं जपः सामिधेन्यर्थो भवति । अत्र जपमन्त्र

---

(१) आ० श्रौ० १।१।२२ ।

(२) प्रपद्याभिक्रुततरेण ------------------ सन्धिमीक्षमाणः । आ० श्रौ० १।१।२३ ।

(३) आ० श्रौ० १।१।२४ ।

(४) अथेध्मात्समिधमाददान आहाग्नये० आ० श्रौ० १।२५ ।

तै० ब्रा० ३।३।७ ।

अमुमिति शब्दस्य स्थाने द्वितीयया विभक्त्या आत्मनामनिर्दिशेत् । अत्र जपमन्त्रे आत्मनामोच्चारणानन्तरं "भूतेमविष्यतिजात:" इति मन्त्रमुच्चार्यहोता दक्षिण-हस्तस्य अङ्गुल्यग्राणि अवकर्षेत् । "जातवेदोरम्यापशून् मयि" इति प्रति संदध्यात्[1] ।

बौधायनमतम् -

अध्वर्यो: होतुश्च प्रपदनं समन्त्रकं "सत्यं प्रपद्य ऋतं प्रपद्य०" इति भवति । सामिधेन्यर्थं "कं प्रपद्ये तं प्रपद्ये यत्ते प्रजापत०" इति सूत्रोक्तजपमन्त्र:[2] ।

अभिहिंकारस्वरूपम् -

जपमन्त्रं समाप्य अग्नेसमिन्धनार्थां या: सामिधेनी संज्ञका: ऋच: अध्वर्युणा "अग्नयेसमिध्यमानायानुब्रूहि" इति प्रेषिते "हिम्" इति तारस्वरेण हिं कृत्य, "भूर्भुवस्वरोम्" इत्युपांशु जपति[3] । जपसहितस्य हिंकारस्य अभिहिंकार इति संज्ञाभिधीयते ।

---

(१) नम: प्रवक्त्रे - - - प्रथमं मसीयेति । आ०श्रौ० १।२।१।
तदधवाच: ऋ० सं० १०।५३।४ ।

(२) हवींष्यासाद्यहोतारमामन्त्र्यते सयज्ञोपवीत्यप आचम्य हस्तौसंमृशते-कर्मणेवां० अथान्तरेण वेयुत्करौ प्रपद्यते सत्यं प्रपद्य० तदेदं हौत्रं जपति कंप्रपद्ये० । बौ०श्रौ०३।२।७ । सत्यं प्रपद्य ऋतं प्रपद्य० तै०ब्रा० ३।५।१ ।

(३) हिं ३ इति हिं कृत्य "भूर्भुवस्वरो ३ मि" ति जपति० - - - न च पूर्वं जपं जपति । आ० श्रौ० १।२।३-६ ।

बौधायनमतम् - बौधायनमतेन हिम्, हिम्, हिम्, इति त्रिवारं हिंकारो-च्चारणं भवति । ततः मन्द्रस्वरेण पञ्चदश सामिधेन्यः ऋचः ब्रूयात्[1] ।

पञ्चदशसंख्यासम्पादनम् -

पञ्चदशसंख्या सम्पादने एकादशानां ऋचां आद्यन्तयोः द्वयोः त्रिरभ्यासेकृते ताभिः पञ्चदशसंख्या भवन्ति । सर्वत्र सामिधेनीमन्त्रपाठे विहितसंख्यापूरणं एवमेव कर्तव्यमिति सिद्धान्तः ।

सामिधेनीमन्त्रपाठः -

प्रवोवाजा अभिद्यवः०-१[2]।अग्नआयाहिवीतयेगृणानः ०-३[3] । ईडेन्योनमस्यस्तिरः०-३[4] । अग्निंदूतं वृणीमहे०-१[5] । सामिध्यमानोअध्वरे०-१[6] । समिद्धोअग्नआहुत०[7] २ । याः उक्ताः ऋचः एकश्रुतिसंततमनुब्रूयात्[8] ।

---

(१) अत्र त्रिरभिहिंकृत्यानवानमभिहिंकारहचमुपसंदधाति । बौ०श्रौ० ३।२७ हिं करोति । तै० सं० २,५,७ ।
(२) प्र वो वाजा० ऋ० सं० ३।२७।१ ।
(३) अग्नआयाहि० ऋ० सं० ६।१६।१०-१२ ।
(४) ईडेन्यो० ऋ० सं० ६।१६।१०-१२ ।
(५) अग्निं दूतं० ऋ० सं० १।१२।१ ।
(६) समिध्यमानो० ऋ० सं० ३, २७,४ ।
(७) समिद्धोअग्नआहुत० ऋ० सं० ५।२८।५-६ ।
(८) अथ सामिधेन्यः प्रवोवाजा० - - - ता एकश्रुतिसंततमनुब्रूयात् । आ०श्रौ० १।२।७-८ । बौ० श्रौ० ३।२७ हिम् । प्रवोवाजा अभिद्यवो ।। अग्नआयाहिवीतये - - ।। तं त्वा - - ।। सामिधाऽऽकः० त्रिः प्रथमा-मन्वाह० तै० सं० २,५।७-११ । तै० ब्रा० ३।५।१-४ । त्रिरुत्तमाम्० संततमन्वाह० ।

ऐकश्रुत्यलक्षणम् -

उदात्तानुदात्तस्वरितानामभिव्यञ्जका ये प्रयत्ना आयाम विस्रम्भा-दीपास्तेषामन्यतमस्यैकस्यैवात्यन्तसन्निकर्षेणा सजातीयप्रयत्नाव्यवधानेन यदुच्चारणं तदैकश्रुत्यम्[१]।

अत्र मन्त्रपाठे ये हौत्रधर्माः विशिष्टाः विहिताः ते आश्वलायनेन सामिधेनी प्रसंगे उक्ताः[२]। सामिधेनीमन्त्रान्ते प्रणवेन सह "अग्ने महाँ असि ब्राह्मणभारत" इति निगदं संधाय अवस्येत्[३]।

अध्वर्युः - सामिधेनीमन्त्रपाठस्य उपक्रमकाले प्रथमां समिधमाधाय, प्रणवे-प्रणवे द्वितीयादि एकादशसमिधोऽभ्याधाय - "समिद्धो अग्नवाहुतेत्यस्याह प्रणवान्ते तिस्रः सहैव आधाय, एकां परिशिष्य "आजुहोतादुवस्यत०" इत्ये तस्या वचन-काले वेदेन त्रिराहवनीयस्योपरि वाजयति[४]।

---

(१) उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यम् । आ०श्रौ० १।२।६ ।

(२) आ० श्रौ० १।२।१०-२६ ।

(३) सामिधेनीनामुक्तेन प्रणवेन - - - निगदेऽवसाय, आ०श्रौ० १।२।२७ तै०ब्रा० ३।५।१-४ ।

(४) अथ यत्र होतुरभिजानाति प्रवो वाजा अभिद्यव इति तत् प्रथमामभ्या दधाति प्रणवे प्रणवेऽभ्यादधात्यथ यत्र होतुरभिजानाति समिद्धो अग्नआहुतेति तदन्ततोऽभ्यादधाति परिसमिधं शिनष्ट्यथ यत्र होतुरभिजानात्याजुहोता-दुवस्यतेति तदेतेन वेदेन त्रिराहवनीयमुपवाजयति । बौ० श्रौ० १।१५ ऊर्ध्वे समिधावादधाति । अनूयाजेभ्यः समिधमतिशिनष्टि० - वेदेनोप-वाजयति० त्रिरुपवाजयति० । तै० ब्रा० ३,३,७ ।

यजमानः -

प्रथमसमिधाधानानन्तरं अग्नय इदं नममेति त्यागं पठेत् । ततः उच्चुष्मोअग्ने०[1] इति मन्त्रपाठं करोति । पश्चादध्वर्युः होतृकृत निगदावसाने ध्रुवाज्यात् स्रुवेणोपहृत्य, अस्तात् वेदं कृत्वा, दक्षिणं परिधिमारभ्य उत्तरात् परिधेरासीनः तिर्यञ्चमाधारमाधारयति । मनसाप्रजापतये स्वाहेति जुहुयात्[2] । यजमानः यथादेवतं त्यागः । आर्षेयान् प्रवृणानं होतारमनुमन्त्रयते[3] ।

गोत्रप्रवरोच्चारणस्वरूपं -

प्रवराम्नायः आश्वलायनश्रौतसूत्रस्य द्वादशतमे अध्याये, तदन्ते परिशिष्टे च विस्तरेण व्याख्याताः । यथा - यजमानः भारद्वाजगोत्रीयः

---

(१) अग्न्याधीयमानमनुमन्त्रयते उच्चुष्मोअग्ने० । बौ० श्रौ० १।१७-१८
उच्चुष्मो अग्ने० । तै० सं० १।५।२ ।

(२) अनूक्तासु सामिधेनीषु ध्रुवाज्यात् स्रुवेणोपहत्य वेदेनोपयम्य-प्राजापत्यं तिर्यञ्चमाधारमाधारयति प्रजापतयेस्वाहेतिमनसा ।
बौ० श्रौ० १।१५ ।
वेदेनोपयत्य स्रुवेण प्राजापत्यमाधारमाधारयति० । तै०ब्रा० ३,३,७,
यजुष्मीमाधारमाधारयति० मनसाऽऽधारयति० तिर्यञ्चमाधारयति०
मनसा प्रजापतये जुहुवति० । तै० सं० २,५,११ ।

(३) प्रवरं प्रक्रियमाणमनुमन्त्रयतेऽमर्त्यस्यते० । बौ० श्रौ० ३,१७ अमर्त्यस्यते०
तै० सं० १,६,२ ।

तस्य अङ्गिरस बार्हस्पत्य, भारद्वाजेति त्रिप्रवरा: भवन्ति । एवं गोत्रानुरोधेन सूत्रोक्त प्रवरोच्चारणं[1] कुर्यात् । एतत् प्रवरोच्चारणं पूर्वपठितनिगदस्यैव शेषभाग: ।

निविदनिदर्शनम् -
-------------

"देवेद्धोमन्विद्ध" इत्यारभ्य चतुर्दश निवित् पदानि "परिभूरसि" इत्येव मन्ताणि तत: आवह "देवान्यजमानाये" त्यादि सुयजायजेत्यन्तं आवाहननिगद:[2] । अध्वर्यु: - "अमर्त्यस्यते होता०" इति मन्त्रेण आधार-माघार्य, "मनोसि प्राजापत्य[3]" मिति मन्त्रेणानुमन्त्रयते ।

देवताह्वानम् -
-----------

होता - देवता आवाहनं करोति । आवाहने प्रथमदेवतायामयं विशेष: - "अग्नआवहेति तु प्रथमदेवता[4]" अत्र सूत्रे तु शब्देन यष्टव्य देवता आवाहनशब्दयोर्मध्ये अग्निशब्दं ब्रूयात् । सयथा - अग्निमग्न आ ३ वह । तत: आज्यभागौ देवते ते च यथा - अग्निमा ३ वह । सोममा ३ वह। तत:

---------------------------------------

(१) यजमानस्यार्षेयान् प्रवृणीतेयावन्तस्यु: - - - - - - - - - - - - - - - - - - - - - - - - - - - - - सर्वेषां मानवेति संशयेत् । आ० श्रौ० १।३।१-५ ।

(२) आ० श्रौ० १।३।६ । तै० ब्रा० ३,५,१-४ ।

(३) मनोऽसि प्राजापत्यं० तै० सं० १,६,२ । बौ० श्रौ० ३।१७ ।

(४) आ० श्रौ० १।३।७ ।

प्रधानदेवता: - पौर्णमास्यां अग्निं, अग्नीषोमौ चेति । दर्शे - आज्यभागयो: देवतयो: आवाहनानन्तरं प्रधानदेवतासु अग्निं इन्द्राग्नी चेति । "अन्तरेण हविषी विष्णुमुपांशुवैतरेयिण:"[1] अत्र इत्याश्वलायन सूत्रेण ऐतरेयिण: शाखाविशेष: ते एतमुपांशुयाजं उभयोरपि पर्वणो: अन्तरेण हविषोरिच्छन्ति ।

निदर्शनम् -

पौर्णमास्यां - अग्निमा ३ वह । विष्णुं आवह । अग्नीषोमावा ३ वहा । इति । दर्शे - अग्निमा ३ वह । विष्णुं आ ३ वह । इन्द्राग्नीअा ३ वहेति ।

अत्र यजमान: कृत सोमयाजिनश्चेत् अग्नीषोमस्थाने माहेन्द्रमावाहयेत् । अमावास्यायां - दधिपयोभ्यां यागं कुर्वतश्चेत् इन्द्राग्नीस्थाने इन्द्रोदेवता भवति । यावत्योदेवताश्चोदिता: तावन्ति आवहनानि भवन्ति । प्रधानदेवता: प्रतियागे आज्यापोद्धार योग्या: भवन्ति । तासुकृत आवाहनासु आज्यपान् देवान् आवाहयेत् । स यथा - देवाँ आज्यपाँ आ ३ वह । अग्निं होत्रायावहस्वं महिमानमा ३ वह । आवह जातवेद: सुयजायज । आज्यपा: इति प्रयाजानुयाज देवता: । अग्निं होत्रायावहेति स्विष्टकृदावाहनार्थं भवति । "सुयजायज" इति आवाहन निगदशेष: । तथा होता - यथास्थितरूर्ध्वंजानुरुपविश्य, वेदा: प्रस्तुतानि तृणानि वेदै: उदक् व्युह्य, वेदां भूमौ "अदितिर्मातिति" मन्त्रेण

---

(१) आ० श्रौ० १।३।१२ ।

अंगुष्ठतर्जन्यौ: प्रादेशमानं कुर्यात्[3]। अध्वर्युः - आग्नीध्रं सम्प्रेष्यति अग्निदग्नी-
न्त्रिस्त्रिः सम्मृड्ढि इति[1]। आग्नीध्रः - स इध्मसन्नहनेन स स्फ्यमावेष्ट्य,
तेन स्त्रिस्त्रिर्मूलमारभ्य, दक्षिणोत्तरान् परिधीन् सम्मृज्य, आहवनीयं अग्ने
वाजजिद्वाजं त्वें ति मन्त्रेण सम्मार्ष्टि[2]।

---

(१) अथ सम्प्रैषमाहाग्नी० । बौ० श्रौ० १।१५ ।

(२) अथैण आग्नीध्र इध्मसंनहनानि - - - - - - - - - - - - - - -
त्रिराहवनीयमुपवाजयत्यग्नि०, बौ० श्रौ० १।१५ । अग्निमग्नीत्रि-

(३) स्त्रिः संमृड्ढीत्याह० परिधीन् संमार्ष्टि० त्रिस्त्रिः सम्मार्ष्टि०
तै० ब्रा० ३,३,७। परिधीनुत्संमार्ष्टि० त्रिर्मध्यमम्० त्रिर्दक्षिणार्ध्यम्०
त्रिरुत्तरार्ध्यम्० त्रिरुपवाजयति० तै० सं० २,५,११। अग्नेवाजजिद्वाजं०
३,७,६,१४। अग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति भुवनमसि - - -
प्रसवमाकाङ्क्ष० दान्नास्वै । बौ० श्रौ० १।१५ मंत्रविभागः तै० सं० १।१।१२
आघारमाघारयति० कृशुमाघारयति० संततमाघारयति० आघारमाघार्य
ध्रुवां समनक्ति० एतद्धि ब्रूहीत्या श्रावयेति० अग्निर्देवो होतेति० प्रवरं
प्रवृणते० । तै० सं० २,५,११ आसीनोऽन्यमाघारमाघारयति ।
तिष्ठन्नन्यम्० असंस्पर्शयन् नत्याक्रामति० आघारमाघार्य ध्रुवां समनक्ति०
एतद्धि ब्रूहीत्या श्रावयेति० अग्निर्देवो होतेति० प्रवरं प्रवृणते० ।
तै० सं० २,५,११ आसीनोऽन्यमाघारमाघारयति ।तिष्ठन्नन्यम्०
असंस्पर्शयन् नत्याक्रामति० आघारमाघार्य ध्रुवां समनक्ति० त्रिरेवसमं
ज्यात्० तै० ब्रा० ३,३,७। आश्रावयिष्यन्तमनुमन्त्रयेताऽऽ
श्रावयन्तं० - - - - - - - - - - - - - - - - - - - - - - -
सर्वत्रैवं कर्मावृत्तौ । आ० श्रौ० १।३।२३-२६। यदाजानीति अग्नि-
र्देवोहोता० अथोपोत्थाय दक्षिणेन हस्तेन दक्षिणेऽंसेऽध्वर्युमन्वारभते

--------अग्निमपृष्ठेऽपि

अध्वर्युः - जुहूपभृतोरग्रतः "भुवनमसि विप्रथ०" इति मन्त्रेण प्राञ्चमञ्जलिं करोति । दक्षिणहस्तेन "जुह्वेह्यग्निस्त्वेति मन्त्रेण जुहूमादत्ते । "उपभृदेहि०" मन्त्रेण सव्यहस्तेन उपभृतमादत्ते । ततो देवता आह्वानकाले "अग्नाविष्णू मावामवे" ति मन्त्रं जपति । आहवनीयस्य दक्षिणतः "विष्णोस्थानमसि०" इति मन्त्रेण स्थानं कल्पयति । अत्र यजमानेन स्रुच्यन्वारब्धः । मध्यमपरिधिमध्यं जुह्वग्रेण संस्पृश्य अविच्छिन्नं प्राञ्चं "इत इन्द्रो अकृणोद् वीर्याणि" इति मन्त्रेण आघारमाघारयति । आहुति प्रदानानन्तरं स्रुचमुद् गृह्णाति । यजमानः - इन्द्रायेदं नममेति त्यागं पठेत् । अध्वर्युः असंस्पर्शयन् स्रुचौ दक्षिणेन पदाउदङ्०३०त्य, आक्रम्य "पाहिमाऽग्नेदुश्चरिता" दिति मन्त्रं जपति । "मखस्य शिरोसि इति मन्त्रेण जुह्वाध्रुवां त्रिः समनक्ति । यथायतनं स्रुचौ सादयित्वा स्फ्य मुत्करदेशे उत्खाग्रं निहत्य, आग्नीध्रं स्पृष्ठतः कृत्वा, प्रह्वः आश्रावयति । अध्वर्युः - ओ ३ श्रा ३ वय ।

---

---------पूर्वपृष्ठस्याग्रे

मन्वारभते सव्येन दक्षिणेऽसमाग्नीध्रं यद्युवं स्वयं प्रत्याश्रावयेन्नोपविशेत्
एवं दक्षिणस्यां श्रोण्यामन्वारभेत अग्निमन्वा० - - - - होतृषदन
मभिव्र जं जपति णण्मोवीरं० बौ० श्रौ० ३।२७-२८ ।

(१) आ० श्रौ० १।३।६-२२ । तै० ब्रा० ३,५,१-४ ।
अनूक्तासु सामिधेनीषु देवता आवाह्य । भूमौ प्रादेशं
कृत्वोपविशति इदमहं गायत्रेण छन्दसा - - - - - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - -
प्रगल्भोहाऽस्माज्जायते ।

- बौ० श्रौ० ३।२७ ।

आग्नीध्रः - अस्तु श्रौ ३ षट् ।

अध्वर्युः -

("अग्निर्दैवोहोता देवान्" इत्यारभ्य "प्राविताऽः" इत्यन्तं मन्त्रं पठित्वा, यजमानस्य प्रवरोच्चारणं कृत्वा, होतुर्नामगृहीत्वा, असौ अमुकशर्मा मानुषः इति । ततः उभौ तिष्ठतः सन् अध्वर्युरासीनः प्रसवमाकांक्षन्, होतुरनुज्ञामाकांक्षन् उपविशति ।) ।

होता -

आश्रावयिष्यन्तमध्वर्युं "आश्रावयन्नं देवेषु" इत्यारभ्य "मानुषः" इत्यन्तं सौत्रमन्त्रेण अनुमन्त्रयते । "उदायुषा स्वायुषो दीषधोनां०" इति मन्त्रं पठित्वा, उत्तिष्ठेत । उत्थाय "ऋतस्य पन्थामन्वेमि होता" इति मन्त्रेण अभिक्रम्य, अथ अध्वर्युं अन्वारभेत पार्श्वस्थेन पाणिना, आग्नीध्रं सव्येन पाणिना "इन्द्रमन्वारभामहे०" इति मन्त्रेणान्वारभेत । इध्मसन्नहनानि सम्मार्गतृणैः त्रिवारं अभ्यात्मं मुखं "सम्मार्गोसि०" इति मन्त्रेण सम्मृजीत । सकृत् मन्त्रेण तूष्णीं द्विवारम्[१] । यत्र संस्कार कर्मणि त्रिरावृत्तिर्विधीयते तत्र सकृत् मन्त्रेण द्विस्तूष्णीमिति सर्वत्र भवति न प्रधान कर्मणि[१] ।

---

(१) स्पृष्ट्वोदकं होतृषदनमभिमन्त्रयेता हे देधिषव्योदतस्तिष्ठान्यस्य सदने सीदयोऽस्मत्पाकतरः" इति । अंगुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरसेत् "निरस्तः परावसुरि तोदं-

होतृनिरसनोपवेशनविधिः[1] -

---

होता अपउपस्पृश्य, होतृषदनं नाम स्वं उपवेशन स्थानविशेषं "अहे दैधिषव्य०" इति मन्त्रेण अभिमन्त्रयते । अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात् तृणं गृहीत्वा, "निरस्तः परावसुः" इति मन्त्रेण प्रत्यक् दक्षिणाग्रं तृणं निरसेत् । तृणं निरस्य "इदमहमर्वावसोः सदने सीदामि" इति मन्त्रेण दक्षिणोत्तरिणोपस्थेन उपविशेत् । एते निरसनोपवेशने सर्वासनेषु प्रथमोपवेशने भवतः । समानेऽपि स्थाने प्रयोगावृत्तौ प्रवर्ग्यादिषु पुनः पुनः आवर्त्येते[1] ।

प्रगादापननिगदपाठः -

---

उपविश्य, होता "देवबर्हिः स्वासस्थं त्वाध्यासदेयं" इति ब्रूयात् । "अभिहिषहोतः प्रवरां बर्हिषद् भव" इति मन्त्रेण जानुशिरसाबर्हिरुपस्पृश्य

---

पूर्वपृष्ठस्याग्रे----------

(१) महमर्वावसोः सदने सीदामी" त्युपविशेद्दक्षिणतोत्तरिणोपस्थेन, आ० श्रौ० १।३।३०-३३ । अथासनात्तृणं निरस्यति शुष्कं वा प्रतिच्छिन्नाग्रं वा दक्षिणार्धं च सन्धिमनु प्रतीच्यं च निरस्तः परावसुरित्यथापउपस्पृश्योपस्तीर्योपविशतीदमह - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - -
उभौषमोदात आहवनीयं च अग्नाविष्णू, बौ० श्रौ० ३।२८ ।

"भूपतये नमो भुवनपतये०" इत्यारभ्य "मम होत्रं जुषध्वं" मित्यन्तं पठेत्[1] ।
मन्त्रान्ते किञ्चिदवसाय "अग्निर्होतावेत्वग्नेर्होत्रं वेत्तु प्रावित्रं साधुते यजमान-
देवतायो अग्नि" इत्यन्तं उक्त्वा "होतारमवृथा०" इति जपेत् । "घृतवति-
मध्वर्योस्रुचमास्यं" इत्यारभ्य "यज्ञियान" इत्यन्तं निगदं ब्रूयात् । निगदोऽयं
स्रुगादापनसंज्ञकः । यजमानस्य प्रवरोच्चारणादि स्रुगादापनान्तं कर्म मन्त्र-
पाठश्च उभयोः सूत्रयोः समानमेव, मन्त्रपाठेषु मन्त्रपाठानुक्रमो भिन्नः[2] ।

अथप्रयाजयागः -

अध्वर्युः[3] प्रयाजयागार्थं होतृकृत "घृतवती" शब्दयुक्तं निगदं श्रुत्वा,
जुहूपभृतावादाय, दक्षिणेन पोदन अत्याक्रम्येति । अत्र आग्नीध्रः उत्करस्थल-

---

(१) उपविश्य "देवबर्हिः स्वासस्थं त्वाध्यासदेयमिति ।
"अभिहिषहोतः प्रतरां बर्हिषद्भवे" ति जानुशिरसाबर्हिरुपस्पृश्या
तऊर्ध्वं जपेत् भूपतयेनमोभुवनपतयेनमो - - - - - - - - - - -
निगदेन । आ० श्रौ० १।४।७-६ ।
सुर्यौनो दिवस्पातु० ऋ० सं० १०।१५८।१ ।
नमो महद्भ्यो० ऋ० सं० १।२७।१३ ।
विश्वेदेवाः शास्तन० ऋ० सं० १०।५२।१ ।
अराधिहोता० ऋ० सं० १०।५३।२ ।
तदधवाचः प्रथमं ऋ० सं० १०।५३।४ ।
अथ तिस्र ऋचो जपति विश्वेदेवाः शास्तन० तदधवाचः
प्रथमं० नमो महद्भ्यो० ।

------अग्रिमपृष्ठेऽपि

प्रदेशे स्फ्यमिध्मसन्नहनानि आदाय दक्षिणामुखस्तिष्ठेत्[1] ।

अध्वर्युः - ओ ३ श्रा ३ वय ।

आग्नीध्रः - अस्तु श्रौं ३ षट्[2] ।

अध्वर्युः - "अस्तु श्रौं ३ षट्" इति सर्वत्र आश्राविते पश्चात् "समिधो यज" इति प्रैषं ददाति[3] । प्रकृतेष्टौ पञ्चप्रयाजाः भवन्ति । इमे याग संज्ञकाः । एकैकं प्रेषितः सन् यजति न सकृत् प्रेषितः सन् सर्वान् यजति[4] । "ये ३ यजामहे" इति आगू संज्ञको मन्त्रः याग मन्त्रादौ सर्वत्र भवति । याग मन्त्रान्ते वषट्

-----------------------------------------

पूर्वपृष्ठस्याग्रे-----------

(२) अग्निर्होतावेत्त्वग्नेर्हौत्रं वेतु - - - - - - - - - - - - -
- - - - - यज्ञियानिति, आ० श्रौ० १।४।१०-११ ।

(२) अग्निर्होतावेत्त्वग्निर्हौत्रं वेतु - - - - - - - - - - - - -
- - - - - - - - - - - - - यज्ञासयज्ञियान्, तै०ब्रा० ३।५।१-४ ।

(३) अथ यत्र होतुरभिजानाति घृतवतीं तज्जुहूपभृतावादायऽत्याक्रम्य,
बौ० श्रौ० १।१६ ।

(१) प्रत्याश्रावयेदाग्नीध्र उत्करदेशेतिष्ठन् स्फ्यमिध्मसन्नहनानीत्यादाय
दक्षिणामुख इति शाण्डायनकम्, आ० श्रौ० १।४।१३ ।

(२) आश्राव्याह,बौ० श्रौ० १।१६ । अस्तुश्रौषडित्यौकारं प्लावयन्
आ० श्रौ० १।४।२३ । आश्रावयेति चतुरक्षरमस्तु श्रौषडिति
चतुरक्षरं - - - - - - - - - - - - वषट्कारः, तै०सं० १,६,११ ।

(३) बौ० श्रौ० १।१६ । समिधो यजति० तनूनपातं यजति० इडो यजति०
बर्हिर्यजति० स्वाहाकारं यजति० । तै० सं० २,६,१-२ ।

(४) प्रयाजैश्चरन्ति । पञ्चैते भवन्ति । एकैकं प्रेषितो यजति०
आ० श्रौ० १।५।१-३ ।

कारोऽपि सर्वत्र भवति । आगूः, वषट्कारश्चोच्चारणे सर्वत्र उच्चैस्तरत्वं बलीयस्त्वं च आवश्यकं तयोः आगूर्वषट्कारयोः आद्योः प्लुतिः कार्या[1] । सर्वत्र होता याज्यान्ते वषट्कार मुक्त्वा "वागोजः सह ओजो मयि प्राणापानौ[2]" इति मन्त्रेण वाग्यमनार्थं अनुमन्त्रणं करोति । एतत् अनुमन्त्रणं याज्यान्तर भाववचनम् ।

अध्वर्युः - समिधोयज ।

होता - ये ३ यजामहे समिधः समिधो अग्नआज्यस्य व्यन्त वौ ३ षट् ।

इति याज्या मन्त्रं पठति[3] ।

अध्वर्युः - होतुर्वषट् कृते आहवनीय पूर्वार्द्धे जुहोति[4] ।

यजमानः - "वसन्ता येदं" नममेति त्यागं पठेत् । तथा च "वसन्तमृतूनां०" इति मन्त्रेण अनुमन्त्रयते[5] ।

---

(१) आगूर्याज्यादिरनुयाजवर्जम् । ये ३ यजामहस्त्यागूर्वषट्कारोऽन्त्यः सर्वत्र । उच्चैस्तरां बलीयान्याज्यायाः । तयोरादौ प्लावयेत् । याज्यान्तं च, आ० श्रौ० १।५।४-६ ।

(२) आ० श्रौ० १।५।१७ ।

अथ वषट्काराणामनुमन्त्रणो वषट्कार मामि० यद्युवा अभ्यग्रा-वषट्काराः स्युरेतावतैवाऽनुमन्त्रयते वोजः सह ओजो वागिति । बौ० श्रौ० ३।२८ ।

(३) आ० श्रौ० १।५।१५, समिधो अग्न आज्यस्य वियन्तु, तै० ब्रा० ३।५।५-६ ।

(४) वषट्कृते जुहोति । बौ० श्रौ० १।१६, पूर्वार्द्धे जुहोति० तै० सं० २।६।१-२ ।

(५) बौ० श्रौ० ३।१७, तै० सं० १,६,२ ।

पुनः पुनराश्राव्य होतृक्रमेण -

२- तनूनपादग्न आज्यस्य वेतु ।

३- इडो अग्न आज्यस्य व्यन्तु ।

४- बर्हिरग्न आज्यस्य वेतु ।

पञ्चमे आगूर्य प्रतिदेवतं स्वाहा शब्दाभ्यासपूर्वकं स्वाहा देवा इत्यन्तं यथासूत्रं ब्रूयात्[१] ।

आहुतिप्रदानस्थाननिर्देशः -
---

द्वितीये यागे - दक्षिणतो जुहोति ।

तृतीये यागे - पश्चार्द्धे जुहोति ।

चतुर्थे यागे - चतुर्थ यस्यन्त्यधर्मोपभृतं जुह्वां समानीय उत्तरतो जुहोति[२] ।

पञ्चमे यागे - मध्ये जुहोति ।

---

(१) आ० श्रौ० १।५।२१-२४ ।
तनूनपादग्नआज्यस्यवेतु । इडो अग्न आज्यस्य वियन्तु । बर्हिरग्न आज्यस्यवेतु । स्वाहाग्निं स्वाहा - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - -
आज्यस्य हविषो वेतु, तै० ब्रा० ३,५,५-६ ।

(२) बौ० श्रौ० १।१६ ।

यजमानानुमन्त्रणमन्त्राः -

द्वितीये यागे - ग्रीष्मायेदं नममेति त्यागः । ग्रीष्ममृतूनां० इत्यनुमंत्रणमन्त्रः ।

तृतीये यागे - वर्षाभ्य इदं नममेति त्यागः । "वर्षाऋतूनां प्रीणामि" ० इत्यनुमन्त्रणमन्त्रः ।

चतुर्थे यागे - शरद इदं नममेति त्यागः । "शरदमृतूनां०" इत्यनुमन्त्रणमन्त्रः ।

पञ्चमे यागे - हेमन्तशिशिराभ्यामिदं नममेति त्यागः । "हेमन्तशिशिराऋतूनां०" इत्यनुमंत्रणमन्त्रः ।[1]

अध्वर्युः पञ्चमपञ्चमप्रयाजाहुतिं हुत्वा, उदङ्०ङ०त्याक्रम्य संप्रावेण आनुपूर्व्येण अभिघारयति ।[2]

अभिघारणक्रमः - ध्रुवां, दक्षिणं पुरोडाशं, पुनर्ध्रुवां, उत्तराणि हवींषि, उपभृतमन्ततः यथाक्रमं अभिघार्य,[3] आज्यभागाभ्यां चरति ।

---

(१) ग्रीष्ममृतूनां० । वर्षाऋतूनां० । शरदमृतूनां० । हेमन्तशिशिराऋतूनां० बौ० श्रौ० ३।१८ । तै० सं० १,६,२ ।

(२) पंचमप्रयाजानिष्ट्वोदङ्०ङ०त्याक्रम्य संप्रावेणानुपूर्वं हवींष्यभिघारयति । बौ० श्रौ० १।१६ । प्रयाजानिष्ट्वा हवींष्यभिघारयति । तै० सं० २,६,१-२ ।

(३) ध्रुवमेवाग्रेऽथदक्षिणं पुरोडाशमथध्रुवामथोत्तरं पुरोडाशमथशृतमथदध्युपभृतमन्ततः । बौ० श्रौ० १।१६ ।

आज्यभागहोम: -

---

अध्वर्युः - स्रुवाज्यात् स्रुवेण चतुर्गृह्णान आह - 'अग्नयेनुब्रूहि' इति।[1]

अग्नेपुरोनुवाक्या -

होता - 'अग्निर्वृत्राणिजंघनत्०'[2] इति पुरोनुवाक्यां पठति।

दर्शेवृधन्वत् - 'अग्निः प्रत्नेन मन्मनेति'[3]।

अध्वर्युः - ये ३ यजामहेऽग्निं जुषाणो अग्निराज्यस्यवेतु
होता - वौ ३ षट्' इति पठति[4]।

अध्वर्युः - अत्याक्रम्य आश्राव्याह - अग्निं यजेति[5]।

अध्वर्युः - वषट्कृते पूर्वार्द्धे जुहोति। यजमानः - अग्नयेदं नममेति त्यागः।

---

(१) अथ चतुर आज्यस्य गृह्णान आह अग्नयेनुब्रूहि। बौ०श्रौ० १।१६।

(२) अग्निर्वृत्राणिजंघनदिति पूर्वस्याज्यभागस्यानुवाक्या आ० श्रौ० १।५।२६, तै० ब्रा० ३,५।५-६। अग्निर्वृत्राणिजंघनत्० ऋ० सं० ६।१६।३४।

(३) अग्निः प्रत्नेनमन्मना० ऋ० सं० ८।४४।१२। वृधन्वन्तावमावास्यायाम्। अग्निः प्रत्नेन मना०। आ० श्रौ० १।५।३५, तै० ब्रा० ३,५।५-६।

(४) बौ० श्रौ० १।१६।

-----अग्रिमपृष्ठेऽपि

अध्वर्युः - उदगागत्य, पुनश्चतुर्गृहणान आह - 'सोमायानुब्रूहि' इति[1]।

होता - 'त्वं सोमासि सत्पतिः' रिति[2] पुरोनुवाक्यां पठति ।

दर्शे - 'सोमगीर्भिष्ट्वावयं' मिति[3] पुरोनुवाक्या ।

अध्वर्युः - अत्याक्रम्य, आश्राव्याह - 'सोमं यजे' ति[4] ।

होता - ये ३ यजामहे सोमं[5] जुषाणः सोम आज्यस्य हविषो वे तु वौ ३ षट् ।

अध्वर्युः - वषट्कृते दक्षिणपूर्वार्धे जुहोति[6] ।

यजमानः - सोमायेदं नममेति त्यागं पठेत् । तथा च 'अग्नीषोमयोरहं देव-

---

पूर्वपृष्ठस्याग्रे -------

(५) आ० श्रौ० १।५।२८ । तै० ब्रा० ३,५,५-६ ।

(६) वषट्कृत उत्तरार्धपूर्वार्धे प्रतिमुखं प्रबाहुग् जुहोति । बौ०श्रौ० १।१६ चक्षुषी वा एते यज्ञस्य यदाज्यभागौ० पूर्वार्धे जुहोति० प्रबाहुग् जुहोति० उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमाय०,

तै० सं० २,६,२ ।

(१) बौ० श्रौ० १।१६ ।

(२) त्वं सोमासिसत्पतिरित्युत्तरस्य । आ० श्रौ० १।५।२८ ।
त्वं सोमासिसत्पति० ऋ० सं० १।९१।५ । तै० ब्रा० ३,५-६ ।

(३) सोमगीर्भिष्ट्वावयं० आ० श्रौ० १।५।३५,
ऋ० सं० १।९१।११ । तै० ब्रा० ३।५।५-६ ।

(४) बौ० श्रौ० १।१६ ।

(५) आ० श्रौ० १।५।२८ ।,
तै० ब्रा० ३।५।५-६ ।

(६) बौ० श्रौ० १।१६ ।

यज्यया वसुष्मान् भूयासं[1] इति त्यागानुमन्त्रणं करोति ।

अत्र अननुष्ठिते इष्टिलोपे पथिकृत संज्ञकः अग्निदेवताकः अष्टाकपालः पुरोडाशः कर्तव्यः[2] । इष्ट्यभावे यजमानः अशक्तश्चेत् पथिकृतेष्टिस्थाने पूर्णाहुति-रूपेण एकामाज्याहुतिं याज्ञिकसमाख्या बलात् "अग्नये पथिकृते स्वाहा" इत्येक-माज्याहुतिं जुहुयात्[3] ।

प्रधानयागः -
-----------

अध्वर्युः ध्रुवाज्यात् जुह्वामुपस्तीर्य, दक्षिणपुरोडाशस्य पूर्वार्धात् अवद्यन्नाह - "अग्नयेनुब्रूहि"[4] इति । होता - अग्निदेवताकं पुरोनुवाक्यामन्त्रं पठति । अग्निमुर्धादिवः ककुत्०[5] - - - - - - जिन्वती ३ मिति । अध्वर्युः - एकहस्तेन नमस्कारेण "मामेमासं विकथा०" इति मन्त्रेण पुरोडाश-मभिमृशति । "भरतमुद्धरे०" इति मन्त्रेण अङ्गुष्ठमूलप्रदेशिन्याग्राभ्यामसंस्पृष्ट-नखाभ्यां पूर्वार्धादङ्गुष्ठपर्वमात्रवद्यति । एवमेव अपरार्धात् । अत्र यजमानः पञ्चप्रवरान्वितश्चेत् मध्यमपूर्वार्द्धापरार्द्धक्रमेणावदानम् । सर्वत्र पञ्चावत्तीनां त्रिरवदानमिति सिद्धान्तः । "यदवदानानिते०" इति मन्त्रेण आज्यस्थाल्या-ज्येन प्रत्यनक्ति । सर्वत्र उपस्तरणाभिधारणे पुरस्तादुपरिष्टाच्च क्रमेण

---

(१) आज्यभागाविष्टावनुमन्त्रयते अग्नीषोमयोरहं० । बौ० श्रौ० ३।१८ ।, तै० सं० १,६,२ ।

-------अग्रिमपृष्ठेऽपि

अभिघारणं कुर्यात् । यत्र आज्याहुताभवति तान् ध्रौवाज्येन जुहुयात् । प्रत्यञ्जनं आज्यस्थाल्याज्येन कुर्यात् । आज्याहुतौ पुरस्तात् हविः प्रदीपस्थाने हुत्वा, ततः अत्याक्रम्य, आश्राव्याह - "अग्निं यजे" ति[१] ।

होता - "ये ३ यजामहेऽग्निं भुवोयज्ञस्य० - - - - - वाहा वौ ३ षट्" इति याज्यां पठति[२] ।

अध्वर्युः - होतुर्वषट् कृते जुहोति ।

यजमानः - अग्नयेदं नममेति त्यागं पठेत् । ततः "अग्नेरहं देवयज्ययान्नादो भूयास" मिति[३] त्यागानुमन्त्रणं करोति । ततः उदङ्०ङ०त्याक्रम्य प्रदिप्त हविषः उपरिष्टात् आज्याहुतिं जुहोति । अत्रावधेयम् -

---

पूर्वपृष्ठस्याग्रे---------

(२) अग्नयेपथिकृते पुरोडाशमष्टाकपालं निर्वपेत् ।

(३) बौधायनोक्तदर्शपूर्णमासप्रयोगः । पृ० सं० ३५ ।

(४) बौ० श्रौ० २।१६ ।

(५) आ० श्रौ० २।६।१, ऋ० सं० ८।४४।२६, तै० ब्रा० ३,५,७ ।

(१) अथैनमुपतिष्ठतेमामेमासं० अथैनमभिमृशति भरत० अभिघारयति प्रत्यनक्ति यदकानानितं० अग्निं यजेति । बौ० श्रौ० २।१६ ।
मन्त्रभागः, तै० ब्रा० ३,७,५ ।

(२) भुवोयज्ञस्य० आ० श्रौ० २।६।१, ऋ० सं० १०,८,६
तै० ब्रा० ३,५,७ ।

(३) अग्नेरहं देवयज्यया०, तै० सं० १,६,२ ।
अग्निमिष्टमनुमन्त्रयतेऽग्नेरहं देवयज्यया ।
बौ० श्रौ० ३।१८ ।

वाज्यव्यतिरिक्त चरुपुरोडाशादि हवनेषु पुरस्तादुपरिष्टाच्च तूष्णीं ध्रुवाज्यात् ध्रुवाहुतिं जुहोतीति सर्वत्र ।

विष्णुदेवताकमुपांशुयागः -

---

यत्र-यत्र विष्णुर्देवता तत्र तत्र उपांशुत्वेन - यागविधानमिति । तत्र बौधायनमतेन प्रजापति देवताउपांशु गृह्यते ।[1]

अध्वर्युः - ध्रौवाज्यात् चतुर्गृहीत्वाऽऽह - "विष्णवे" (उपांशु) अनुब्रूहीत्युच्चैः वदति ।

होता - "इदं विष्णुर्विचक्रमे०"[2] इति मन्त्रस्य उपांशुपाठः, मन्त्रान्ते ओं ३ मित्युच्चैः पठेत् ।

अध्वर्युः - अत्याक्रम्य, आश्राव्याह - "विष्णुं" (उपांशु) "यज" इति उच्चैर्वदति ।

होता - "ये ३ यजामहे" इत्युच्चैः, विष्णुं त्रिर्देवः पृथिवीमेषएता-[3] मित्युपांशु याज्यामन्त्रं पठेत् । मन्त्रान्ते "वौ ३ षट्" इत्युच्चैः

---

(१) अथ चतुर आज्यस्य गृह्णान आह प्रजापते इत्युपांशु अनुब्रूहीत्युच्चैः अत्याक्रम्याऽऽश्राव्याह प्रजापतिं इत्युपांशु यज इत्युच्चैः वषट्कृते - जुहोति । बौ० श्रौ० १।१६ ।
प्रजापतेनत्वदेतान्यन्यो० इति पुरोनुवाक्या ।) तै० ब्रा० ३,५,७ ।
सवेदपुत्रः पितरं० इति याज्या ।)

(२) इदं विष्णुर्विचक्रमे० । आ० श्रौ० १।६।१, ऋ० सं० १,२२,१७ ।

(३) त्रिर्देवः पृथिवीमेष एतां० आ० श्रौ० १,६,१, ऋ० सं० ७,१००,३ ।

कुर्यात् ।

यजमान: - विष्णव इदं नममेति त्यागं पठेत् । तथा 'दब्धिरस्य दब्धी-
भूयासं०' इति मन्त्रेण अनुमंत्रणं करोति । अपउपस्पृश्येति ।[1]
तत: उदङ्०ङ०त्य, अत्याक्रम्य, उपस्तीर्य, उत्तर पुरोडशस्य -
अपरार्दात् अवद्यन्नाह - 'अग्नीषोमाभ्यामनुब्रूही' ति ।[2]

अध्वर्यु: - पूर्ववत् पुरोडाशोपस्थानादि ध्रुवाहुत्यन्तं कुर्यात् ।

होता - 'अग्नीषोमासवेदसा०'[3] इति पुरोनुवाक्या मन्त्रं पठति ।

अध्वर्यु: - अत्याक्रम्य, आश्राव्याह - 'अग्नीषोमोयज' इति ।

होता - ये ३ यजामहेऽग्नीषोमौ युवमेतानि०[4] इति वषट्कारपूर्वकं
याज्यामन्त्रं पठति ।

अध्वर्यु: - होतुर्वषट्कृते जुहोति ।

यजमान: - 'अग्नीषोमाभ्यामिदं नममेति त्यागं वदेत् ।
'अग्नीषोमयोरहं देवयज्ययावृत्रहाभूयासम्०' इत्यागानुमन्त्रणं
करोति ।[5]

---

(१) दब्धिरस्यदब्धी० तै० सं० १,६,२ । उपांशुयाजमिष्टमनुमन्त्र्यते
दब्धिरस्य०, बौ० श्रौ० ३।१८ ।

(२) अथोपस्तीर्योत्तरस्य पुरोडाशस्यापरार्दादवद्यन्नाहाग्नीषोमाभ्या-
मिति, बौ० श्रौ० १।१६ ।

(३) अग्निषोमासवेदसा० । आ० श्रौ० १।६,१, ऋ० सं० १,९३,९ ।

(४) युवमेतानिदिविरो० । आ० श्रौ० १,६,१, ऋ० सं० १,९३,५ ।

(५) अग्नीषोमाविष्टामनुमन्त्र्यते 'अग्नीषोमरहं०',
बौ० श्रौ० ३,१८, तै० सं० १,६,२ ।

अध्वर्युः - उदङ्० ह०त्याक्रम्य, उपस्तीर्य, तृतीयपुरोडाशस्य अपरार्धादवद्यन्नाह - "इन्द्रायवैमृधायानुब्रूहि" इति ।[1]

होता - "प्रससाहिषे०"[2] इति याज्यामन्त्रं पठति इति पुरोनुवाक्यामन्त्रं पठति ।

अध्वर्युः - पूर्ववत् अवदानधर्मेण ध्रुवाहुत्यन्तं कुर्यात् । ततः अत्याक्रम्य, आश्राव्याह - "इन्द्रं वैमृधं यजे" ति । "इन्द्रसानसिंरयिं"[2] ।

अध्वर्युः - होतुर्वषट् कृते जुहोति ।

यजमानः - इन्द्रायवैमृधायेदं नममेति त्यागं पठेत् । "इन्द्रस्य वैमृधस्याहं०" इत्यनुमन्त्रणमपि कुर्यात्[3] ।

दर्शे - विष्णोरनन्तरं इन्द्रः इन्द्राग्नोच[4] देवते भवतः । याज्यापुरोनुवाक्ये - इन्द्रस्य पूर्ववदेव याज्यानुवाक्ये भवतः । इन्द्राग्नीः - इन्द्राग्नोअवसागतम्, गीर्भिर्विप्रः प्रमतिमिच्छमान[5] इति याज्यानुवाक्ये भवतः ।

---

(१) बौ० श्रौ० १,१६ ।

(२) इन्द्रसानसिंरयिं, प्रससाहिषेपुरुहूतशत्रून् । आ० श्रौ० १,६,१ । ऋ० सं० १,८,१, ऋ० सं० १०,१८०,१,, तै० ब्रा० ३,५,७ ।

(३) बौ० श्रौ० ३,१८ । तै० सं० १,६,२ ।

(४) इन्द्राग्निभ्यामित्यमावास्यामसंनयत इन्द्रायेति संनयतो महेन्द्रा येति वा यदि महेन्द्रयाजी भवति ।

(५) इन्द्राग्नीअवसागतं, गीर्भिर्विप्रः प्रमतिमिच्छमान० आ० श्रौ० १,६,१, ऋ० सं० ७,९४,७, । ऋ० सं० ७,९३,४ ।

बौधायनपक्षे - इन्द्राग्नीरोचनादिवः, श्नथद्वृत्रमुतसनोति० इति याज्यानुवाक्ये भवतः[1]। इति प्रधानयागः।

अथस्विष्टकृद्यागः -
-----------------

अध्वर्युः - उदङ्ङत्याक्रम्य, जुहूवामुपस्तीर्य, दक्षिणपुरोडाशस्य उत्तरार्धादवधन्नाह - 'अग्नयेस्विष्टकृतेनुब्रूहि' इति[2]। ततः सकृदङ्गुष्ठपर्वाधिकमवधाय, ध्रुवाज्यात् सकृत्-सकृत् उत्तरयोः पुरोडाशयोः सकृत्-सकृत् स्विष्टकृतभागं गृहीत्वा, द्विरभिघार्य, न प्रत्यनक्ति। पन्वावचीनां तु उत्तरादर्धादवद्विस्वदानमिति विशेषः। अवत्ते स्विष्टकृति ध्रुवाज्यात् - ध्रुवेण 'कृणमवाजिन०'मिति जुहोति। दर्शे - 'अमावास्यासुभगासुशेवा०' इति तथैव जुहोति[3]। होता - 'पिप्रोहिदेवां उशतोयविष्ठ०' इति पुरोनुवाक्यामन्त्रं पठति[4]।

---------------------------------------

(१) तै० ब्रा० ३,५,७ ।

(२) बौ० श्रौ० १।१७ ।

(३) सकृद्दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यति० द्विरभिघारयति न प्रत्यनक्ति। अवत्ते स्विष्टकृतिध्रुवेणपार्वणौ होमौ जुहोत्यृणमं० अमावास्या सुभगासुशेवा० बौ० श्रौ० १।१७।
ऋणमं०। सुभगासुशेवा०। तै० ब्रा० ३।७।५ ।

(४) अथस्विष्टकृतः पिप्रोहिदेवां उशतो यविष्ठेत्यनुवाक्या, आ०श्रौ० १।६,२। पिप्रोहीदेवां०। ऋ० सं० १०,२,१। तै० ब्रा० ३,५,७।

अध्वर्युः - अत्याक्रम्य, आश्राव्याह - "अग्निंस्विष्टकृतं यजेति"[1]।

होता - ये ३ यजामहेऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्य-

याडग्नेः प्रियाधामान्ययाट् सोमस्य प्रि० अग्नेः प्रि०,

उपांशु विष्णोः प्रि०, अग्नीषोमयोः प्रि०, इन्द्रस्य वैमृधस्यप्रि०,

देवानामाज्यपानां प्रियाधामानि०, यक्षदग्नेर्होतुः प्रियाधामानि-

यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वराजातवेदाजुषतां

हविरग्नेयदद्यविशो अध्वरस्य होतरिति वषट्कारान्तमनवानपाठं करोति[2]।

अध्वर्युः - होतुर्वषट्कृते उत्तरार्द्धं पूर्वार्द्धे आहुतीरतिहायजुहोति संस्रावमपिच

जुहोति[3]। यजमानः - अग्नयेस्विष्टकृत इदं नममेति त्यागं पठेत्। अग्नेः-

स्विष्टकृतोऽहं देवयज्यया० इति अनुमन्त्रणं करोति[4]। अध्वर्युः - उदङ्०ङ०त्या-

क्रम्य, जुह्वामप आनीय, संक्षालनं अन्ततः परिधि "वैश्वानरेहविरिदं

जुहोमि" इति मन्त्रेण निनयति।

यजमानः - अग्नयेवैश्वानरायेदं नममेति त्यागं वदेत्।

अध्वर्युः - जुहूं प्रक्षाल्य, निष्टप्य, अद्भिः पूरयित्वा, "इमं समुद्रं

---

(१) बौ० श्रौ० १।१७।

(२) आ० श्रौ० १।६,३-६। तै० ब्रा० ३,५,७।

(३) बौ० श्रौ० १।१७।

(४) तै० सं० १,६,२, स्विष्टकृतमिष्टमनुमन्त्रयतेऽग्निः स्विष्टकृत०
बौ० श्रौ० ३।१८।

(५) अथोदङ्०ङ०त्याक्रम्य जुह्वामपआनीय संक्षालनमन्तः परिधिनिनयति
वैश्वानरे० निर्णिज्यपूर्वं निष्टप्याऽद्भिः पूरयित्वाबहिः परिधि-
निनयति इमं समुद्रं० बौ० श्रौ० १।१७।

शतधारमुत्स० मिति मन्त्रेण बहिः परिधिं निनयति ।

यजमानः - अग्नयेदं नममेति त्यागं पठेत् ।

इडोपाह्वानम् -

अध्वर्युः औपभृतमाज्यं सर्वं जुह्वामानीय, यथायतनं स्रुचौ सादयित्वा, प्राशित्रमादाय, तस्मिन् दक्षिणपुरोडाशस्योत्तरार्धात् यवमात्रं "अज्यायोयवमात्रं मिति मन्त्रेण अवद्यति । ततः अवदीयमाने भागे "अग्निर्मादुरिष्टा० दिति मन्त्रं यजमानं जपति । प्राशित्रभागं स्रुवदण्डेनाभिधार्य,प्रणीतापश्चिमतः - सादयित्वा, इडापात्रमन्तर्वेदि निधाय, तस्मिन् आज्यस्थाल्यामुपस्तीर्य, दक्षिणपुरोडाशस्य दक्षिणार्धात् प्ररुज्यं मनुनादृष्टा० मिति मन्त्रेण अवद्यति । ऐन्द्राद्द्वितीयमवदधाति । तस्यैव पुरोडाशस्य पूर्वार्धात् त्र्यङ्गुलमाज्येन संतर्प्य, अग्रेणध्रुवां यजमानभागं निदधाति । "योमेऽन्तिदूरे० इति मन्त्रेण स्वं भागमनुमन्त्रयते । ब्रह्मभागमपितत् समीपे निदधाति । तं ब्रह्मभागं ध्रुवाज्यादवधाति ।[१]

---

(१) अत्रौदौपभृतमाज्यं सर्वंश सर्वंश एव जुह्वां समानयते ------- -------------------------

होतुर्विरङ्गुलावनक्ति । बौ० श्रौ० १।१७-१८, पुरस्तात् प्रत्यङ्ङासीन इडाया इडामादधाति । हस्त्या होत्रे द्विरङ्गुलावनक्तिपर्वणोः । तै० ब्रा० ३,३,८ ।

अध्वर्युः - होतुरङ्गुलि पर्वण्यनक्ति ।

होता: - अध्वर्युणा अन्वायित्वा, ते पर्वणि आत्माभिमुखं कृत्वा, ओष्ठयोः अवागपर्वणिन्निमार्ष्टि " वाचस्पतिनाते हुतस्येषे प्राणायप्राश्नामि " मनसस्पतिनाते हुतस्येषेऽपानाय प्राश्नामि । इति मन्त्रेण । अपउपस्पृश्येति[1] ।

अध्वर्युः - इडां होतृहस्ते प्रददाति । होतृहस्ते इडालेपा दुपस्तीर्य, प्रथमं भागमाधाय, होता द्वितीयं भागं अङ्गुल्यङ्गुष्ठयोर्मध्येन प्रदेशेन स्वयमेव आददीत[2] ।

एषभागएवान्तरेडा संज्ञकः । ततोऽध्वर्युः - इडालेपेन अभिघार्य, अध्वर्युः, यजमानः, ब्रह्मा, आग्नीध्रः, होतुराह्रियमाणामिडान्वारभन्ते[3] ।

होता - दक्षिणहस्तेन इडापात्रं गृहीत्वा, आस्यसम्मिताकृत्वा, उपहवान निगदमन्त्रं पठति[4] ।

---

(१) प्रदेशिन्याः पर्व(णी) अन्वायित्वौष्ठयोरश्यात्मं निमार्ष्टि । वाचस्पतिनाते हुतस्येषे० । मनसस्पतिनाते० । आ० श्रौ० १,७,१-२ यत् पूर्वाकं तदुत्तरोष्ठे प्रोहति वाचस्पतये० सदसस्पतये० इत्यधरोऽष्ठेपोहति । अथाऽपउपस्पृश्य । बौ० श्रौ० ३,२८, पशवो वा इडा । स्वयमादत्ते, तै० सं० २,६,८ ।

(२) स्पृष्टवोदकमन्जलिनेडां प्रतिगृह्य - - - - - - अन्तरेणाङ्गुष्ठमंगुलीश्च स्वयं द्वितीयमाददीत० आ० श्रौ० १।७।४-६ ।

(३) समन्वारभते० बौ० श्रौ० १।१८ । तस्मात्सा ऽन्वारभ्या०तै०ब्रा०३,३,८ ।

(४) प्रत्याहृत्याङ्गुलीरमुष्टिं कृत्वा दक्षिणत इडां परिगृह्यास्य संमितामुपह्वयते प्राणसंमितां वा । आ० श्रौ० १।७।७ । इडां मुखसंमितामुपह्वयते । बौ० श्रौ० ३।२८ । मुखमिवप्रत्युपह्वयेत, तै० ब्रा० ३,३,८ ।

इडोपाह्वाननिगदमन्त्रः -

"इडो पहूता सहदिवा" इत्यारभ्य "उपमामिडावृष्टिह्वयता" मिति । निगदमंत्रपाठउपांशु वक्तव्यः[1] । उपांशुनिगदोच्चारणसमये अध्वर्युप्रभृतयः "सुरूपवर्णवर्णारेहि" इति मन्त्रेण आहूयमानामिडामनुमन्त्रयते[2] । ततः "इडोपहूतोपहूतेडोपास्मान्॰" इत्युच्चैः निगदपाठः उच्चस्वरेण भवति[3] । अस्मिन् निगदपाठे "दैव्या अध्वर्यवं" इति वाक्यं श्रुत्वा, अवशिष्टं दक्षिणं पुरोडाशं चतुर्धा कृत्वा, बर्हिषि निदधाति ।

---

(१) इडोपहूता सह दिवा - - - - - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - वृष्टिह्वयतामित्युपांशु,
आ॰ श्रौ॰ १।७।८ ।
उपहूतं रथन्तरं - - - - - - - - - - - - - - - - - -
जुषस्वमेहे इत्युपांशुक्त्वेति, तै॰ब्रा॰ ३,५,८ । बौ॰श्रौ॰ ३,२६ ।

(२) इडामाहूयमानामनुमन्त्रयते सुरूपवर्णवर्ण एहि इति प्रतिपद्य मघोनी इत्यातः । बौ॰ श्रौ॰ ३,१८ ।
सुरूपवर्णवर्ण एहीमान्॰ तै॰ सं॰ १,६,३ ।
तामाहूयमानामभिमन्त्रयेत सुरूपवर्णवर्ण एहीति॰,
तै॰ सं॰ १,७,१ ।

(३) अथोच्चैः । इडोपहूतोपहूतेडो॰ - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - - - -
आ॰ श्रौ॰ १।७।८ । उच्चैनिरुक्तामुपह्वयते,
बौ॰ श्रौ॰ ३,२६ ।

"उपहूतोयं यजमान" इति श्रुत्वा, यजमानो होतारमीक्षमाणो गोरूपाया-ळाया वायुं वत्स्वेन ध्यायेत्[1]। "हविर्जुषन्तामिति तस्मिन्नुपहूतः" - इत्यन्तो निगदमन्त्रपाठः। तस्य मन्त्रस्य वाचनान्ते अध्वर्युयजमानौ - "उपहूतः पशुमानसानि०"[2] इति मन्त्रपाठं कुरुतः। ततोऽध्वर्युः - इडायाः पञ्चमभागं द्वेधा कृत्वा, अग्नीधे षडवत्तं ददाति। ततो ब्रह्मणे होत्रे च, तस्य तस्य भागं दत्त्वा, सर्वे इडां प्राश्नन्ति[3]। होता - "इडेभागं जुषस्व न०" इति मन्त्रेण पूर्वदापित अवान्तरेडाभागं प्राश्नाति[4]। यजमानः - प्राश्यमानामवान्तरेडां

---

(१) यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेत्०, तै० सं० १।७।१।
अथ यत्र होतुरभिजानात्युपहूतोऽयं यजमान इति तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेत्। बौ०श्रौ० १।१८।

(२) उपहूतः पशुमानसानीत्याह०। तै० ब्रा० ३,३,८।

(३) उपहूतायामिडायामग्नीध आदधाति षडवत्तमुपस्तृणाति - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - प्राश्नन्ति। मार्जयन्ते। बौ० श्रौ० १।१८। तै० सं० १,७,१।
आग्नीध्रे प्रथमायाऽऽदधाति० सकृदुपस्तीर्य द्विरादधत्। उपस्तीर्य द्विरभिघारयति। षट्सम्पद्यन्ते०। तै० ब्रा० ३,३,८।

(४) उपहूयावान्तरेडां प्राश्नीयादिडेभागं जुषस्व नः० - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - सर्वं पुरुषा इति वा। आ० श्रौ० १७।६। स यदि सर्वां प्राशिष्यन् - - - - - - - - - - पुरोडाश शकलमवच्छिद्यैव प्रश्नीयादिडासि स्योनासि०। बौ० श्रौ० ३।२६।

'जुष्टिरसिजुषस्वन०' इति मन्त्रेणानुमन्त्रयते[1] । ततः सर्वे च यजमानः इडां भक्षयेयुः ।

इडाभक्षणाङ्गमार्जनम् -

यजमानः प्रस्तराद्यः अञ्जलिं कृत्वा, अध्वर्युणा प्रदिताभिरद्भिः 'मनोज्योतिर्जुषता०' इति मन्त्रेणमार्जयते[2] । अध्वर्युराग्नीध्री बर्हिषिमार्जयेते । होता - आहवनीयस्य परिस्तरणैः अञ्जलिमन्तर्धाय, सहकारिणा अप आसेचयतो ताभिः मार्जनं करोति[3] ।

प्राशित्रभागप्राशनम् -

अध्वर्युः - 'ब्रह्मणेप्राशित्रं परिहर' इति आग्नीध्रं प्रेषयति । आग्नीध्रः - तं भागं अग्रेणाहवनीयं परिहरति । यजमानः - बर्हिष्ठान् पूर्ववतुधाकिरण भागान् 'ब्रध्नपिन्वस्व०' इत्यनुमन्त्रयते । यजमानः - इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमाग्नीध्रः इति वदति ।

---

(१) अवान्तरेडां प्राश्यमानामनुमन्त्रयते जुष्टिरसिजुषस्वनो०
जुष्टिरसिजुषस्वनो०, तै० सं० १,६,३ । बौ० श्रौ० ३।१८ ।
(२) अथान्तर्वेद्यद्भिर्मार्जयते मनोज्योतिर्जुषतामाज्यं० बौ० श्रौ० ३,१८ ।
मनोज्योतिर्जुषता० तै० सं० १,६,३, तै० ब्रा० ३,७,५-६ ।
(३) परिस्तरणैरन्जलिमन्तर्धायापआसेचयते तन्मार्जनम्, बा०श्रौ० १।८।१२ ।

अध्वर्युः - आग्नीध्रभागं द्वेधाकृत्वा, अग्नीधे षडवत्तं ददाति । वेदेन ब्रह्मणे भागद्वयं ददाति । पात्रान्तरद्वयेन होत्रेऽध्वर्यवे च भाग ददाति यजमानः । उभौ सप्तदशवारं नासिकायां वायोरन्तः प्राणं कृत्वा, "देवस्यत्वासवितुः आंगिरसो प्रतिगृह्णातु" इत्यन्तं मन्त्रपाठं कृत्वा, स्वं स्वं भागं प्रतिगृह्णाति । होतृब्रह्मणौ: - स्वकृत मन्त्रेण ग्रहणं करोति[१]।

दक्षिणादानम् -

अत्र अन्वाहार्योदक्षिणा । अध्वर्युः अन्वाहार्यं दक्षिणाग्नौ श्रपयित्वा, अभिघार्य, वेदि दक्षिणश्रोण्यां निदधाति । यजमानः - तमभिमृश्य, "प्रजापतेर्भागोऽसि०" इति मन्त्रेण अनुमन्त्रयते । अत्र अन्वाहार्यस्योद्वासनमपि भवति । तत्र बौधायनः - कर्णाद्वचः उदञ्चमुद्वासयेदिति । उदञ्चं नीयमानं अन्वाहार्यं "यत्रं दिवं रोहतु०" इति मन्त्रेण अनुमन्त्रयते ।

---

(१) अथाह ब्रह्मणे प्राशित्रं प्रतिहर - - - - वेदेन ब्रह्मभागम्, बौ०श्रौ०१।१८ । कहदं कस्मा अदात् काम:० आ०श्रौ० ५,१३,१५ वयजमानभागं निधाय पुरोडाशं बर्हिषदं करोति० चतुर्धा करोति । चत्वारो होतेहविर्यस्यर्त्विजः । ब्रह्माहोताऽध्वर्युरग्नीत्० वेदेन ब्रह्मणे ब्रह्मभागं परिहरति । तै० ब्रा० ३,३,८ । देवस्यत्वासवितु:० तै० आ० ३,१० । यदुपस्तृणीया दभि च घारयेत्० अवदायाऽभिघारयति द्विः संपद्यते० अग्रेण परिहरति तीर्थेनैव परिहरति देवस्यत्वा सवितुः - प्रसवे० अद्भिर्मार्जयित्वा प्राणान् संमृशते० तै० सं० २,६,८ ।

अध्वर्युः - आग्नीध्रभागं द्वेधाकृत्वा, अग्नीधे षडवत्तं ददाति । वेदेन ब्रह्मणे भागद्वयं ददाति । पात्रान्तरद्वयेन होत्रेऽध्वर्यवे च भाग ददाति यजमानः । उभौ सप्तदशवारं नासिकायां वायोरन्तः प्राणं कृत्वा, "देवस्यत्वासवितुः आंगिरसो प्रतिगृह्णातु" इत्यन्तं मन्त्रपाठं कृत्वा, स्वं स्वं भागं प्रतिगृह्णाति । होतृब्रह्मणौः - स्व.. मन्त्रेण ग्रहणं करोति[1]।

दक्षिणादानम् -
-------------

तत्र अन्वाहार्योदक्षिणा । अध्वर्युः अन्वाहार्यं दक्षिणाग्नौ श्रपयित्वा, अभिघार्य, वेदि दक्षिणश्रोण्यां निदधाति । यजमानः - तमभिमृश्य, "प्रजापतेर्भागोसि०" इति मन्त्रेण अनुमन्त्रयते । तत्र अन्वाहार्यस्योद्वासनमपि भवति । तत्र बौधायनः - अग्रेणस्रुचः उदञ्चमुद्वासयेदिति । उदञ्चं नीयमानं अन्वाहार्यं "यशो दिवं रोहतु०" इति मन्त्रेण अनुमन्त्रयते ।

---

(१) अथास्मै ब्रह्मणे प्राशित्रं प्रतिहर - - - - वेदेन ब्रह्मभागम्, बौ०श्रौ०१।१८ । कद्दवं कस्मा अदात् कामः० आ०श्रौ० ५,१३,१५, व्यजमानभागं निधाय पुरोडाशं बर्हिषदं करोति० चतुर्धा करोति । चत्वारो होतिहन्यिर्यजस्यत्त्विजः । ब्रह्माहोताऽध्वर्युरग्नीत्० वेदेन ब्रह्मणे ब्रह्मभागं परिहरति । तै० ब्रा० ३,३,८ । देवस्यत्वासवितुः० तै० आ० ३,१० । यदुपचस्तृणीया दधि च धारयेत्० अवदायाऽभिधारयति द्विः संपद्यते० अग्रेण परिहरति तीर्थेनैव परिहरति देवस्यत्वा सवितुः - प्रसवे० अद्भिर्मार्जयित्वा प्राणान् संमृशते० तै० सं० २,६,८ ।

यजमानः - अयं व ओदनः यथाभागं प्रतिगृह्णीध्वमिति । सर्वे ऋत्विजः "देवस्यत्वा सवितुः०"[क] इति मन्त्रेण यथाभागं प्रति गृह्णन्ति । ततः हविः शेषानुद्वतोद्वासयति[१] ।

बौधायनीकइडोपाह्वानम् -

अत्र विशेषः - होतुर्द्विरङ्गुलावनक्ति । चतुरवान्तरेडामवद्यति । उपस्तृणाति । द्विरादधाति । अभिघारयति । सर्वे समन्वारभन्ते[२] ।

---

(क) बर्हिषदं पुरोडाशमभिमन्त्रयते ब्रह्मापिन्वस्य० बौ० श्रौ० ३।१८ । तै० सं० १,६,३ । तै० ब्रा० ३,७,५-६ ।

(१) अन्वाहार्यं याचत्युद्वासयन्त्येतद्धविरुच्छिष्टम् । बौ० श्रौ० १।१८ । अन्वाहार्यं याचति तमन्तर्वेद्यासन्नमभिमन्त्रयते प्रजापतेर्भागोस्यूर्ज स्वान् पयस्वानित्यान्तादनुवाकस्य । बौ० श्रौ० ३।१८ । प्रजापतेर्भागोऽस्यूर्जस्वान्० तै० सं० १,६,३ । यदन्वाहार्यमाहरति० अथो दक्षिणैवाऽस्यैषा० देवदूता वा एते यदृत्विजः । यदन्वाहार्यमाहरति देवदूतानामेव प्रीत्यै० अपरिमितो निरुप्यः प्रजापतेर्भागोऽसीत्याह० यदेवमभिमृशति० तै० सं० १,७,३ । य एवं विद्वान् व्यावृत्य दक्षिणां प्रतिगृह्णाति० । तै० ब्रा० २,२,५ । दक्षिणां प्रतिगृहीष्यन् सप्तदशो कृत्वोऽपान्यात्० यत्किंच प्रतिगृह्णीयात् । तत् सर्वमुत्तानस्त्वाऽऽङ्गीरसः० । तै० ब्रा० २२,३,२ ।

(२) चतुरवान्तरेडामवद्यति । उपस्तृणाति - - - - - - - - - - - - - - - - - - - - समन्वारभन्ते० । अथहोतुर्द्विरङ्गुलावनक्ति । बौ० श्रौ० ३,२८ । बौ० श्रौ० १।१८ ।

ब्रह्मभागप्राशनविधि: -

---

"ब्रह्मणे प्राशित्रं प्रतिहर" अस्मै ब्रह्मणे ब्रह्मभागं अनुवेदेन अग्रेणाहवनीयं परिहरत्यध्वर्युः आह्रीयमाणं तं भागं "सूर्यस्यत्वा चक्षुषा प्रतिपश्यामीति मन्त्रेण प्रतिपश्यति । ततः उभाभ्यां हस्ताभ्यां "देवस्यत्वे" ति मन्त्रेण प्रतिगृह्णाति । "पृथिव्यास्त्वानाभौ सादयामीति" मन्त्रेण सादयति । "सुपर्णस्यत्वा गरुत्मतश्चक्षुषावेक्षे" इत्यवेक्षते । "अग्नेस्त्वास्येन प्राश्नामी" ति मन्त्रेण जिह्वाग्रे निदधाति । तं भागं प्राश्य, अप आचम्य, ब्राह्मणस्योदरेण "बृहस्पतेर्ब्रह्मणा०" इति मन्त्रेण अद्भिः सह अवगिरति । "वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं०" इति मन्त्रेण अद्भिर्मार्जयित्वा, प्राणान् सम्मृशते । इति ब्रह्मभागप्राशनविधिः[१] । होता इडां मुखसम्मितामुपह्वयते । उपांशुस्वरेण पूर्वनिगदं "उपहूतं रथन्तरं" मित्यारभ्य है साऽसि जुषस्वमोदे" इत्यन्तं उक्त्वा, ततः अवशिष्टनिगदं "इडोपहूतो-

---

(१) अथाऽऽह ब्रह्मणे प्राशित्रं परिहरेति । परिप्राशित्रं हरन्ति । अन्चपोऽनुवेदेन ब्रह्मभागम्, बौ० श्रौ० १।१८ । परिहरन्त्यस्मा एतत् प्राशित्रमग्रेणाहवनीयं तदाह्रियमाणं पश्यतिसूर्यस्यत्वा० अथैनदुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति देवस्यत्वा० अथैनत्सादयति पृथिव्यास्त्वा० अथैनदवेक्षते सुपर्णस्यत्वा० अथैनदंगुष्ठेन - - - -
- - - - - - - - - - - - - - - - - - - - - - - - - -
जिह्वाग्रेनिदधात्यग्नेस्त्वा० - - - - - - - - - - - - - -
प्राणान् संमृशते वाङ्म आसन्नसोः० बौ० श्रौ० ३।२४-२५ ।

-------अग्रिमपृष्ठेऽपि

पहूतेहोपास्याँ इडाहूवयतामित्यतः "तस्मिन्नुपहूतः" इत्यन्तं निगदमुभयोर्
तूष्णीं प्रायः समानमेव ।

इडाप्राशनमंत्रः -

"इडासि स्योनासि स्योनकृत०" इति मन्त्रेण पुरोडाशशकल-
मवच्छिद्यैव प्राश्नीयादिति । ततः होता - अप आचम्य, प्राचीं तूष्णीं
उदक् राजीं निनयति तथा च "मनोर्ज्योतिर्जुषता०" इति मन्त्रं जपति ।
इति बौधायनः[१] ।

अग्निसम्मार्जनप्रैषः -

अध्वर्युः - ब्रह्मन् प्रस्थास्यामः, - समिधमाधाय, अग्नीदग्नीन्
सकृत्-सकृत् सम्मृड्ढि" ब्रह्मजपान्ते "ओं प्रतिष्ठ" इति श्रुत्वा, आग्नीध्रः
परिधिष्वेतां समिधमाहवनीयेऽभ्या दधाति । अथ च स्फ्यरहितैः इध्म-
सन्नहनैः सकृत् परिधीन् "अग्नेवाजजिद् वाजन्त्वाग्ने ससृवांसं०" इति मन्त्रेण

---

पूर्वपृष्ठस्याग्रे---------

अग्रेण परिहरति तीर्थेनैव परिहरति० - - - - - - - - - -
सूर्यस्यत्वा - - - प्राणानुत्संमृशते । तै० सं० २,६,८ ।

(२) बौ० श्रौ० ३।२८-२९ । तै० ब्रा० ३,५,८ ।

(१) बौ० श्रौ० ३।२९ अथयदि दित्सेद्वा निधित्सेतवा - - - - - -
मादयन्तामिति ।

सम्मृजीत[1] । ततः इध्मसन्नहनानि विस्रस्य, अद्भिः प्रोक्ष्य, "यो भूतानामधि-पतिरुद्र०" इति मन्त्रेण आहवनीये अनुप्रहरति । यजमानः - "भूतानामधि-पतये रुद्रायतन्तिचरायेदं नममेति त्यागं वदेत्[2] । अनूयाजयागः - अध्वर्युः जुहूपभृतावादाय, अत्याक्रम्य, आश्राव्याह - "देवान्यज" इति । एवमेव क्रमेण त्रिवारं करोति[3] । होता -

(१) देवं बर्हिर्वसुवने वसुधेय यस्य वेतु ३ वौषट् ।

(२) देवोनराशंसो वसुवने वसुधेयस्य वेतु ३ वौषट् ।

(३) देवो अग्निः स्विष्टकृत् वीहो ३ वौषट्[4] ।

---

(१) अथ सम्प्रैषमाह ब्रह्मन् प्रस्थास्यामः० तद् ब्रह्मप्रसौति देवसवितेर अथैष आग्नीध्रोऽस्फ्यैरैध्मसंनहनैः परिधीन् सम्मार्ष्टि - - - अग्नेवाजजिद्वाजं त्वाग्ने० । बौ० श्रौ० १।१६ । अग्नेवाज-जिद्वाजं त्वाग्ने०, तै० ब्रा० ३,७,६ ।

(२) अथैतानीध्मसंनहनान्यद्भिः संस्पर्श्याहवनीयेऽनु प्रहरतियोभूताना-मधिपतौ० बौ० श्रौ० १।१६ । यो भूतानामधिपतौ० तै० ब्रा० ३,७,२ ।

(३) अथ जुहूपभृतावादायात्याक्रम्याश्राव्याह देवान्यजेति - - - - - त्रीन् प्रतीचोऽनूयाजान् यजति । बौ० श्रौ० १।१६ । आश्राव्याऽऽह देवान् यजेति० यदनूयाजान् यजति० । तै० सं० २,६,६ । देवादयोऽनुयाजाः । वीतवत्पदान्ताः । त्रयः । एकैकं प्रेषितो यजति । आ० श्रौ० १।८।३-६ ।

(४) देवं बर्हिर्वसुवने वसुधेयस्य वेतु० - - - नमोवाकेवीहोत्यनवानं वा आ०श्रौ० १।८।७ । देवं बर्हिर्वसुवनेवसुधे यस्य वेतु० - - - - - नमोवाके वोही । तै० ब्रा० ३,५,६-११ ।

इति क्रमेण अथोनुयागमंत्राः पठन्ति । वषट् कृते अध्वर्युर्जुहोति[1] ।

याागानुमन्त्रणम् -

यजमानः -

(१) देवाय बर्हिष इदं नमम । "बर्हिषोऽहं इति पाठं करोति ।

(२) देवाय नराशंसायेदं नमम । नराशं स्याहं इति ।

(३) देवायाग्नये स्विष्टकृत इदं नमम । अग्नेः स्विष्टकृतोऽहं इति यागानुक्रमेण त्यागं पठेत् । तथा मन्त्रपाठमपि करोति[1] ।

स्रुग्व्यूहनम् -

अध्वर्युः उदङ्०ङ्०त्य, आक्रम्य, यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति । ततः दक्षिणहस्तेन "वाजस्यमाप्रसवेन०"

---

(१) अनुयाजानामिष्टमिष्टमनुमन्त्रयते बर्हिषोऽहं० - - - - - - गमेयमिति, बौ० श्रौ० ३,१६ । बर्हिषोऽहं० । नराशंस्याऽहं० । अग्नेः स्विष्टकृतोऽहं० । तै० सं० १,६,४ । अथोदङ्०ङ्०त्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति वाजस्यमा० दक्षिणेन स्रुचौ मुदगृह्णात्यथासपत्ना० सव्येनोपभृतं निगृह्णात्युद्-ग्रामं० च० अथासपत्नानिन्द्राग्नी - - - - - - - - - - - - - प्रतीचीमुपभृतं प्रत्यूहति । बौ० श्रौ० ३।१६ । वाजस्यमा० । अथासपत्ना० । उद्ग्रामं च० । अथसपत्नानिन्द्राग्नी० । तै० सं० १,१,१३, १,६,४ ।

इति मन्त्रेण जुहूमुद्गृह्णीतः, सव्येन "अथासपत्नां इन्द्रामि०" इत्युपभृतं निगृह्णीतः, "उद्ग्रामं च निग्रामं च० इति मन्त्रेण" दक्षिणहस्तेन जुहूं प्राचीं प्रेरयति। "अथासपत्नामिन्द्राग्नी०" इति मन्त्रेण सव्य हस्तेन प्रतीचीमुपभृतं प्रत्यूहति ।

परिधिरभ्यञ्जनम् -

(१) वसुभ्यस्त्वा । (२) रुद्रेभ्यस्त्वा । (३) आदित्येभ्यस्त्वा" इति क्रमेण जुह्वापरिधीननक्ति । प्रथमं मध्यमपरिधीन्, ततोदक्षिणं ततोत्तरम्। उपभृतमद्भिः सम्मृश्य, यथायतनं स्रुचौ सादयति[१] ।

स्रुक्वाकः -

अध्वर्युः सविधृति पवित्रं प्रस्तरं चादाय, प्रस्तरभग्राणि "अक्तंरिहाणाः" इति मन्त्रेण अनक्ति । "व्यन्तुव्ययः" इति मन्त्रेण मध्यभागमनक्ति । "प्रजां योनिं०" इति मूलानि अनक्ति । ततः प्रस्तरात् एकं तृणमादाय, प्रज्ञातं निधाय, दक्षिणोत्तराभ्यां हस्ताभ्यां प्रस्तरं जुह्वामवदधाति । ततः

---

(१) प्राच्यापरिधीननक्ति वसुभ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरमथोपभृतमद्भिः संस्पर्श्यं यथायतनं स्रुचौ सादयित्वा, बौ० श्रौ० १।१६ ।
वसुभ्यस्त्वा । रुद्रेभ्यस्त्वा । आदित्येभ्यस्त्वा ।
- तै० सं० १,१,१३ ।

अध्वर्युराश्रावयति - "इषिता दैव्याहोतारो" इत्यारभ्य "सूक्ताब्रूहि" इत्यन्तः सूक्तवाक प्रैषः[1]। होता - "इदं द्यावापृथिवी" इत्यारभ्य "स्वधिचरण च इत्यन्तं[2] निगदपाठं कृत्वा, (अग्निरिदमित्यादि उज्जिति मन्त्रान् पठति । यथादैवत-मन्त्रपाठः । यथा - अग्निरिदं हविरजुषतावीवृधतमहो ज्यायोकृत । सोम इदं हविर्जुषतावीवृधत महोज्यायो कृत । अग्निरिदं हविरजुषतावीवृधतमहोज्यायो कृत । अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायो क्राताम् ।विष्णुरिदं हविरजुषता वीवृधतमहोज्यायो कृत । इन्द्रस्य वैमृधइदं हविरजुषतावीवृधत महोज्यायो कृत । दर्शे - विष्णोरनन्तरं इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोक्राताम्, इति विशेषः ।

---

(१) ध्रुवाप्रस्तरमनक्ति अक्तं रिहाणा इति जुह्वामग्राणि वियन्तुवय-इत्युपभृति मध्यानि प्रजां योनिं मानिर्मृक्षमिति ध्रुवायां मूलान्यथ प्रस्ताराद्तृणं प्रच्छिद्य - - - - - - - - - - - - - - - - - -
सूक्ताब्रूहीति, बौ० श्रौ० १।१६, अक्तं रिहाणाः । वियन्तुवयः । प्रजां योनिं मा निर्मृक्षम्, तै० सं० १,१,१३ । अनक्ति० त्रे धाऽनक्ति० न प्रतिशृणाति० हस्तेन योयुप्यते०, तै० सं० २,६,५ इषिता दैव्या होतार इत्याह० भद्रवाच्याय प्रेषितोमानुषः सूक्तवाकायसूक्ता ब्रूहीत्याह० । तै० ब्रा० ३,३,८-९ ।

(२) सूक्तवाकाय संप्रेषित इदं द्यावापृथिवी - - - - - - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -
- - - - - - - - - स्वधिचरणाचतयोराविदोत्यवसाय ।
आ० श्रौ० १,९,१, तै० ब्रा० ३,५,९-११ ।

देवाआज्यपा आज्यमजुषन्तावीवृधन्त महोज्यायो कृत । अग्निर्होत्रेणेदं हविर-जुषतावीवृधतमहोज्यायो कृत । अस्यामृधद्धोत्रायां देवं गमायामाशास्ते यं यजमान: - असौ इत्यस्य स्थाने यजमानस्य नक्षत्रनाम ब्रूयात्[1] । अत्र निगदे यजमान इति शब्दं श्रुत्वा, "एमाअग्मन्नाशिष" इति यज्ञस्य दोहं यजमानं[2] वाचयति[2] । ततोऽध्वर्युः "नमोदेवेभ्यः" इति श्रुत्वा, तिर्यञ्चं हस्ते धारयन् कर्षन्निव प्रस्तरं - "आप्यायतामापओषध०" इति मन्त्रेण आहवनीयेऽनु-प्रहरेत्[3] । यजमानः - रोहितेनत्वाग्निर्देवतां गमयतु०[4] इति मन्त्रेण अनु-

---

(१) अथ यत्र होतुरभिजानात्यग्निरिदं हविरजुषततेतितयजमानमुज्जितिं वाचयत्यग्नेरहं० बौ० श्रौ० ३,१६ । प्रथमया विभक्त्यादिम्य देवता-भिदं हविरजुषता वीवृधतमहोज्यायोऽकृतेत्युपसंतनुयादेवमुत्तरा: । अक्रातामक्रतेति यथार्थमुक्तपांशोश्रवापिकान्तमनुद्रुत्य देवाआज्यपा - - - नमो देवेभ्य इति । आ०श्रौ० १।६।१-५ ।, तै०ब्रा० ३,५,६-११ । दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमन्वु-जजयति०, तै० सं० १,७,४ ।

(२) तद्यजमानं यज्ञस्य दोहं वाचयत्येमा अग्मन्नाशिष० । बौ०श्रौ० ३,१६ एमा अग्मन्नाशिष० तै० सं० १,६,४, यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हिब्रूयादेमा अग्मन्नाशिषोदोहकामा इति तै०सं० १,७,४ ।

(३) तमुपरीवप्राञ्चं प्रहरति - - -- ऊर्ध्वमुपौत्याप्यायन्तामापओषध्यो० । बौ० श्रौ० १,१६ । आप्यायन्तामापओषध्यो० । तै०सं० १,१,१३ । प्रस्तरमाहवनीये प्रहरति०, तै० सं० २,६,५ ।

(४) प्रस्तरं प्रह्रियमाणमनुमन्त्रयते रोहितेनत्वा० इति । रोहितेनत्वा० तै० सं० १,६,४, बौ० श्रौ० ३,१६ । रोहितेनत्वाऽग्निर्देवतां गमयीत्वित्याह० यदेतैः प्रस्तरं प्रहरति, तै० सं० १,७,४ ।

मन्त्रयते । होता "आयुराशास्ते" इत्यारभ्य नमोदेवेभ्य इत्यन्तं सूक्तवाकं पठेत् ।

शंयुवाकः -

अध्वर्युः - आहवनीयस्य ज्वालाया उपरि प्रस्तर तृणं प्रागायतं दीपयेत् । दीपनसमये अध्वर्युः "अग्नी ३ दिति" - आग्नीध्रमोदाते । आग्नीध्रः - "संवदस्व" इति वदति । पुनरध्वर्युः - कानग्नी ३ त् । आग्नीध्रः - का ३ न् । अध्वर्युः - श्रा ३ वय । आग्नीध्रः - श्रौ ३ षट् । ततः प्रस्तरात् अपनीतं ज्वलन्तं तृणं दर्शयन् - इदं ब्रू ३ हि । आग्नीध्रः - "अनुप्रहरेदिति । ततः अध्वर्युः तं तृणमनुप्रहृत्य, होत्रे शंयुवाकप्रैषं ददाति[1] । प्रैषः - स्वगादैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रू ३ हि[2] । होता - "तच्छंयोरावृणीमहे" इत्यतः शंनो अस्तु द्विपदेशंचतुष्पदे" इत्यन्तं शंयुवाक निगदं पठति[3] । ततः अध्वर्युः - उत्थाय - "आयुष्मा अग्नेसि" इति मन्त्रेण

---

(१) अथाग्नीध्रमोदातेऽग्नीदिति - - - - - - - - - - - - - - - अनुप्रहरेत्याग्नीध्रोऽनु प्रहरति । बौ० श्रौ० १।१६ । का ३ नग्नी-दित्याह । यद् ब्रूयादगन्नग्निरित्यग्नावग्निं गमयेन्निर्यजमानं सुवर्गा-ल्लोकात् भजेत । अगन्नित्येव ब्रूयात् । तै० सं० २,६,५ ।

(२) बौ० श्रौ० १।१६ ।

(३) शंयुवाकाय संप्रेषितस्तच्छं योरावृणीमह इत्याहानुवाक्यावद-प्रणवाम्, बा० श्रौ० १।२०।१ ।
तच्छंयोरावृणीमहे० तै० ब्रा० ३,५,११,
तै० सं० २,६,६ ।

आहवनीयमुपतिष्ठते । "ध्रुवासी" ति मन्त्रेण भूमिमभिमृशति । "यं परिधिं पर्यधत्था०" इति मन्त्रेण मध्यमं परिधिमनुप्रहरति । "यज्ञस्य पाथ उपसमितं०" इति मन्त्रेण दक्षिणोत्तरौ परिध्यौ सह प्रहरति [1] । यजमानः - "वितेमुंचामि-रशना०" इति विमुच्यमानान् परिधीन् अनुमन्त्रयते । पूर्वोक्तं होतृपठितं शंयुवाकं "विष्णोः शंयोरह०" मिति अनुमन्त्रयते । इति शंयुवाकः ।

संस्रावहोमः -
-----------

अध्वर्युः जुह्वां स्रावित औपभृताज्येन सह औहवेन "संस्राव-भागास्तेषा०" इति मन्त्रेण अभिजुहोति [2] । यजमानः - वसुभ्यो रुद्रेभ्य आदित्येभ्यः संस्रावभागेभ्य इदं नममेति त्यागं पठेत् । इति संस्रावहोमः ।

---

(१) अथोपोत्थायाहवनीयमुपतिष्ठतआयुष्मा० अथेमामभिमृशति ध्रुवासीति मध्यमं परिधिमनुप्रहरति यं परिधिं० अथेतरावुपसम-स्यति यज्ञस्यपाथ० । बौ० श्रौ० १।१९ । परिधीन् प्रहरति० तै० ब्रा० ३,३,८-९ । आयुष्मा अग्ने० । ध्रुवाऽसि । यं परिधिं० । यज्ञस्य पाथ० । तै० सं० १,१,१३ । परिधीन् विमुच्यमानाननुमन्त्रयते वितेमुन्चामि० शंयुवाक मुक्तमनुमन्त्रयते विष्णोः शंयोरहं० । बौ० श्रौ० ३।१९ । वितेमुन्चामि० । विष्णोः शंयोरहं । तै० सं० १।६।४ ।

(२) अथैनान् संस्रावेणाभिजुहोति जुह्वामुपभृतं संप्रस्रावयति संस्राव-भागाः स्थेषा०, बौ० श्रौ० १।१९ । ध्रुवौ संप्रस्रावयति० तै० ब्रा० ३,३,८-९ । संस्रावभागाः स्थेषा० तै० सं० १।१।१३ ।

स्रुक्विमोक: -

अध्वर्यु: प्रदक्षिणमावृत्त्य, प्रत्यङ्ङाद्धृत्यधुरि "अग्नेर्वामपन्न गृहस्य०" इति मन्त्रेण उदगग्रं स्फ्यं निधाय, तस्मिन् स्रुचौ विमुञ्चतीति।[1]

पाण्योश्च निन्हव: -

अध्वर्यु: बर्हिषि अंजलिं कृत्वा, "यज्ञश्च म उपचमे" इति मन्त्रेण निन्हवं करोति । तत: दक्षिणार्धे वेदं निधाय "येन त्वं देव वेद देवेभ्य:" इति मन्त्रं यजमानं वाचयत्यध्वर्यु:[2] ।

पत्नीसंयाजा: -

पत्नीसंयाजदेवतोद्देशमुपांशु स्वरेण कुर्यात् । होत्रे वेदं प्रदाय, दक्षिणेन आज्यस्थालीं स्रुवां सव्येनजुहूमादाय, दक्षिणेन पदा गार्हपत्य दक्षिणाग्न्योर्मध्येन पत्नीगार्हपत्य मध्येन च गत्वा, पश्चात् गार्हपत्यस्य होतुर्दक्षिणत ऊर्ध्वज्ञुरुपविश्य, होतुर्वेदमादायोपभृत्स्थाने धृत्वा, स्रु-राज्यस्य गृहणान् क्रमेण आह - सोमायानुब्रू ३ हि । त्वष्ट्रे अनुब्रू ३ हि ।

---

(१) बौ० श्रौ० १।१६ । अग्नेर्वामपन्न०, तै० सं० १।१।१३ ।
(२) बौ० श्रौ० ३।२६-३० ।

अत्र गार्हपत्या यतनस्य पूर्वभागे अन्तर्धानकटं निधाय "देवानां पत्नीभ्योनु ब्रू ३ हि इति । एतत् यागानन्तरं अन्तर्धानकटं निरस्य अग्नये गृहपतयेनु ब्रू ३ हि इति[1] । होता क्रमेण याज्यानुवाक्ये ब्रूयात्[2] । याज्यानुवाक्ये -

सोमः[3] - "आप्यायस्वसमेतुते०" इति पुरोनुवाक्या ।

"संते पयांसि० इति याज्या ।

त्वष्टृ[4] - "इहत्वष्टारमग्रिय०" इति पुरोनुवाक्या ।

"तन्नस्तुरीप०" इति याज्या ।

देवानां पत्नीः[5] - "देवानां पत्नी०" इति पुरोनुवाक्या ।

"उतग्नाव्यन्तु०" इति याज्या ।

---

(१) अथादेव दक्षिणेनाज्यस्थालीं - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - - सोमायेत्युपांश्वनुब्रूहीत्युच्चैः देवानां पत्नीभ्य इत्युपांश्वनुब्रूहि० अग्नये गृहपतय इत्युपांश्वनुब्रूहि० । बौ० श्रौ० १।२० ।

(२) आप्यायस्व समेतुते - - - - - - - - - - - - - - - - - -
इति पत्नी संयाजाः । आ० श्रौ० १।१०।५ । आप्यायस्व समेतुते० । संते पयांसि० । इहत्वष्टा० । तन्नस्तुरीप० । देवानां पत्नी० । एतग्नाव्यन्तु० । अग्निहोता० । वयमुत्वा० । तै० ब्रा० ३।५।१२-१३ ।

(३) आप्यासस्वसमेतुते० ऋ०सं० १।९१।१६,संते पयांसि० ऋ०सं० १।९१।१८ ।

(४) इहत्वष्टा० ऋ० सं० १।१३।१०, तन्नस्तुरीप०, ऋ० सं० ३।४।६ ।

(५) देवानां पत्नी० । उतग्नाव्यन्तु० । ऋ० सं० ५।४६।७-८ ।

अग्निर्गृहपतिः[1] - "अग्निर्होतागृहपति०" रिति पुरोनुवाक्या ।

"हव्यवाडग्निरजर०" इति याज्या ।

अत्र यजमानः प्रजाकामश्चेत् तदा राकां, सिनीवालीं, कुहूमिति तिस्रो देवता गृहपतेः प्राक् यजेदित्याश्वलायनः[2] । तासां याज्यानुवाक्याः -

राका - "राकामहं०" इति पुरोनुवाक्या ।

"यास्ते राके०" इति याज्या[3] ।

सिनीवाली - "सिनीवालिपृथुष्टुके०" इति पुरोनुवाक्या ।

"यासुबाहु०" रिति याज्या[4] ।

कुहूः - "कुहूमहं सुवृतं विद्मना०" इति पुरोनुवाक्या ।

"कुहूर्देवाना०" मिति याज्या[5] ।

एतत् यागान्ते अध्वर्युः स्रुवाहुतिं जुहोति । राकायै स्वाहा ।

---

(१) अग्निर्होतागृहपति०, ऋ० सं० ६।१५।१३, हव्यावाडग्नि० ऋ०सं०५।४।२ ।

(२) अथ प्रजाकामोराकां सिनीवालीं कुहूमिति प्राग्गृहपतेर्यजेत । राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये, आ० श्रौ० १।१०।६-७ । अथ हैके राकां सिनीवालीं च कुहूं चानुमतिं च, बौ०श्रौ० २४,२६, अनुमत्या याज्या पुरोनुवाक्ये अपि तै० सं० ३।३।११ , लभ्यते ।

(३-४) राकामहं० । यास्तेराके० । सिनीवालि० ।यासुबाहु० । ऋ० सं० २।३२।४-७ ।

(५) कुहूमहं० । कुहूर्देवाना० । आ० श्रौ० १।१०।८, एताः सर्वा ऋचः तै० सं० ३।३।११ अत्राप्युपलभ्यन्ते ।

सिनीवाल्यै स्वाहा । कुह्वै स्वाहा । अनुमत्यै स्वाहेति ।

पत्नीहोम: -

---

अध्वर्युः "संपत्नी पत्यासुकृतेन०" इति मन्त्रेण स्रुवाहुतिं जुहोति । नारिष्ठौ होमौ - "दशते तनु वो०" । यं वां देवा अकल्पयन्०" । इति मन्त्रेण क्रमेण द्वे स्रुवाहुतिं दद्यात् । यजमानः - यथा दैवतं त्यागं पठेत् । पक्षान्तर परिग्रहे नारिष्ठहोमयोः अन्ते अग्निं गृहपतिं यजेत्[१] ।

आज्येडोपाह्वानम् -

---

अत्र आज्यद्रव्यत्वात् आज्येडा भवति । अध्वर्युः - होतारमग्रेण उत्तरतो गत्वा होतुरंगुलिपर्वणी अनक्ति । होतुर्हस्ते चतुराज्यमवदाय सर्वेन्वारभन्ते । होता - उपांशु स्वरेण पूर्ववत् इडानिगदं पठेत् । उपहूतायामिडायां[२] अग्नीधे षडवत्ताज्यं ददाति । तां प्राश्नीतः । आग्नीध्रः मार्जयेते ।

इति पत्नीसंयाजाः ।

---

(१) पत्नीहोमं च नारिष्ठौ च होमौ पुरस्ताद् गृहपतेरुप जुह्वति संपत्नी० । दशते तनुवो० । यं वां देवा० बौ० श्रौ० २४,२६ । तै० ब्रा० ३।७।५-६ ।

(२) अथाग्रेण होतारमुपातीत्य - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - मार्जयेते, बौ० श्रौ० १।२० ।

दक्षिणाग्नौ प्रायश्चित्तहोमः -
-----------------------------

अध्वर्युः चतुर्गृहीतमाज्यं स्रुचि गृहीत्वा, अपसव्यं करोति । ततः दक्षिणतः अपरेण गार्हपत्यं, आज्यस्थालीं, स्रुचं स्रुवं च पत्नीगार्हपत्यौ: मध्येन नीत्वा, स्वयं पत्नी, पश्चात् मार्गेन गत्वा, "उलूखलेमुसले यच्चशूर्पं०" इति मन्त्रेण दक्षिणाग्नौ प्रायश्चित्तं जुहोति[1] । यजमानः - विश्वेभ्यो देवेभ्यो इदं नममेति त्यागं पठेत् ।

फलीकरणहोमः -
----------------

पुनः अपरं चतुर्गृहीतं स्रुचि गृहीत्वा - इध्मप्रव्रश्चनान्यभ्याधाय, जुह्वां फलीकरणान् ओप्य "अग्नेदब्धायोशीततनोपाहि०" इति मन्त्रेण दक्षिणाग्नौ जुहोति[2] । यजमानः यथोक्तं त्यागं वदेत् ।

----------------------------------------------

(१) अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखलेमुसले० । बौ० श्रौ० १,२० । उलूखले मुसले० तै० ब्रा० ३,७,५-६ ।

(२) अपरं चतुर्गृहीतं गृहीत्वान्वाहार्यपचन ---------- ---------------------- अग्नेऽदब्धायो० । बौ० श्रौ० १।२० । अग्नेऽदब्धायो० । तै० सं० १,१,१३ । अविषं नः पितुं कृणु ---- ------------------ फलीकरणहोमं जुहोति, तै० ब्रा० ३,३,६ ।

पत्न्यैवेदप्रदानम् -

---

वेदप्रदानविषये होताध्वर्युर्वा इति विकल्प: आश्वलायनेनोक्त:[1]। अध्वर्यु: अपरेण पत्नीं उत्तरतो गत्वा, वेदं यजमानाय प्रदाय "वेदोसिविचिरसि" इत्यत: कामायत्वेत्यन्तं मन्त्रं वाचयति। पत्नीस्थाने प्रथमत: यजमानाय वेदप्रदानमिति बौधायनेविशेष:[2]। ततोध्वर्यु: यजमानात् वेदमादाय, होत्रे प्रयच्छति। तं वेदं होता पत्न्यै प्रयच्छति। तत: पत्नी प्रजाकामाश्चेत् तं वेदं शिरसा नाभिदेशमालभेत्। अत्र प्रजाकामाभावेपि मन्त्रवाचनं भवत्येव[3]।

योक्त्रविमोक: -

---

होता अस्या: पत्न्या: पूर्वबन्धि योक्त्रविमोचनं "प्रत्वामुञ्चामि-वरुणस्ये"ति मन्त्रेण योक्त्रं विस्रस्य मोचयति। एतत् योक्त्रविमोचनं होत्र-

---

(१) वेदं पत्न्यै प्रदाय वाचयेद्धोताध्वर्युर्वा वेदोऽसि ------ ------ कामायत्वेति, आ० श्रौ० १,११,१ ।

(२) अथैतेनैव यथेतमेत्य वेदंयजमानं वाचयति वेदोऽसि०, तै० सं० १,६,४ बौ० श्रौ० १,२० । पत्नीर्संयाजानिष्ट्वा फलीकरण होमेवेदे पत्नीं वाचयति वेदोऽसि, बौ० श्रौ० ३,३० ।

(३) होत्रेवेदं प्रदाय पत्नीं विष्यतीमं विष्यामि० । बौ० श्रौ० १,२० । इमं विष्यामि० । तै० सं० १, १,१० । वेद शिरसानाभिदेशमालभेत प्रजाकामा चेत् । आ० श्रौ० १,११, २, विस्रस्य वेदमयानि पत्न्यै प्रयच्छति तानि पत्नी अन्तरोरू वा न्यस्यति दक्षिणेन वोरुणोप निगृह्णाति । बौ० श्रौ० ३,३० ।

कर्तृकमित्याश्वलायनः[1]। अध्वर्युकर्तृकमिति बौधायनः। तत् यौक्त्रं द्विगुणं कृत्वा गार्हपत्यात् प्रत्यक् प्राङ्मूलाग्रप्रदेशं निदध्यात्। योक्त्रस्य उपरिष्टात् वेदतृणान्युदगग्राणि निदध्यात्। वेदतृणेभ्यः पुरस्तात् तूर्णं संश्लिष्टं पूर्णपात्रं निदध्यात्। पत्नीतं पात्रमभि मृशति होता च। 'पूर्णमसिपूर्णं मे भूयाः' इति पूर्णपात्रमभिमर्शनमन्त्रः। पूर्णपात्रमभिमर्शनमन्त्रवाचनानन्तरं पूर्णपात्रात् उदकं गृहीत्वा, प्रतिदिशं 'प्राच्यां दिशि देवा' इति मन्त्र चतुष्टयेन क्षिपन्ति[2]।

पूर्णपात्रनिनयनम् -

होता - योक्त्रस्य अधस्तात् पत्न्यन्जलिमुत्तानं आत्मनश्च सव्यं पाणिमुत्तानं निधाय, पूर्णपात्रं निनयन् 'माहं प्रजां परासिचं' इति मन्त्रं तां पत्नीं वाचयेत्[3]। तं निनीयमानमानमुदकं हस्तेष्वेव पतयेत् तथा निनयेत्।

---

(१) अथास्या यौक्त्रं विचृतेत्प्रत्वामुन्चामुन्चामिवरुणस्य पाशादिति। आ०श्रौ० १,११,३। प्रत्वामुन्चामिवरुणस्य पाशाद्० ऋ०सं०१०,८५,२४।

(२) तत्प्रत्यग्गार्हपत्याद्विगुणं०। पुरस्तात् पूर्णपात्रं संश्लिष्टं वेदतृणैः। अभिमृश्यवाचयेत्पूर्णमसिपूर्णं मे०। अथैनां पूर्णपात्रात् प्रतिदिशमुदकमुदुक्षान्नुक्षान्तीं वाचयति प्राच्यां दिशिदेवा०। आ० श्रौ० १,११,४-७ सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे० प्राच्यां दिशि देवा०। तै० सं० १,६,४।

(३) अथास्या उत्तानमन्जलिमधस्ताद्योक्त्रस्य० माहं प्रजां परासिचं - - - - - - - - - - अपोदेति। आ० श्रौ० १,११,८।

प्राङ्मुखत्वमङ्गाद्रियते अन्जलिनिधानस्य अदृष्टार्थत्व प्रसंगात् । अत्र बौधायनः - पूर्णपात्रनिनयनमध्वर्युकर्तृकमिति । अत्र पत्न्यन्जलौ योक्त्रं निधाय "समायुषा सं प्रजया०" इति मन्त्रेण जलमानयति[1] । जलनिनयनानन्तरं तेन जलेन "यदप्सुते सरस्वति०" इति मन्त्रं पठित्वा पत्नीमुखं विमृष्टेत्[2] । एतदपां निनयनमवभृथस्यैवरूपमिति[3] । ततः पत्नीं तत्रैव तिरः पवित्रं "पयस्वतीरोषधयः०" इति मन्त्रेण अप आचामति[4] । पत्नी - "अग्ने व्रतपते० । वायो व्रतपते० । आदित्य व्रतपते० । व्रतानां व्रतपते० । इति चतुर्मन्त्रैः गार्हपत्ये समिध आधापयति । समिधाधानानन्तरं पत्नी वेद्युत्करयोर्मध्येन निष्क्रामति[5] । पूर्णपात्रनिनयनानन्तरं होतादक्षिणेन हस्तेन

---

(१) अथास्यै योक्त्रमन्जलावाधायोदपात्र मानयति समायुषा संप्रजया० । बौ० श्रौ० १,२० । समायुषायं प्रजया० । तै० सं० १,१,१० ।

(२) अथमुखं विमृष्टेयदप्सुते सरस्वति० । बौ० श्रौ० १,२०
यदप्सुते सरस्वति० तै० ब्रा० २,५,८,६ ।

(३) अपो निनयत्यवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति ब्राह्मणम् ।
बौ० श्रौ० १,२० । अन्जलौ पूर्णपात्रमानयति० । मुखं विमृष्टे ।
अवभृथस्यैव रूपं कृत्वोत्तिष्ठति० । तै० ब्रा० ३,३,९-११ ।

(४) अथैनां तथैव तिरः पवित्रमपआचामति पयस्वतीरोषधयः० ।
बौ० श्रौ० १,२१ पयस्वतीरोषधयः० । तै० सं० १,५,१० ।

(५) गार्हपत्ये समिधआधापयत्यग्ने व्रतपते० । अथ यथा प्रपन्नं निष्क्रामति, बौ० श्रौ० १,२१ । अग्ने व्रतपते० । वायो व्रतपते० ।
आदित्य० । व्रतानां व्रतपते० । तै० ब्रा० ३,७,५ ।

वेदतृणानि अग्रप्रदेशे गृहीत्वा, विधून्वन् गार्हपत्यादारभ्य सव्येन हस्तेन संततंस्तृणन् "तं तुं तन्वन्०" इत्यास्तरणमन्त्रं पठित्वा, आहवनीयं गच्छति । शेषं वेदतृणं आहवनीयस्य पश्चात् स्थापयति[1] ।

होतृकर्तृकप्रायश्चित्तहोमः -

होमीयं अप्रोषित इति[2] । होता - आज्यस्थाल्याः स्रुवेण आज्यमादाय क्रमेण प्रायश्चित्तं जुहोति[3] ।

प्रायश्चित्तहोममन्त्राः[4] -

(१) अयाश्चाग्ने० । (२) अतोदेवा० ।

---

(१) अथतराणि प्राडणवृत्तः स्तृणान्नीति तन्तुं तन्वन० अथयान्यति शिष्यन्ते तानि बर्हिषि संनस्यति आपृणोषि०, बौ० श्रौ० ३,३० । तन्तुं तन्वन् ० ब्रे० सं० ३,४,२ । वेदतृणान्यग्रे गृहीत्वा विधून्वन् संततं स्तृणन्त्सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन्रजसो भानुमन्विहीति । शेषं निधाय तन्तुं तन्वन् रजसो० ऋ० सं० १०,५३,६ । आ० श्रौ० १,११,६-१० ।

(२) यत्किंचाप्रोषितो यजे दन्यत्रापि । आ० श्रौ० १,११,११ ।

(३) प्रत्यगुदगाहवनीयादवस्थाय - - - - - - पठिताः । आ० श्रौ० १,११,१० ।

(४) आ० श्रौ० १,११,१३ । अतो देवा० । इदं विष्णुः । ऋ० सं० १,२२,१६-१७ ।

(३) इदं विष्णु:० । (४) भूस्वाहा । (५) भुवस्वाहा । (६) स्वस्वाहा । (७) भूर्भुवस्व: + स्वाहा० । इति सप्तहोममन्त्रा: । होता प्रायश्चित्तं हुत्वा, "ऑं यमे स्वरश्वम०" इति[1] सूक्तोक्तमन्त्रेण अग्निमुपस्थाय, तीर्थेन निष्क्रामति । अत्र ऐष्टिक होतृकर्मसमाप्तिर्भवति ।

ऐष्टिकप्रायश्चित्तहोम: -

अध्वर्यु गार्हपत्य दक्षिणाग्न्योर्मध्येन प्राङ्०त्यआज्यस्थाल्याज्येन ध्रुवामाप्याययति[2] । अत्र यजमान: "आप्यतां ध्रुवा" मिति मन्त्रेण अनुमन्त्रणं[3] करोति । ततो यजमान: ध्रुवा पुरस्तात् स्थितं "प्रजापतेर्विभांनाम०" इति मन्त्रेण स्वं भागं प्राश्नाति[4] । यजमान: भागप्राशनानन्तरं स्वासने उपविशति । ततोऽध्वर्यु: आज्यस्थाल्या: स्रुवेणोपहत्य सर्वप्रायश्चित्तानिजुहोति[5] ।

---

(१) हुत्वासंस्थाजपेनोपस्थाय तीर्थेन निष्क्रम्यानियम: । ऑं यमेस्वरश्वम० । इति होतु: । आ० श्रौ० १,११,२४-२६ ।
(२) अथ प्राङ्०त्य ध्रुवामाप्याययत्याप्यायतां ध्रुवा०, बौ० श्रौ० १,२१ ।
(३) ध्रुवामाप्याय्यमाना मनुमन्त्रयत आप्यायतां ध्रुवा०,बौ० श्रौ० ३,२० । आप्यायतां ध्रुवा० तै० सं० १,६,४ ।
(४) अथ यजमानभागं प्राश्नाति प्रजापतेर्विभान्नाम० । बौ० श्रौ० ३,२० । प्रजापतेर्विभान्नाम० तै० सं० १,६,४ । तै० सं० १,७,५ ।
(५) अथाज्यस्थाल्या: स्रुवेणोपघातं प्रायश्चित्तानि जुहोत्याश्रावितमत्याश्रावितं० अथ यत्र समृद्धिर्जुहोतो देभ्य: स्वाहा० । बौ० श्रौ० १,२१ ।

सर्वे प्रायश्चित्त होममन्त्राः बौधायनोक्ताः । प्रायश्चित्तहोमे बौधायनानां निरपेक्षत्वं आश्वलायनानां सापेक्षत्वमिति ।

प्रायश्चित्तहोममन्त्रप्रतीकाः[1] -

---

(१) आकूतं० । (२) इष्टेभ्यः ।
(३) वषट् निष्टेभ्यः० । (४) भेषजं दुरिष्ट्यै० ।
(५) निष्कृत्यै:० । (६) दौराद्ध्यै० । (७) दैवीभ्यःस्तनूभ्यः० ।
(८) ऋद्ध्यै० । (९) समृद्ध्यै । (१०) सर्वसमृद्ध्यै० ।
(११) भूः० । (१२) भुवः० । (१३) सुवः० ।
(१४) भूर्भुवसुवः० । (१५) शर्म मे० । (१६) तत्त्वायामि० ।
(१७) त्वं नो अग्ने० । (१८) सत्वं नो अग्ने० ।
(१९) त्वमग्ने अयास्यया० । (२०) अयाश्चाग्ने० ।
(२१) यदस्मिन् कर्मणि० । (२२) यदस्य कर्मणो० ।
(२३) प्रजापतेनत्व० । एतैर्मन्त्रैः स्रुवेण जुहुयात् । ततः ध्रुवाज्यात् स्रुवेणोपहृत्य क्रमेण जुहोति[2] ।

---

(१) आकूतमत्याआकूतं - - - - - - - प्रजापतेनत्वदेतान्यन्यो० इत्यन्तो मन्त्र प्रतीकानि । तै० ब्रा० ३,७,११ ।
(२) सर्वेषु यज्ञक्रतुषु पत्नीः संयाज्य प्राक्संस्थ ध्रुवामाप्याय्य ध्रुवातः सर्वप्रायश्चित्तानि जुहोति ब्रह्मप्रतिष्ठामनसः इत्यन्तेनाऽनुवाकेन प्रत्यृचम् । बौ० श्रौ० २०,१५ । ब्रह्मप्रतिष्ठा० । इत्यारभ्य यत्पाकत्राइत्यन्तं मन्त्राः तै० ब्रा० ३,७,११ ।

(१) ब्रह्मप्रतिष्ठा० । (२) आशाप्ति० ।

(३) यद्दैवा० । (४) ततं म आप:० ।

(५) उदयं० । (६) उदुत्यं० ।

(७) चित्रं देवानां० । (८) शं मे० ।

(९) शं नोवैभ्य: । (१०) इष्टेभ्यष्टी० ।

(११) यतइन्द्र० । (१२) स्वस्तिदाविश० ।

(१३) आभिर्गीर्भि:० । (१४) अनाज्ञातं० ।

(१५) पुरुषसम्मित:० । (१६) यत्पाकत्रा० ।

(१७) पुनस्त्वादित्या०[१] । (१८) यन्मआत्मनो०[२] ।

(१९) पुनरग्नि:० । (२०) ओं स्वाहा ।

(२१) यच्चिद्धि ते० । (२२) यत्किञ्चेदं०[३] ।

(२३) कितवासो०[४] । (२४) तंतु तन्वन्०[५] ।

(२५) उद्बुध्यस्वाग्ने०[६] । (२६) त्रयस्त्रिंशत्तन्त०[७] ।

(२७) अन्वग्निरुषसा०[८] । (२८) मनोज्योति:०[९] ।

---

(१) पुनस्त्वा० तै० सं० ४,२,३ ।

(२) यन्मआत्मनो० तै० सं० ३,२,५ ।

(३) यत्किञ्चेदं० तै० सं० ३,४,११ ।

(४) कितवासो० तै० सं० ३,४,११ ।

(५) तन्तुं तन्वन्० तै० सं० ३,४,२ ।

(६) उद्बुध्यस्वाग्ने० तै० सं० ४,७,१३ ।

(७) त्रयस्त्रिंशत्तन्त० ४,५,१० ।

(८) अन्वग्निरुषसा० तै० सं० ४,१,२ ।

(९) मनोज्योति:० तै० सं० [illegible] ७,२०,६, ६, ३,५ ।

(२९) भूरग्नये० । (३०) भुवोवायवे० ।
(३१) सुवरादित्याय० । (३२) भूर्भुवः सुवश्चन्द्रमसे० ।
(३३) सप्ततेअग्ने० । (३४) प्रजापते० ।
(३५) हिरण्यगर्भाय० । (३६) भृगूणांपतये० ।
(३७) आंगिरसां पतये० इति ।

अथ जुहूवात् द्वादशगृहीतं गृहीत्वा, मन्वविग्राहं जुहोति ।

(१) जातवेदसे० । (२) मनोज्योति० । (३) भूरग्नये० ।
(४) भुवोवायवे० । (५) सुवरादित्याय० । इति प्रायश्चित्तहोमः ।
ततः यजमानः ऋक्तोयज्ञेणप्रायश्चित्तं करिष्ये इति संकल्पयति । अध्वर्युः - आज्यस्थालीमादाय, जुहवां सकृत् गृहीत्वा, भूस्वाहेति मन्त्रेण गार्हपत्ये जुहोति । स्रुवेण ब्रह्माजुहोति । यजमानः - यजुष्टोयज्ञेणजप्रायश्चित्तं करिष्ये इति संकल्पयति । अध्वर्युः - दक्षिणाग्नौ भुवस्वाहेति जुहोति । स्रुवेण ब्रह्मा जुहोति । पुनः यजमानः - सर्वतोयज्ञेण प्रायश्चित्तं करिष्ये इति संकल्पयति । अध्वर्युः - आहवनीयं गत्वा "भूर्भुवः सुवः स्वाहा" इति जुहोति स्रुवेण ब्रह्मा जुहोति ।

ततः अध्वर्युः वेधास्तृत बर्हिभ्यः प्रत्येकं किञ्चित् किञ्चित् गृहीत्वा, "समङ्क्तां बर्हिर्हविर्भिः०" इति मन्त्रेण सकृत् समनक्ति । ततः "दिव्यं नभो गच्छतु यत् स्वाहा" इति मन्त्रेण आहवनीये अनुप्रहरति । ततः उत्थाय, दक्षिणपादमन्तर्वेदि निधाय ध्रुवामादाय, "देवागातुं विदोगातुं मिति मन्त्रेण

सर्वं जुहोति ।[१]

अन्तर्वेद्यां प्रणीतानिनयनम् -

अध्वर्युः प्रणीतापात्रं वेद्यां निधाय, "सदसि सन्मे भूयाः०" इति मन्त्रं यजमानं वाचयति । ततः प्रतिदिशं अध्वर्युयजमानौ तं जलमुत्सेचनं कुरुतः "प्राच्यां दिशि देवा०" इति मन्त्रपञ्चकेन । जलमुत्सेचनानन्तरं तां प्रणीतां "समुद्रं वः प्रहिणोमि०" इति मन्त्रेण अन्तर्वेदि निनयति ।[२] अत्र ब्रह्मा ब्रह्मप्रायश्चित्तानि आहवनीये जुहोति ।

विष्णुक्रमः -

यजमानः स्वासनादुत्थाय दक्षिणेन पदा विष्णुक्रमान् क्रमते ।

---

(१) अथ बर्हिषो धातुनां संप्लुप्य ध्रुवयां समनक्ति समङ्क्तां बर्हिर्हविषा० अथैनदाहवनीयेऽनुप्रहरति दिव्यं नभो० अथोपोत्थाय० समिष्टयजुर्जुहोति देवागातुविदोगातु० । बौ० श्रौ० १,२१ । देवागातुविदोगातु० । तै० सं० १,१,१३ ।

(२) सदसि सन्मे भूयाः० । प्राच्यां दिशि देवा० । तै० सं० १,६,४ । यत् पूर्णपात्रमन्तर्वेदि निनयति० एष वै दर्शपूर्णमासयोरवभृथः । तै० सं० १,७,५ । अञ्जलौ पूर्णपात्रमानयति० मुखं विमृष्टे । अवभृथस्यैवरूपं कृत्वोत्तिष्ठति । तै० ब्रा० ३,३,६-११ । तमन्तर्वेदि निधाय पूर्णपात्रं यजमानं वाचयति सदसि० अथदिशो व्युन्नयति प्राच्यां दिशि देवा० अथैनानिनयति समुद्रंवः० । बौ० श्रौ० ३,२० ।

"विष्णोः क्रमोसि०" इति मन्त्रं पठित्वा[1], बर्हिर्निरस्य अपउपस्पृश्य, स्वं हृदयं "सं ज्योतिषा०" इति मन्त्रं पठित्वा[2] अभिमृशति । पुनरपउपस्पृश्य, ऐन्द्रीमावृतमन्वावर्ते इति प्रदक्षिणमावर्तते[3] । "समहं प्रजया०" इति मन्त्रेण अपसव्यमावर्तते[4] । ततः आहवनीये "समिद्धोअग्ने०" इति मन्त्रेण समिधमादधाति । आहवनीयं "वसुमान्यज्ञोवसुमान् भूयासम्" इति मन्त्रेण उपतिष्ठते । आग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते । पुनः "अग्नेगृहपते-सुगृहपति०" इति मन्त्रेण गार्हपत्यमुपतिष्ठते । ततः स्वं नाम गृहीत्वा "ज्योतिष्मतींतामाशिषमाशासे" इति मन्त्रं पठति । ततः ज्येष्ठानुक्रमेण पुत्राणां प्रत्येकं नाम गृहीत्वा, "ज्योतिष्मतीं वा माशिषमाशासे" इति मन्त्रं ब्रूयात् । अन्ते "तन्तवेज्योतिष्मतीमिति ब्रूयात्[5]" । इति विष्णुक्रमः ।

---

(१) उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान् क्रमते । बौ० श्रौ० १,२१ । उपोत्थाय दक्षिणेनपदा विष्णुक्रमान् क्रमते विष्णोः क्रमोऽस्यभिमातिषाहा० बौ० श्रौ० ३,२०-२१ । विष्णोः क्रमोऽस्यभिमातिषाहा० तै० सं० १,६,५-६ ।

(२) अपउपस्पृश्य संज्योतिषाभुवमित्युरः प्रत्यात्मानं प्रत्यभिमृशते संज्योतिषाभुवम् तै० सं० १,६,५-६ बौ० श्रौ० ३,२१ ।

(३) अथ दक्षिणमंसमभिपर्यावर्तत ऐन्द्रीमावृतमन्वावर्त इति । बौ० श्रौ० ३,२१ । ऐन्द्रीमावृतमन्वावर्ते । तै० सं० १,६,५-६ ।

(४) अथोदङ्० पर्यावर्तते समहं प्रजया० । बौ० श्रौ० ३,२१ । समहं प्रजया० तै० सं० १,६,५-६ ।

(५) अथाहवनीये समिधमादधातिसमिद्धो० अथाहवनीयमुपतिष्ठतेवसुमान्० अथाग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्नआयूंषि० अथ गार्हपत्यमेवोपतिष्ठतेऽग्नेगृहपते० बौ०श्रौ० ३,२१ । तै०सं० १,६,५-६ ।

यज्ञविमोक: -

'कस्त्वा युनक्ति सत्वाविमुञ्चतु' इति यज्ञविमोकं जपति[1]। उत्करे उपवेषस्य स्थूलप्रदेशं 'यं देवामनुष्येषु पवेषं०' इति मन्त्रेण उद्गूहति[2]। 'यानिघर्मेकपालान्युप०' इति मन्त्रेण कपालानि विमुञ्चति[3]। यजमान: यथेतमेत्य स्वायतने उपविश्य, 'पयस्वती०' इति पूर्ववत् अप आचामति। अनन्तरं आहवनीये 'अग्नेव्रतपते०' (२) वायोव्रतपते० । (३) आदित्यव्रतपते०' । (४) व्रतानां व्रतपते० इति मन्त्रेण समन्त्रकं चतस्र: समिध: आदधाति[4]। यजमान: यथालिङ्गं त्यागं वदेत्। 'यज्ञो बभूव स आबभूव०' इति यज्ञस्य पुनरालंभं जपति। अथ प्राङ्गुत्थाय 'गोमाँ अग्ने०' इति गोमतीमन्त्रं पठति। उपविश्य, ब्राह्मणांस्तर्पयितवै इत्यात्मानं सम्प्रेष्यति। संतिष्ठते दर्शपूर्णमासेष्टि:[5]।

---

(१) अथ वै भवति यो वै यज्ञं - - - - - - - - - - - -
स भवति कस्त्वायुनक्ति०, बौ० श्रौ० ३,२२ ।

(२) परिवेषो वा एषवनस्पतीनां यदुपवेष:। तमुत्करे यं देवा०, तै० ब्रा० ३,३,६-११ ।

(३) काले कपालानि विमुञ्चति यानिघर्मे०, बौ० श्रौ०३,२२ ।
यानि घर्मे० तै० सं० १,१,७ । ५,१०,११ ।

(४) बौ० श्रौ० ३,२२ । मन्त्रविभाग: तै० ब्रा० ३,७,४-५ ।

(५) बौ० श्रौ० ३,२२ । मन्त्रविभाग: । तै० सं० १,६,५-६ ।
बौ० श्रौ० १,२० ।

पिण्डपितृयज्ञ: - पिण्डपितृयज्ञस्य काल: [1] -

पिण्डपितृयज्ञ: अमावास्यायामह्नश्चतुर्थे भागे कर्तव्य: । यदातु-भयोरह्नो: अमावास्य भवति तदातु यदहश्चन्द्र मान दृश्यते तदहरपराह्णे पिण्डपितृयज्ञ: कार्य: अत्रायमाशय: - अमावास्यातिथेरपराह्न व्याप्त्यभावेऽप्यन्त्यक्षणावच्छिन्ना होरात्र एव पिण्डपितृयज्ञ: । पूर्वदिनापराह्ण व्याप्तेस्त्वनादर: ।

सङ्कल्प: [2] -

यजमान: देशकालौ सङ्कीर्त्य "पिण्डपितृयज्ञं करिष्ये" इति सङ्कल्पं कुर्यात् ।

आश्वलायनमतेन दक्षिणाग्ने: प्रणयनम् [3] -

दक्षिणाग्ने सम्बन्ध्येकं प्रदीप्तोल्मुकं "ये रूपाणिप्रतिमुञ्चमाना०"

---

(१) तस्मात् पितृभ्य: पूर्वेद्यु: क्रियते० । तै० सं० २,५,३ । तै०ब्रा० १,३,१०
अमावास्यायामपराह्णे पिण्डपितृयज्ञ: । आ०श्रौ०अ०२ खं० ६,१ ।

(२) पिण्डपितृयज्ञं करिष्यन्नुपकल्पयते । बौ० श्रौ० प्र० ३ अ० १० ।

(३) दक्षिणाग्नेरेकोल्मुकं प्राग् दक्षिणा प्रणयेद्येरूपाणि प्रतिमुञ्च-माना असुरा: सन्त: स्वधया चरन्ति । परा पुरो ये भरन्त्यग्नि-ष्टाल्लोकात् प्रणुदात् । आ० श्रौ० अ० २ खं० ६,२ ।

इत्युक्त्वा आग्नेय्यां दिशि बहिरग्निं प्रणयति । अस्मिन् कर्मणि आग्नेय्येव प्राची भवति[1] । दक्षिणाग्निं प्रणीतमग्निं च प्रज्वाल्य दर्भैः परिस्तृणाति[2] ।

आश्वलायनमतेन पात्रासादनम्[3] -

दक्षिणाग्नेः प्रागुदक् प्रत्यगुदग्वा आग्नेयीसंस्थानि पात्राणि सादयति । पात्रासादनक्रमः - (१) चरुस्थालीं, (२) शूर्पं, (३) स्फ्यं, (४) उलूखलं, (५) मुसलं, (६) स्रुवं, (७) स्रुचं, (८) कृष्णाजिनं, (९) सकृदाच्छिन्नेध्मां, (१०) मेक्षणं, (११) कमण्डलुञ्च क्रमपूर्वकमासादनं कुर्यात् ।

अत्राह बौधायनः[4] -

बौधायनमतेन सकृदाच्छिन्नं बर्हिः आस्तीर्य तस्योपरि पात्राणि द्वंद्वन्यञ्च आसादयति ।

---

(१) सर्वकर्माणि तां दिशम् । आ० श्रौ० अ०२ खं० ६,३ ।

(२) उपसमाधायोभौ परिस्तीर्य । आ० श्रौ० अ०२ खं० ६,४ ।

(३) दक्षिणाग्नेः प्रागुदक् प्रत्यगुदग्वैकैकशः पात्राणि सादयेच्चरुस्थालीं शूर्पस्फ्योलूखलमुसलस्रुवस्रुचकृष्णाजिन० आ० श्रौ० अ०२ खं० ६,४ ।

(४) सकृदाच्छिन्नं बर्हिर्दर्भांश्च परिस्तरणीयान्व्रीहींश्च शूर्पं च प्रक्षालिते चोलूखलमुसले - - - - - - - - - - - - - - यज्ञायुधानीति । बौ० श्रौ० प्र०३ अ० १० ।

आसादनक्रम: -

(१) व्रीहीन्, (२) शूर्पं, (३) प्रक्षालितेचोलूखलमुसले,
(४) स्थालीं स्रुवां, (५) मेक्षणं, (६) एणकोपबर्हणे,
(७) आन्जनाभ्यन्जने, (८) दर्शा, (९) स्फ्यं,
(१०) उदकुम्भं, तथा अन्यान्युपकल्पनीयानि यज्ञ पात्राणि क्रमपूर्वकं आसादयति ।

हविर्निर्वाप:[१] (हविर्निर्वापस्तु बौधायन एवमुक्त:)

यजमान: प्राचीनावीति भूत्वा दक्षिणाग्ने: पश्चात् जघनेन उपविश्य पवित्रसंज्ञक कुशेन युक्तां स्थाल्यां "पितृभ्यो वो जुष्टं निर्वपामि" इति मन्त्रेण व्रीहीन्निर्वपति । विकल्पेन निर्वाप: तूष्णीमपि भवति । पश्चात् चर्मणि उलूखलमुसलं च निधाय, दक्षिणाभिमुखोभूत्वा सकृदवहन्ति[२] । तत: तुषनिरसनं विवेकीकरणादि संस्कार:[३] । तदनन्तरं तिर: पवित्रवत्यां स्थाल्यां मध्यपर्यन्तं जलं पूरयित्वा पात्र्यां तण्डुलानावपति[४] । अन्यस्मिन्

(१) अथ प्राचीनावीतं कृत्वा - - - तूष्णीं वा । बौ०श्रौ०प्र०३अ०१० ।
(२) उपर्यधां स्थालीं कृत्वैतस्मिन्नेव चर्मण्युलूखलमुसलेनिधायावहन्ति सकृदेव दक्षिणाभिमुख: । बौ० श्रौ० प्र० ३ अ० १० ।
(३) अथैनान् विविच्य, बौ० श्रौ० प्र०३ अ० १० ।
(४) अथैतस्यामेवस्थाल्यां - - -- - तण्डुलान् आवपति, बौ० श्रौ० प्र०३ अ० १० ।

पात्रे आज्यनिर्वापः ।

आश्वलायनमतेन निर्वापविधौ अग्निष्ठशकटमारोहणमिति विशेषः[1] -

आश्वलायनमतेन अग्निष्ठशकटस्य[2] दक्षिणदक्षिणभागमारुह्य व्रीहिभिः पूर्णां चरुस्थालीं निमृज्यबहिः पतितान् व्रीहीन् अन्य निधाय, कृष्णाजिनमास्तीर्य तस्योपरि उलूखलमुसलन्च निधाय, स्थालीस्थान् व्रीहीन् च उलूखले ओप्य, पत्नी अविवेकमवहन्ति । ततः अवहननसंस्कारपूर्वकतण्डुलान् सकृत् प्रक्षालयति ।

अधिश्रयणम् -

चरुमाज्यं च पचनार्थं अग्नौ अधिश्रयति[3] । अधिश्रितयोः पर्यग्निकरणं कृत्वा मेक्षणस्रुवयोः सम्मार्ष्टि[4] । पश्चात् "पितृभ्यो वो जुष्टं प्रोक्षामि" इति मन्त्रेण प्रोक्षणं कुर्यात् । यदिनिर्वापः तूष्णीं भवति तदा

---

(१) दक्षिणतोऽग्निष्ठमारुह्य चरुस्थालीं व्रीहीणां पूर्णां निमृषेत् । परिसन्धाग्निदध्यात् । कृष्णाजि - - - - - - - - - अविवेचनम् । आ० श्रौ० अ०२, खं० ६,५ ।

(२) अग्निष्ठम् = अग्निसमीपे तिष्ठतीत्यग्निष्ठं शकटमिति ।

(३) आज्यमधिश्रयति, बौ० श्रौ० प्र० ३ अ० १० ।

(४) उभयोः पर्यग्नि कृत्वा - - - सम्मार्ष्टि बौ० श्रौ०प्र०३ अ० १० ।

प्रोक्षणमपि तूष्णीं कुर्यात्[1] । ततः तुषनिरसनं विवेकीकरणादि संस्कारः[2] ।
तदनन्तरं तिरः पवित्रवत्यां स्थाल्यां मध्यपर्यन्तं जलं पूरयित्वा पात्र्यां
तण्डुलानावपति । अन्यस्मिन् पात्रे आज्यनिर्वापः ।[3]

रेखाकरणम्[4] (आश्वलायनमतेन) -

ततो दक्षिणाग्नेरारभ्य अर्वागिति प्रणीत् "अपहताअसुरा०"
इति मन्त्रेण स्फ्येन दक्षिणपूर्वान्तराले लेखामुल्लिखेत् । ततस्तां लेखां
जलेन अभ्युक्ष्य, सकृदाच्छिन्नैर्दर्भैः अवस्तृणाति[5] ।

अत्राह बौधायनः[6][7] -

यजमानः प्राचीनावीति भूत्वा अन्वाहार्य पचने स्फ्येन लेखा-

---

(१) स्थाल्यां व्रीहीन्निर्वपति पितृभ्यो वो जुष्टं निर्वपामि तूष्णीं वा ।
बौ० श्रौ० ३,१० ।

(२) कृष्णाजिन उलूखले कृत्वेतरान्पत्न्यवहन्यादिविवेचनम्, आ० श्रौ० २,६,७ ।

(३) अवहतान् सकृत् प्रक्षाल्य दक्षिणाग्नौ श्रपयेत्, आ० श्रौ० २,६,८ ।

(४) अर्वागिति प्रणीतात् स्फ्येन लेखामुल्लिखेदपहतासुरारक्षांसि
वेदिषदः । आ० श्रौ० अ० २ खं० ६,९ ।

(५) तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य० आ० श्रौ० अ०२,खं० ६,१० ।

(६) प्राचीनावीतं कृत्वा - - - - - - - - - - - - - - - - - -
प्रपितामहा इति, बौ० श्रौ० प्र० ३, अ० १० ।

मुद्धृत्य, जलेन अवोक्ष्य, दक्षिणायतनस्य पश्चिमभागे बर्हिरास्तृणाति। आस्तृणीतदर्भोपरि - "मार्जन्तां पितरः। मार्जयन्तां पितामहाः। मार्जयन्तां प्रपितामहाः" इति प्रतिमन्त्रं उदकेन मार्जयति।

आश्वलायनमतेन स्थालीपाकस्य स्थाननिर्देशः[1] -

पश्चात् स्थालीपाकमभिघार्य, आस्तीर्णे दर्भोपरि आसादयति। तूष्णीमेवाज्योत्पवनं कुर्यात्। ततस्तदाज्यं ध्रुवायां कृत्वा दक्षिणाग्नेर्दक्षिणतः स्थापयेत्। आञ्जनं, अभ्यञ्जनं, कशिपूपबर्हणादि उपचाराणि दक्षिणतः स्थापयेत्।

अत्राह बौधायनः[2] -

चरुश्रपणानन्तरं तं चरुं आज्येन अभिघार्य उत्तरस्यां दिशि उद्वासयेत्।

---

(१) आसादयेदभिघार्यस्थालीपाकमाज्यं सर्पिरुत्पूतं नवनीतां पोत्पूतं ध्रुवायामाज्यं कृत्वा दक्षिणतः। आ० श्रौ० अ०२ खं० ६,१० ।

(२) अथैतं चरुं श्रपयित्वा - - - - - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - - उदन्चमुद्वासयति, बौ० श्रौ० प्र०३ अ० १० ।

पिण्डपितृयज्ञे प्रधानहोम: आश्वलायनमतम् -

---

प्राचीनावीति भूत्वा इध्ममुपसमाधाय[1] पूर्वावस्थितेन मेक्षणपात्रेण अवदानधर्मेण[3] मेक्षणेनैव जुहुयात् । आहुति प्रदाने मन्त्रान्ते "स्वधानम:" इति शब्दप्रयोग:[2] ।

अत्र विकल्पोऽपि[4] उक्त: -

---

विकल्पपक्षे यज्ञोपवीतीत्यैवस्थितौ मन्त्रान्ते स्वाहाकारपूर्वकं जुहुयात् ।

होममन्त्रौ[5] -

---

(१) सोमाय पितृमते स्वधानम: ।

(२) अग्नये कव्यवाहनाय स्वधानम: ।

होमान्ते होमसाधनभूतं पात्रविशेषं मेक्षणं दक्षिणाग्नौ [illegible] प्रक्षिपेत् ।

---

(१) प्राचीनावीतीध्ममुपसमाधाय - - - - - - - - - - - - - - -
स्वधानम इति, आ० श्रौ० २,६,१२ अ०२ खं० ६ ।

(२) पञ्चदशसंख्याकासमिध: इध्म: । नारायणवृत्ति: आ०श्रौ०अ०२ पृ० ६९ ।

(३) अवदानसम्पन्नाम् = उपस्तरणं द्विरवदानं प्रत्यभिधारणं चेति ।

(४) स्वाहाकारेणवाऽग्निं पूर्वं यज्ञोपवीति । आ०श्रौ० अ०२ खं० ६,१३ ।

(५) आ० श्रौ० २,६,१२ ।

स्वाहाकार पक्षेऽपि मेक्षणाऽनुप्रहरणानन्तरं प्राचीनावीति भूत्वैव उदक-निनयनादि कर्म कुर्यात्[1]।

अत्राह बौधायन: -

---

अस्मिन् कर्मणि प्राचीनावीति भूत्वा कर्मकुर्वीत । आहुतिप्रदान-समये यज्ञोपवीति भूत्वा[2] आहुतिं जुहुयात् ।

अत्र तिस्र: आहुतिमन्त्रा:[3] -

---

(१) सोमाय पितृपीताय स्वधानम: ।

(२) यमायाङ्गिरस्वते पितृमते स्वधानम: ।

(३) अग्नये कव्यवाहनाय स्वधानम: ।

तत: अग्नौ मेक्षणप्रतिपत्ति: ।

आश्वलायनमतेनउदकनिनयनमन्त्रा: -

---

(१) शुन्धन्तां पितर: । (२) शुन्धन्तां पितामहा: ।

---

(१) मेक्षणमनुप्रहृत्यप्राचीनावीतिलेखां त्रिरुदकेनोपनयेत्, आ०श्रौ० २,६,१४ ।

(२) यज्ञोपवीतं कृत्वा अन्वाहार्य पचनमुपसमाधाय मेक्षणेनोपघातं तिस्र आहुतीर्जुहोति । बौ० श्रौ० प्र० ३ अ० १० ।

(३) बौ० श्रौ० प्र० ३ अ० १० । सोमायपितृपीताय स्वधानमइत्याह० अग्नये कव्यवाहनाय स्वधानम इत्याह० तिस्रआहुतीर्जुहोति, तै०ब्रा०१, ३,१०

(३) शुन्धन्तां प्रपितामहाः । पूर्वमेव स्फ्योल्लिखितायां उपर्युक्तैः त्रिभि-
र्मन्त्रैः त्रिस्त्रिरुदकं निनयेत्[1] । उदक निनयनं पिण्डदानार्थम् ।

अत्राह बौधायनः[2] -
--------------------

बौधायनमतेन उदकनिनयनं मार्जनरूपम् । पूर्वं आस्तृतबर्हिषि
अद्भिर्मार्जयति । मार्जनमन्त्राः - (१) मार्जयन्तां पितरः ।
(२) मार्जयन्तां पितामहाः । (३) मार्जयन्तां प्रपितामहाः । इति

आश्वलायनमतेन पिण्डदानम्[3] -
--------------------

"पिण्डान्निपृणीयात्" पिण्डनिपरणं पितृतीर्थेनैव भवति ।
पराचीन पाणिः - पाणेरुत्तानत्वमिति । सम्बुध्यन्तानि पित्रादीनां
नामानि अत्र गृह्णीयात् ।

तस्य स्वरूपम् -
--------------------

यथा - एतत्ते पितः अमुकशर्मन् ये चत्वा मंत्रानु पित्रे शर्मणे गोत्राय

--------------------

(१) आ० श्रौ० अ० २ खं० ६, १४ ।
(२) अद्भिर्मार्जयति - - - - - - - - - - - - - - - - - - -
प्रपितामहाः इति । बौ० श्रौ० प्र० ३ अ० १० ।
(३) तस्यां पिण्डान्निपृणीयात् पराचीनपाणिः पित्रे पितामहप्रपिता-
महायैतत्तेऽसौ ये चत्वामन्त्रान्वितिति । आ०श्रौ० अ० २ खं० ६,१५ ।

तस्मै ते स्वधानमः । एवमेव प्रकारेण उच्चारणं कृत्वा स्व पितृपितामहप्रपिता-
महेभ्यः पिण्डां दद्यात् । अत्र "जुहुयाज्जीवेभ्यः" अवंलुप्तं सर्वजीविनः" इति सूत्र-
द्वयेन सूत्रकारः विशेषविचारः कृतः । "प्रतिम्यएवनिपृणीयात्" "जीवन्त-
मतीत्य न दद्यात् । यजमानः जीवतु पितृके इति सर्वेपिण्डाः अग्नौ होतव्याः ।

[1] [2] [3]

होमपक्षः -

होमपक्षे अग्नौ निपरणमन्त्रान्ते होमः । स्वाहाकारान्ते न कर्तव्येति ।

पिण्डानुमन्त्रम् -

ततः पिण्डदानान्ते पिण्डानुमन्त्रणं "अत्र पितरो मादयध्वं यथा-
भागमा वृषायध्वम्" इति मन्त्रेण कुर्यात्[4] । पिण्डहोमे कृते एतदनुमन्त्रणं न
भवति ।

पिण्डनिपरणम्[5] (बौधायनमतेन)

पिण्डान् ध्रुवेण उपस्तीर्य बर्हिषि त्रीन् पिण्डान् ददाति ।

---

(१) आ० श्रौ० अ० २ खं० ६,२२ । (२) तत्रैव अ० २ खं० ६,२३ ।

(३) आ० श्रौ० अ० २ खं० ६,१८ ।

(४) निपृतानुमन्त्रयेतात्र -------------------
वृषायध्वमिति, आ० श्रौ० २,७,१ ।

(५) अथ ध्रुवेणोपस्तीर्णाभिघारितां स्त्रीन् पिण्डान् ददाति बौ०श्रौ०३,१०

स यथा[1] -

एतत्ते पितः शर्मन् गोत्र ये च त्वामनु ।। १ ।।

एतत्ते पितामह शर्मन् गोत्र ये च त्वामनु ।। २ ।।

एतत्ते प्रपितामह शर्मन् गोत्र ये च त्वामनु ।। ३ ।।

पिण्डनिपरणानन्तरं अत्र पितरो[2] यथाभागमन्दर्ध्वं इति मन्त्रमुक्त्वा उदङ्०-पर्यावृत्त्य व्यावृत्तऊष्मा: - उपास्ते । अभिपर्यावृत्त्य पिण्डशेषं चरुं ये समाना: समनस:०[3] इति मन्त्रेण अवजिघ्रति । पुनस्तथैव पूर्ववत् आसादितेषु पिण्डेषु अद्भि: मार्जनम् । मार्जयन्तां पितर:० इति मन्त्रेण[4] ।

अत्र आश्वलायन: -

---

पिण्डानुमन्त्रणं कृत्वा सव्यावृत उदङ्०आवृत्त्य यथाशक्ति अनुश्वसन्[5]

---

(१) कां० श्रौ० प्र० ३ अ० १० ।

(२) अत्र पितरो यथाभागं मन्दध्वम् इत्युक्त्वा उदङ्०पर्यावृत्त्य आ ऊष्मणो व्यावृत उपास्ते । कां० श्रौ० प्र०३ अ० १० ।

(३) अथाऽभिपर्यावृत्त्यैतं चरुमवजिघ्रति । ये समाना: - - - - - - - - - शतं समा: । कां० श्रौ० प्र०३ अ० १०,११ ।

(४) अथ तथैवाऽद्भिर्मार्जयति - - - - - - - - - - - - - - - प्रपितामहा: इति । कां० श्रौ० प्र० ३ अ० ११ ।

(५) सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वाऽभिपर्यावृत्त्या-मीमदन्तपितरो यथाभागमावृषायीषतेति । आ०श्रौ० २,७,२ ।

पुनः अभिपर्यावृत्त्य "अमीमदन्तपितरो यथाभागमावृषायीशत" इति मन्त्रेण पुनरनुमन्त्रणं कृत्वा प्राणभक्ष[1] विधिना चरुशेषं भक्षयेत् । अयं भक्षणविधिः तूष्णीमेव भवति ।

उदकनिनयनम्[2] -
-----------

दत्तेषु पिण्डेषु पुनरुदकनिनयनं "शुन्धन्तां पितरः०" इति मन्त्रेण कर्तव्यम् ।

आश्वलायनमतेन पिण्डोपचाराः -
-------------------------

अत्र पिण्डपितृयज्ञे पिण्डेषु उपचारान् दद्यात् ।

उपचारक्रमः[3] -
-----------

"अभ्यङ्क्ष्व०" इति मन्त्रेण अभ्यञ्जनं दद्यात् । [illegible] ।

---

(१) प्राणभक्षः = प्राणोनासिका स्थानीवायुः तेन भक्ष्यते गन्धः प्राण भक्षयति । देवत्रातभाष्ये । चरोः प्राणभक्षं भक्षयेत् । आ० श्रौ० २,७,३ ।

(२) नित्यं निनयनम् । आ० श्रौ० अ० २ खं० ७,४ ।

(३) असावभ्यङ्क्ष्व सावङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने ।
आ० श्रौ० अ० २ खं० ७,५ ।

ततः वासो दद्यात्[1]। वासस्वरूपम् - दशा, ऊर्णास्तुका स्वीयमेवलोमानि वासोऽर्थं दद्यात्। स्वीयलामदाने आयुषः परिमाणं पञ्चाशत् वर्षेषु अतीतेषु तत ऊर्ध्वं लोमवासः। वासोदानमन्त्रा - एतत्पितरोवासो मानो लोन्यत् पितरो युष्म०ष्वम्। ।

ततः नमस्कारोपचारः -

"नमो वः पित २ रुषे०"[2] इति सूक्तमन्त्रेण ततः मनोन्वाहुवामहे०"[3] इति चतसृणामृचां -पितृन् उपतिष्ठेत।

अत्राह बौधायनः -

आञ्जनोपचारे अञ्जनं ददाति "आञ्जतां पितरः" इति मन्त्र-मुच्चार्य आञ्जनं दद्यात्[4]। अथाभ्यञ्जनं ददाति "अभ्यञ्जन्तां पितरः"[5] इति

---

(१) वासोदद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षतायां ऊर्ध्वं स्वंल्लोमैतद्वः पितरो वासो मानोतोन्यत्पितरोयुष्म०ष्वमिति, आ०श्रौ०अ०२खं० ७,६।

(२) नमोवः पितरष्णे - - इह सन्तः स्याम। आ०श्रौ०अ०२खं० ७,७। तै० ब्रा० १,३,१०।

(३) मनोऽन्वाहुवामह इति च तिसृभिः। आ० श्रौ० अ० २ ख० ७,८ मनोन्वाहुवामहे०। ऋ०सं० १०,५७,३-५।

(४) अथाऽऽञ्जनं ददाति आञ्जतां पितरः, आञ्जतां पितामहाः, आञ्जतां प्रपितामहाः इति, बौ०श्रौ०प्र०३ अ० ११।

(५) अथाऽभ्यञ्जनं ददाति अभ्यञ्जतां पितरः, अभ्यञ्जतां पितामहाः, अभ्यञ्जतां प्रपितामहाः इति। बौ० श्रौ० प्र० ३ अ० ११।

द्वितीयोपचारः । अथावासां सिवदाति - "एतानिवः पितरो वासांसि०" इति मन्त्रेण तृतीयोपचारः ।

वासोदाने विशेषः -

"उत्तरआयुषि लोमशिछन्दीत"[2] इति ब्राह्मण वचनेन एव लोमच्छेदनं विहितम् । अत्र वचने कालो न विहितः । याज्ञिकसमाख्या बलात् "ऊर्ध्वं षट् षष्टिम्यश्च वर्षेभ्योऽष्टाभ्यश्च मासेभ्य" इति एतस्मिन्नेव एतत् कालेच्छेत्तव्यं भवति । तत नमस्कारोपचाराः - अत्र नमस्कारोपचारे विपर्यासेन मन्त्र पठनम् । तच्च यथा - "नमो वः पितरो रसाय, नमोवः पितरः शुष्माय, नमोवः पितरो जीवाय, नमोक्तिरः स्वधायै, नमोवः पितरो मन्यवे, नमोवः पितरो घोराय०"[3] इति विपर्यासपूर्वकमन्त्रपठनं कृत्वा पितरो नमो वो य एतस्मिन्लोके इति मन्त्रेण उपस्थानम् ।

अत्राह आश्वलायन मतेन पिण्डविसर्जन विधिः -

उपचारप्रदानानन्तरं उपस्थानं - कृत्वा "परेतनः पितरः सोम्यासः"

---

(१) अथ वासां सिवदाति एतानिवः पितरो वासांसि, एतानिवः पिता महावासांसि, एतानिवः प्रपितामहावासांसि इति । बौ० श्रौ० प्र० ३ अ० ११ ।

(२) बौ० श्रौ० प्र० ३ अ० ११ । तै० ब्रा० १,३,१० ।

(३) बौ० श्रौ० प्र० ३, अ० ११ । तै० ब्रा० १,३,१० ।

इति मन्त्रेण स्नात् पिण्डस्थान पितॄनेव प्रवाहयेत्[१]। पितृविसर्जनं कृत्वा "अग्निं प्रत्येयात्[२]" इति सूत्रवचन सामर्थ्यात् दक्षिणामुखेनात्र किञ्चित् अनुव्रजनं कर्तव्यम् । व्रजने "अग्नेतमघाश्वंनस्तोम:०" इति मन्त्रं वाचयेत् । "यदन्तरिक्षं पृथिवीमुतद्यां[३]०" इति मन्त्रेण पुनस्तथैवगार्हपत्यमनुव्रजेत् । ततः पितृविसर्जनानन्तरं आस्तृतेषु पिण्डेषु मध्यमपिण्डमादाय "वीरं मे दत्तपितर[४]" इति याचनां कुर्यात् । अत्र विधौ कामनापरत्वे विशेष विधाय: उक्ता: । कर्तु: पुत्रलाभेच्छया मध्यमं पिण्डं पत्नीं प्राशनार्थं ददाति । सा "आधत्त पितरो गर्भं०" इति मन्त्रं स्वयं पठित्वा, तं पिण्डं प्राश्नाति[५]। इतरौ पिण्डौ अप्सु क्षिपेत्[६]। अस्मिन् समये अन्नकामेच्छया कश्चन आगन्तुका तत्र समागते सति स: इतरौ पिण्डौ प्राश्नीयात्[७]। अथ च महोरात्रेण तप्त: सन् तन्निवृत्त्यर्थं तत्रागत्य याचनां करोति सोपि अनेन पिण्ड भक्षेण रोगरहितो भवति[८]।

---

(१) अर्यनान् प्रवाहयेत्परेतनपितर: सोम्यासो गम्भीरेभि: पथिभि: पूर्विणेभि: । दत्त्वायास्मभ्यं द्रविणेहभद्रं रयिं चन: सर्ववीरं नियच्छतेति । आ० श्रौ० अ २।७,६ ।

(२) अग्निं प्रत्येयादग्ने तमघाश्वं नस्तोमैरिति । आ० श्रौ० २।७,१० अग्ने तमद्याऽश्वं नस्तोमैः:० । ऋ० सं० मं० ४,१०,१ ।

(३) गार्हपत्यं यदन्तरिक्षं पृथिवीमुतद्यां यन्मातरं पितरं वा जिहिंसिम अग्निर्मा तस्मादेनसो गार्हपत्य: प्रमुञ्चतु करोतु मा मनेनसमिति । आ० श्रौ० २।७,११ ।

अग्रिमपृष्ठेऽपि-------

अत्राह बौधायन: - पितृन्नुद्दिश्ययाचना: -

पितृनुपस्थाय "वीरं मे पितरोदत्त"[1] इति मन्त्रेण सुप्रजासम्पादनार्थं याचनां कुर्यात् ।

पितृविसर्जनम् -

"उत्तिष्ठतपितुर:"[2] इति मन्त्रेण एनान् उत्थापयति । उत्थापनानन्तरं

---

पूर्वपृष्ठस्याग्रे------

(४) वीरं मे दत्त पितर इति पिण्डानां मध्यमम् ।
आ० श्रौ० २।७,१२ ।

(५) पत्नीं प्राशयेदाधत्त पितरोगर्भं कुमारं पुष्करस्रजम् ।
यथाऽयमरपा असदिति । आ० श्रौ० २।७,१३ ।

(६) अप्स्वितरौ । आ० श्रौ० अ० २ खं० ७,१४ ।

(७) यस्यवाऽऽगन्तुरन्नकाम्याभाव: स प्राश्नीयात्
आ० श्रौ० २।७,१६ ।

(८) महारोगेण वाऽभितप्त: प्राश्नीयादन्यतरां गतिं गच्छति । आ० श्रौ० २।७,१७ ।

(१) अथ वीरं याचते - - - - - - - - - - - - - -
भूयास्त इति । बौ० श्रौ० ३।११ ।

(२) अथैनानुत्थापयति "उत्तिष्ठत पितर: प्रेतशूरा यमस्य पन्थामनुयाता पुराणम् । धत्ता दस्मासु द्रविणं यच्च भद्रं प्रणो ब्रूताद्भागधां देवतासु इति ।
बौ० श्रौ० ३।११ ।

पुनः संसादनम् - 'यन्तु पितरो यथा लोकं०' इति मन्त्रेण एनान् संसादयति ।
ततः तिसृभिः ऋग्भिः मन आह्वानम्[1] । मन - आह्वयनानन्तरं एतान् [illegible]
पिण्डान् बर्हिषासह अग्नौ अनुप्रहरणं कुर्यात् ।

## गार्हपत्यमुपस्थानम्[2] -

ततः सव्यं कृत्वा 'प्रजापते०' इत्यृचा गार्हपत्यमुपतिष्ठते ।

इति पिण्डपितृयज्ञः ।

## आग्रायणम् -

अग्रेऽयनं भक्षणं येन कर्मणा तदाग्रयणम्[3] । नवान्न पाकस्य देवान् प्रति प्रापणं तदस्मिन्कर्मणि तत् कर्माग्रयणमित्युच्यते । व्रीही, श्यामाक, यवानां एषां त्रयाणां द्रव्याणां संवत्सरे प्रथम निष्पन्नानामाग्रयणं नाम कर्म भवति । व्रीही शब्दस्य प्रथम निपातो व्रीहीणां प्राधान्य स्थापनार्थम् । तेन कालचोदना व्रीह्याग्रयणस्यैव भवति । श्यामाकशब्दस्य मध्यनिपाते व्रीहीकालाद्यवकालोभिन्न इति ज्ञापयति । एतत् दर्शपौर्णमासिकं तन्त्रम् । 'अग्निहोत्रमहुत्वाऽस्य नाश्नीयात्'[4] इति सूत्र वचनात् आग्रयणेन

---

(१) अथ तिसृभिर्मन आह्वयते मनोन्वाहुवामहे, आन एतुमनः पुनः, पुनर्नः पितरो मनः इति । बौ० श्रौ० ३,११ ।

(२) अथ यज्ञोपवीतं कृत्वा प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठते प्रजापतेनत्वदेतान्यन्यः इति । बौ० श्रौ० ३।११ ।

(३) आग्रयणं व्रीहि श्यामाकयवानाम् आ० श्रौ० २।६।१ ।

(४) अस्य नाश्नीयादग्निहोत्रमहुत्वा आ०श्रौ० २।६।२ ।

अनिष्ट्वापि अग्निहोत्रं हुत्वा अश्नतो न दोष: इति गम्यते । एतस्मिन् सूत्रे सस्यग्रहणं व्रीहयाद्यन्यदपि यन्नवनिष्पन्नं तस्य सर्वस्य प्रतिषेधार्थम् ।

आग्रयणकाल: [1] -

यदावर्षर्तुप्तिर्लौकिस्य भवति तदाग्रयणेन यजेत् । अनेन व्रीह्याग्रयणस्य शरत्काल उक्तो भवति । श्यामाकाग्रयणपक्षे मुख्यकाल: वर्षाऋतु: । यवाग्रयणं वसन्त ऋतौ भवति ।

एभिर्वचनै: सिद्धयति शरदो ग्रहणात् आश्विनकार्तिकमासौ व्रीह्याग्रयणेष्टे: काल: । श्रावणभाद्रपदौ श्यामाकाग्रयणस्य काल: । चैत्रवैशाखौ यवाग्रयणस्येति ।

अत्राह बौधायन: [2] -

महर्षिणा बौधायनेनापि आग्रयणेष्टे: त्र्याणां द्रव्याणां आग्रयणस्य मुख्य: काल: आश्वलायनवदेव उक्त: । आश्वलायनपक्षे अयं विशेष: आग्रयणेन - अनिष्ट्वाऽपि अग्निहोत्रं हुत्वा नवान्नभक्षण कर्तव्ये सति न

---

(१) यदा वर्षस्य तृप्त: स्यादथाऽऽग्रयणेन यजेत ।
अपिहि देवाआहुस्तृप्तौ - - - जुहुयात् । आ० श्रौ० २।९।३ ।

(२) वर्षासु श्यामाकानामाग्रयणं करिष्यन् भवति । बौ० श्रौ० ३।१२ ।
अथ शरदि व्रीहीणामाग्रयणं करिष्यन् भवति । बौ० श्रौ० ३।१२ ।
अथ वसन्ते यवानामाग्रयणं करिष्यन् भवति । बौ० श्रौ० ३।१२ ।

सोम: ।

आग्रयणेष्टि:[1] -

आग्रयणेष्टि: दर्शपौर्णमासतन्त्रेण भवति ।

अत्र प्रधानदेवता द्रव्यञ्च - श्यामाग्रयणे[2] -

देवता - सोम:

द्रव्यम् - श्यामाकश्चरु: इति ।

व्रीह्याग्रयणे[3] -

देवता - अग्नि:, इन्द्रश्च प्रधानदेवते ।

विकल्पेन इन्द्राग्नी विश्वेदेवश्चेति देवते ।

द्रव्यम् - व्रीहिमयश्चरु: ।

यवाग्रयणे[4] - देवता - पूर्वोक्ते देवते ।

---

(१) संतिष्ठत एषेष्टि: सपूर्णपात्रविष्णुक्रमा । बौ० श्रौ० ३।१२ ।

(२) श्यामाकेष्ट्यां सौम्यश्चरु: । आ० श्रौ० २।९।८ ।
सौम्यं श्यामाकं चरुं निर्वपति । बौ० श्रौ० ३।१२ ।

(३) अग्नीन्द्रावीन्द्राग्नी वा विश्वेदेवा: । आ० श्रौ० २ २।९।१३ ।
ऐन्द्राग्नं द्वादशकपालं निर्वपति वैश्वदेवं चरुं । बौ० श्रौ० ३।१२ ।

(४) समानं कर्म यथा व्रीह्याग्रयणस्य । बौ० श्रौ० ३।१२ ।
अपि वा क्रिया यवेषु । आ० श्रौ० २।९।५ ।

द्रव्यम् - यवमयश्चरुः ।

तन्त्रपक्ष:[1] -

तन्त्रेण आग्रयणे कृते - इन्द्राग्नी, विश्वेदेवा:, द्यावापृथिवी इति तिस्रो देवता: ।

द्रव्यम् - इन्द्राग्नी - एकादशकपाल: पुरोडाश: ।

विश्वेदेवा: - चरु: ।

द्यावापृथिवी - यवमयो[2] द्यावापृथिवी एककपाल: पुरोडाश: ।

आश्वलायनमतेन याज्यानुवाक्ये -

सोम:[3] - "सोमयास्तेमयोभुव:" । इति पुरोनुवाक्या ।

"यातेधामानिदिवियापृथिव्याम्०" । इति याज्या ।

अग्नेः[4] - "आधायेअग्निमिन्धते०" । पुरोनुवाक्या ।

---

(१) अग्नीन्द्रा विन्द्राग्नी वा विश्वेदेवा: सोमो यद्यदि तत्र श्यामाकोद्यावापृथिवी ।

(२) द्यावापृथिव्यमेककपालमिति । बौ० श्रौ० ३।१२ ।

(३) सोमयास्तेमयोभुवो याते धामानिदिवियापृथिव्यामिति आ०श्रौ० २।९।६ ।
सोमयास्तेमयोभुव० ऋ० सं० १,९१,९ ।
यातेधामानि० ऋ० सं० १,९१,४ ।

(४) आधाये अग्निमिन्धते सुकर्माण: सुरुचोदेवयन्त: । आ०श्रौ० २।९।१४ ।
आधाये अग्निमिन्धते० ऋ० सं० ८,४५,१ । सुकर्माण:सुरुचो०ऋ०सं०४,२,१७

विश्वेदेवा:[1] - विश्वेदेवास आगत० । पुरोनुवाक्या ।
येकेचज्मामहिनो० । याज्या ।

द्यावापृथिव्यो:[2] - महीद्यौ: पृथिवीचन० । पुरोनुवाक्या
प्रपूर्वजेपितरा० । याज्या ।

इन्द्राग्न्यो:[3] - "इन्द्राग्नी अवसागतम्०" पुरोनुवाक्या ।
"गोभिर्विप्र: प्रमतिमिच्छमान:० । याज्या ।

इन्द्रस्य[4] - एन्द्रसानसिं रयिं० । पुरोनुवाक्या
प्रससाहिषे पुरुहूतशत्रून्० । याज्या
इति याज्यानुवाक्या: ।

बौधायनमतेन याज्यानुवाक्ये - सोम:[5] -

"आप्यायस्व०" इति पुरोनुवाक्या

---

(१) विश्वेदेवास आगत ये के चज्मा महिनो ऽ अहिमाया
आ० श्रौ० २।६।१४ । विश्वेदेवास आगत० ऋ० सं० २,४१,१३ ।
येकेचज्मा महिनो० ऋ० सं० ६,५२,१५ ।

(२) महीद्यौ: पृथिवीचन: प्रपूर्वजेपितरानव्यसोभिरिति आ०श्रौ०२।६।१४ ।
म,, ,, ऋ० सं० १,२२,१३ । प्रपूर्वजे० ऋ० सं० ७,५३,२ ।

(३) इन्द्राग्नी अवसागतम् ऋ० सं० ७,९४,७ । गोभिर्विप्र: ऋ०सं० ७,९३,४ ।

(४) एन्द्रसानसिं रयिं० । ऋ० सं० । प्रससाहिषे० ऋ० सं० ।

(५) अथ हविष: आप्यायस्व सं ते इति । बौ० श्रौ० ३।१२ ।
आप्यायस्व० । संते पयांसि० । तै० सं० ४,२,७ ।

"सं ते" इति याज्या ।

इन्द्राग्न्यौ:[1] - "इन्द्राग्नीरोचनादिवः०" पुरोनुवाक्या ।

"श्नथद्वृत्रम्०" याज्या ।

विश्वेदेवा:[2] - "विश्वेदेवाऋतावृध०" इति पुरोनुवाक्या ।

"विश्वेदेवाः शृणुत०" इति याज्या ।

द्यावापृथिवी[3] - "द्यावानः पृथिवी०" इति पुरोनुवाक्या ।

"प्रपूर्वजेपितरा०" याज्या ।

होतुः इडाभक्षणेविशेषः -

---

होतुः अवान्तर इडायाः नित्यं जपं उक्त्वा इडां सव्येपाणौ कृत्वा दक्षिण हस्तेन इडां "प्रजापतयेत्वा ग्रहं गृह्णामि०"[4] इति मन्त्रेण अभिमृशेत् ।

---

(१) अथ हविर्षा इन्द्राग्नीरोचनादिवः श्नथद्वृत्रम् इत्यैन्द्राग्न्यस्य बौ० श्रौ० ३।१२, इन्द्राग्नीरोचनादिवः०, श्नथद्वृत्रम्० तै० सं० ४,२,११ ।

(२) विश्वेदेवाः, विश्वेदेवाः इति वैश्वदेवस्य । बौ० श्रौ० ३।१२ । विश्वेदेवाऋतावृध० । विश्वेदेवाः शृणुत० तै० सं० २।४।१४५ ।

(३) द्यावानः पृथिवी, प्रपूर्वजेपितरा इति द्यावापृथिव्यस्य बौ० श्रौ० ३।१२ । द्यावानः पृथिवी० । प्रपूर्वजेपितरा० ।तै०सं०४,१,११

(४) प्रजापतयेत्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसेमह्यमन्नाद्याय, आ० श्रौ० अ० २ सं० ६,६ ।

इडाभक्षणम्[1] -

पश्चात् इडाभक्षणं भक्षणान्ते आचमनं, ततः "अमोसि प्राणतद्दतं ब्रवीमि०[2]" इति सूक्तमन्त्रेण नाभेः अभिमर्शनं कुर्यात् ।

दक्षिणा[3] -

अन्वाहार्य ओदनः, प्रथमजो वत्सो वासश्च दक्षिणाः । शेषं पौर्णमासवत् ।

अत्राह बौधायनः -

बौधायनमतेन आग्रयणेष्टेः स्वरूपं आश्वलायनवदेव । विशेषस्त्वित्थम् - "तस्य प्रज्ञातउपब्दथः[4]" इति अतिरिक्तं सूक्तम्, तेन

---

(१) भक्षान्नः श्रेयः समनैष्ट देवास्त्वयावशेन समशीमहित्वा । सनोमयो भूः पितवा विशेह शं नो भवद्विपदेशं चतुष्पद इति प्राश्याऽऽचम्य । आ० श्रौ० अ० २ खं० ६, सू० १० ।
(२) नाभिमालभेतामोऽसि प्राणतद्दतं ब्रवीम्यमासि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमाम एधि मामृधाम इन्द्रेति । आ० श्रौ० २।६।१० ।
(३) अन्वाहार्यमासाद्यवासो ददाति । बौ० श्रौ० ३।१२ ।
अन्वाहार्यमासाद्य प्रथमजं वत्सं ददाति । बौ० श्रौ० ३।१२ ।
(४) बौ० श्रौ० ३।१२ ।

सोपवसथ पक्षाग्रयणे - चतुर्दश्यामुपवास:, पञ्चदश्यां याग: । अथ च सोपवसुथ्येहनि अन्त्यन्वाधानादि वेदकरणान्तं कर्म सम्पादयेत् । पौर्णमास्यां प्रातहुते अग्निहोत्रे अप: प्रणयनादि शेषं इष्टि कर्म सम्पादयेत्[१] ।

आग्रयण प्रायश्चित्तम् - [१]अनिSSग्रयणेन नवान्नं जग्ध्वा -[२]

---

अनाचरितेन आग्रयणेन नवान्नभक्षणं कृते चेत्तर्हि वैश्वानरदेवताकं द्वादशकपालं पुरोडाशं निर्वपेत् ।

[१]षण्मासान् - - - - - - - - अनिष्ट्वाSSग्रयणे[३]: -

---

षण्मासपर्यन्तमनाचरितेन आग्रणेन नवान्नभक्षणं भवति चेत् तर्हि (१) अग्नये पथिकृते । (२) अग्नयेतन्तुमते । (३) अग्नयेवैश्वानराय । (४) अग्नयेव्रतपतय इति चत्वार: पुरोडाशान्निर्वपेत् ।

---

(१) अथ प्रातहुतेSग्निहोत्रे पृष्ट्यां स्तीर्त्वा अप: प्रणीय । बौ० श्रौ० ३।१२ ।

(२) वैश्वानरं द्वादशकपालं निर्वपेदनिष्ट्वाSSग्रयणेननवान्नं जग्ध्वा । बौ० श्रौ० १३।४३ ।
य आहिताग्निराग्रयणेनाSनिष्ट्वा नवान्नं प्राश्नीयात्० सोSग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपेत । ऐ० ब्रा० ७।६ ।

(३) अथ षण्मासानहुतेSग्निहोत्रे - - - - - - - - - - - पशुबन्धेन च । बौ० श्रौ० २८।१२ ।

संवत्सरम् - - - - - - - - - - - अनिष्ट्वाऽऽग्रयणेन[1] : -

अत्र (१) अग्नये पवमानाय । (२) अग्नये पावकाय । (३) अग्नये शुचये । (४) अग्नये पथिकृते । (५) अग्नये तन्तुमते । (६) अग्नये वैश्वानराय । (७) अग्नयेव्रतपतय इति । आग्रयणं समाप्तम् ।

अ
अअअ
अअअअअ
अअअअअअअ
अअअअअअअअअ
अअअअअअअअअअअ
अअअअअअअअअअअअअ
अअअअअअअअअअअ
अअअअअअअअअ
अअअअअअअ
अअअअअ
अअअ
अ

---

(१) अथ संवत्सरमहुतेऽग्निहोत्रे - - - - - - - - - - - - पशुबन्धेन च । बौ० श्रौ० २८।१२ ।

योग संख्या.... .... .... ....  दिनांक.... .... .... .... .... ....

# पशुबन्ध विहारः

## [बौधायनश्रौतसूत्रानुसारेण]

पशुबन्ध विहारः







१- गार्हपत्यः
२- अन्वाहार्यपचनः
३- आहवनीयः
४- वेदिः
५- पाशुबन्धिकीवेदिः
६- उत्तरवेदिः
७- चात्वालः
८- उत्करः
९- यूपावटः
१०- उत्तरनाभिः

(स्केल- १ इंचः ४० अंगुलानि)

निरूढपशुबन्धः -

निरूढपशुबन्धयाग सम्बन्धिनो मन्त्रास्तद्विधायकं ब्राह्मणं च कृष्णयजुर्वेदे पृथक्त्वेन नोपलभ्यते । शुक्लयजुर्वेदेपि एतद्विषयका मन्त्राः न विद्यन्ते । शतपथब्राह्मणस्य ११ ( एकादश ) काण्डे निरूढपशुबन्धस्य कियांश्चिद्विधिः प्रतिपादितः । सोऽत्रोद्ध्रियते । तैत्तिरीयब्राह्मणे तैत्तिरीयसंहितायां च पठिताः पाशुकहौत्रमन्त्राः अत्र संगृह्यन्ते । आश्वलायनशाङ्खायनाभ्यां पशुहौत्रे विनियोजिता ऋग्वेदीया ऋचोऽप्यत्रैव विनिवेश्यन्ते । पशुयागविषयकावशिष्टामन्त्राः ब्राह्मणं च अग्निष्टोमप्रकरणे द्रष्टव्यम् । ब्राह्मणोक्तानि पशुप्रायश्चित्तानि अपि तत्रैव द्रष्टव्यानि । अग्निष्टोमयागे सवनीय दिनात् पूर्वस्मिन्नहनियोऽग्नीषोमीय पशुयागो विधीयते स निरूढपशुबन्धप्रकृतिकः । तमनुसृत्य निरूढपशुबन्धस्य निखिलः प्रयोगः आश्वलायन बौधायनसूत्राभ्यामुपवर्णितः ।

पशुः -

पशुर्नित्यः काम्यश्च । तत्र नित्यः षट्सुषट्सु मासेषु यावज्जीवं प्रयोज्यः ।

काम्यपशवः -

बौधायनश्रौतसूत्रे कामनाभेदेन बहूनां काम्यानां पशूनामनुष्ठान-

मुक्तम् । निरूढपशुबन्धस्य प्रकृतिभूते पशोरनुष्ठानतन्त्रे येविधयः उक्ताः ते सर्वे अत्र अनुष्ठेयाः भवन्ति । निरूढसंज्ञक प्रकृतिभूत पशुयागे 'ऐन्द्राग्नः पशुः' सर्वत्र अनुष्ठेयो भवति । काम्यपशुतन्त्रे कामनाभेदेन वायव्यं, प्राजापत्यं, सौम्यं, मारुतं, ब्राह्मणस्पत्यादयश्च पशवः आलभेरन् । समस्तमनुष्ठानतन्त्रं निरूढप्रकृतिवदेव भवति । बौधायनश्रौतसूत्रे अस्य मूलं प्रथमतः उच्यते - 'अथातः पशुबन्धं व्याख्यास्यामः सहस्माह बौधायनः सौ म वसथा इष्टि पशुबन्धा इति ।'

निरूढपशुबन्धस्य कालः[1] -

---

माघमासे धनिष्ठानक्षत्रगते सवितरिपशुरनुष्ठेयः । अय च आषाढमासे आश्लेषानक्षत्रस्य उत्तरार्धगते सवितरि पशुरनुष्ठेयः । अय च अयनयोः प्रारम्भदिनेऽनुष्ठेयः ।

ऋत्विजः - पशुतन्त्रे षट्संख्याका ऋत्विजः -

(१) अध्वर्युः । (२) ब्रह्मा । (३) होता ।

(४) प्रतिप्रस्थाता । (५) आग्नीध्रः ।

(६) मैत्रावरुणश्चेति ।

---

(१) लल्लाख्यगौरीश्वरपद्धतिः, पृ० सं० २६ ।

संभारा: -

(१) स्फ्यं । (२) अग्निहोत्रहवणीं । (३) जुहूं । (४) वपाहोमहवनीं । (५) उपभृतं । (६) पृषदाज्यग्रहणीं । (७) स्रुवं । (८) स्वधितिं । (९) ध्रुवां । (१०) प्राशित्र-हरणं, (११) इडां । (१२) वेदं । (१३) आज्यस्थालीं । (१४) श्रविस्थालीं । (१५) अपूर्वाज्यस्थालीं । (१६) योक्त्रं । (१७) वेदाग्रं । (१८) पृष्टिः । (१९) उपवेशः । (२०) हव्यप्रवश्चनं । (२१) अन्वाहार्यस्थालीमिति संभाराः ।

अतिरिक्तसंभाराः[१] -

(१) यूपनिर्माणार्थं चतुरत्निपरिमितं दीर्घं पालाशकाष्ठम् । (२) पैतुद्रववृक्षस्य (देवदारु) परिधयः । (३) गुग्गुलुः । (४) सुगन्धितेजनम् । (५) ऊर्णास्तुका (मेषशृङ्गमध्ये उत्तर प्रादेशात् गृहीतानि शुक्लानि रोमाणि) । (६) मैत्रावरुण दण्डाः (औदुम्बर काष्ठनिर्मितः यजमानमुखसम्मितः । (७) प्लक्ष-शाखां । (८) इक्षुनम् । (९) यवाः । (१०) सक्तवः ।

---

(१) स उपकल्पयते पौतुद्रवान् परिधीन् गुल्गुलु सुगन्धितेजनं शुक्लामूर्णा-स्तुकां ---------------हिरण्यमिति, बौ०श्रौ० ४।२

(११) दधि । (१२) हिरण्यम् । (१३) मुञ्जनिर्मिता त्रिगुणा-रशना त्रिगुणा रशनाच । (१४) कुंभो संज्ञकानि धातुपात्राणि मृन्मयानि वा । द्रव्यम् - अत्र द्रव्यं छागः ।

प्रयोगक्रमः -

प्रथमं पूर्वेद्युः प्रातरग्निहोत्रे हुते बर्हिर्लवनादि ब्राह्मण-तर्पणान्तामाग्नेयोमिष्टिं कुर्यात् ।

षड्ढोतृहोमः -

ततः गार्हपत्ये आज्यं विलाप्य, उत्पूय, स्रुचिचतुर्गृहीतं गृहीत्वा षड्ढोतारं मनसाद्रुत्य, आहवनीये जुहोति । अन्वारब्धे यजमाने आहुतिं दद्यात्[१] ।

सारस्वतहोमः[२] -

ततः पुनर्विहृत्य चतुर्गृहीतेन आज्येन सारस्वता हुतिं दद्यात् ।

---

(१) गार्हपत्य आज्यं विलाप्योत्पूय - - - - - - - - - - - - - - - यजमाने स्वाहेति । सूर्यं ते चक्षुः - - - - पृथिवीं शरीरैः । तै० ब्रा० ३,१-१० । बौ० श्रौ० ४।१ ।

(२) लल्लात्मयमोरेश्वर पद्धतिः, पृ० सं० १ ।

यूपाहुतिप्रकारः[1] -

पुनर्विहृत्य चतुर्गृहीतेन आज्येन 'उरुविष्णो०' मंत्रेण यूपाहुतिं दद्यात् । पुनरपरं चतुर्गृहीतमाज्यं गृहीत्वा स्रुवां आज्यस्थालीं बर्हिर्हिरण्यमुदपात्रादीनादाय सपरशुं तक्षाणमाह्वयते[2] । यूपदेशं गत्वा प्रत्यक् प्रवृं यूपं प्राङ्मुखः 'अत्यन्यानगां०' - - - देवयज्यायै' इति मंत्रेणोपतिष्ठते[3] ।

यूपनिर्माणम् -

आज्यस्थाल्याः स्रुवेणोपहत्य यूपस्य मूलं 'देवस्त्वा सविता मध्वाऽनक्तु' इति मन्त्रेण अनक्ति[4] । ततः यूपमूलं ऊर्ध्वाग्रं औषधे० बर्हिरनुस्रयति[5] ।

---

(१) अपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोति ।
बौ० श्रौ० प्र० ४।१, उरुविष्णो०, तै० सं० १।३।४ ।

(२) अपरं चतुर्गृहीतं - - - - - - - - - - - - - - - - - - - -
सपरशुम् । बौ० श्रौ० ४।१ ।

(३) प्रत्यङ्ङुपनतस्तमुपतिष्ठते । बौ० श्रौ० प्र० ४।१ ।
अत्यन्यानगां० तै० सं० १।३।५ ।

(४) अथैनमाज्येनाऽनक्ति, बौ० श्रौ० ४।१ ।
देवस्त्वा०, तै० सं० १,३,६ ।

(५) ऊर्ध्वाग्रं बर्हिरनुस्रयति, बौ० श्रौ० ४।१ ।

तदुपरि स्वधितिना तिर्यक् छिनत्ति[१]। छेदने यः प्रथमः शकलः परापततति तं यूपावट प्रक्षेपार्थं प्रज्ञातं निदधाति[२]। यूपं छित्वा अप्उपस्पृश्य प्राञ्च-मुदञ्चं वा पतन्तमनुमन्त्रयते[३]। आव्रश्चने हिरण्यं निधाय, परिस्तीर्य, परिषिच्य, पूर्वाहूतेन चतुर्गृहीतेन आज्येन जुहोति। ततः आत्मनो हृदय-मभिमृशति[४]। ततः यूपकाष्ठमूलादारभ्य अग्रादन्वग्रं शाखाश्छेदयति चषाल-स्थापनार्थं यूपकाष्ठं चतुरङ्गुलाधिकमग्रतः छिनत्ति। छिन्नशिषस्य मूले चतुरङ्गुलमात्रं चषालं छित्वा, सुषिरं कृत्वा यूपाग्रे चतुरङ्गुलं संतक्ष्य तस्मिन् चषालं प्रवेशयति। यूपस्य मूलप्रदेशे अरत्निमात्रं त्यक्त्वा, अवशिष्टं यूपकाष्ठं अष्टाश्रितदीत। स्वरुनिर्माणार्थं अधिमन्थनार्थं च त्रीणि शकलानि स्थापयेत्। एवं यूपसंस्कारान् कृत्वा वेदिमानं कुर्यात्[५]। एवं कर्म-कृत्वा यजमानः अपरेद्युः प्रातरग्निहोत्रे हुते देवतासङ्कल्पं करोति। ततः

---

(१) स्वधितिना तिर्यञ्चं प्रहरति स्वधितेमैनं हिंसीः इति
बौ० श्रौ० ४।१ ।

(२) यः प्रथमः शकलः परापततितं ज्ञातं निदधाति।
बौ० श्रौ० ४।१ ।

(३) तमपरिभिन्दन्ननदासङ्गं वृश्चति। बौ० श्रौ० ४।१ ।
दिवमग्रेणमालेखी० तै० सं० १,३,५ ।

(४) अथाऽऽव्रश्चने हिरण्यं निधाय - - - - - - - आत्मानं प्रत्यभिमृशते। बौ० श्रौ० ४।१ । वनस्पते० सहस्रवल्शाः तै० सं० १,३,५ ।

(५) अन्वग्रं शाखाः प्रसूदयति - - पुरस्तात्तिरश्चो, बौ०श्रौ० ४।१ ।

आधानवत् अन्वारम्भणीयेष्टिं कुर्यात् । ततः अरण्योः अग्नीन् समारोप्य याग प्रदेशं नयेत् । तत्र अग्निमन्थनं कृत्वा अग्नीन् विहृत्य परिस्तरणादि कुर्यात् ।

स्फ्यमग्निहोत्रहवण्यादि अन्वाहार्य स्थाल्यन्तानि पात्रासादनं कृत्वा अग्निहोत्रहवणीं गृहीत्वा प्रोक्षणीः संस्कृत्य आज्यनिर्वापः । निरुप्तमाज्यमधिश्रित्य तस्य पर्यग्निकरणम् ।

पाशुकवेदिसंस्कारः -

वेदेन पाशुकीं वेदिं सम्मार्ष्टि । जघनेन वेदीं तिष्ठन् स्फ्यादानादि अग्नीधितस्त्रिर्हरेदित्यन्तं प्रकृतिवत् कुर्यात्[1] । ततः स्फ्यमुदपात्रं बर्हिः शम्यामित्येतत् समादाय - "एहि यजमान" इत्यध्वर्युणा प्रेषितः पत्नीभ्यां सह यजमानः चात्वालदेशं गत्वा, चात्वाले उदगपवर्गं प्रागपवर्गं संस्कारान् कुर्यात्[2] । चात्वालदेशात् स्फ्येन मृदमुद्धृत्य आग्नीध्रः उत्तरवेद्यां त्रिवारं निर्वपति । पाशुकीमुत्तरवेदीं शम्ययामोत्वा मध्ये प्रादेशमात्रीं चतुरस्रां चतुरंगुलोच्छ्रायां नाभिं कृत्वा दर्भैः प्रच्छादयति ।

---

(१) आग्नीध्रस्त्रिर्हरति यदाग्नीध्रस्त्रिर्हरत्यथ यावति ।
बौ० श्रौ० ४,२ ।

(२) स्फ्यमुदपात्रं बर्हिः - - - - - - - - - - - - -
बौ० श्रौ० ४।२ ।

यूपस्थापनार्थं गर्तकरणमग्निप्रणयनं च -

---

आग्नीध्रः यूपस्थापनार्थं अवटं करोति[1] । तत् काले एव प्रतिप्रस्थाता अग्निप्रणयनार्थं आहवनीये इध्मं प्रक्षिप्य अग्निं प्रज्वालयति[2] । आग्नीध्रः चात्वालमृदा पूरितां पात्रीं अग्न्युद्धरणार्थं अग्निसमीपे स्थापयति[3] । अन्यः पूर्वसंस्कृतं पञ्च गृहीतमाज्यं परिधीन्, सुगन्धितेजनं, मेषरोमाणि हस्ते गृहीत्वा अग्निप्रणयनार्थं सज्जो भवति । अध्वर्युः "अग्नये प्रणीयमानायानुब्रूहि[4]" इति प्रैषेदत्ते होता अग्निप्रणयनमन्त्रान् पठति । पश्चादध्वर्युः वेदिं प्रोक्षति[5], ततः वेदिमाज्येन व्याघारयति[6] ।

---

(१) तया यूपावटं परिलिखति - - - - - - - - - - -
तं स खनति वा खानयतिवा । बौ० श्रौ० ४।२ ।

(२) यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाताग्न्यादधातीध्मं प्रणयनीयमुपोपयमनीः कल्पयन्ति चात्वालादात्मनेन्द्र घोषवतीः प्रोक्षणीरध्वर्युरादत्ते । बौ० श्रौ० ४।२ ।

(३) परिकर्मिणे पञ्चगृहीतमाज्यं प्रयच्छति ब्रह्मणि संभारान् भवन्ति, बौ० श्रौ० ४।२ ।

(४) बौ० श्रौ० ४।२ । प्रदेवं देव्याधिया० तै० सं० ३।५।११ ।

(५) अथाध्वर्युरिन्द्र घोषवतीभिः प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति इन्द्रघोषस्त्वा - - - - - - - - - - - - - - - - -
त्वादित्यैरुत्तरतः पात्वित्युत्तरतः, बौ० श्रौ० ४।२-३ ।

(६) अथैनां हिरण्यमन्तर्धायाक्ष्णया पञ्चगृहीतेन व्याघारयति । सि होरसि०, बौ० श्रौ० ४।३ ।

देवदारवान् परिधीन् परिदधाति[1] । नामौ गुग्गुलु सुगन्धितेजनं, शुक्लामूर्णा-स्तुकान्वीरणाभ्यां निवपति[2] । पुन: आधारशेषेण आधारणं कृत्वा प्रदक्षिणमावृत्य अग्निं गृहीत्वा, उत्तरवेदे: पुरस्तात् प्रत्यङ्मुखो संभारेषु अग्निं प्रतिष्ठापयति[3] । पश्चात् इध्मं विस्रस्य, अग्निं परिसमुह्य पर्युक्ष्य, परिस्तीर्य, संस्कृतेनाज्येन यजमानान्वारब्ध: सकृत् ग्राहं जुहोति । तेनैव आज्येन यजमानो जुहोति ।

मन्त्रा: -

(१) अग्निं यज्ञं नयतु० । (२) वायुर्यज्ञं नयतु० ।

(३) सूर्यो यज्ञं नयतु० । (४) आदित्योमुदिता-मुयिष्ठानां० ।

यजमानपठनमन्त्रा: -

(१) अग्निरन्नादोन्नपति:० । (२) वायु: प्राणदा: प्राण-

---

(१) पौतुद्रवान् परिधीन् परिदधाति । "विश्वायुरसि०" । बौ० श्रौ० ४।३, तै० सं० १,२,१२ ।

(२) अथातिशिष्टान् संभारान् निवपति गुग्गुलुसुगन्धितेजनं० बौ० श्रौ० ४।३ ।

(३) अथैनान् सं प्राज्येनाभिधारयति अथ प्रदक्षिणमावृत्याग्निं प्रतिष्ठापयति । बौ० श्रौ० ४।३ ।

स्येश० । (३) आदित्योपूरिदामुपिष्ठानां० । एता: आहुती: दत्त्वा[1], ततः ब्रह्मावेदे दक्षिणतः उपविशति । तस्य पश्चात् यजमानः स्वासने उपविशति । अस्मिन्निरूढ पशुबन्धे दार्शिकीवेदि: केवलं हविरासादनार्था, पाशुकीतु अग्निहविर्धारणार्था, महावेदिस्तु सर्वार्था, तस्मात् दार्शिक-पाशुको वेद्योर्बहि: यजमानकृत्विजश्चोपविशन्ति ।

उत्तरपरिग्रहौम: -
-------------

प्रोक्षणीरासादयेध्माबर्हिरुपसादयस्रुवं स्वधितिं स्रुचश्च सम्मृड्ढि तूष्णीं पृषदाज्य ग्रहणीं पत्नीं संनह्याज्येन च दध्ना चो देहि[2] । ततः प्रैषानन्तरं प्रोक्षण्यारासादनादि प्रकृतिवत् कुर्यात् । तथा च शालामुखीये सम्मार्जनीं प्रतितप्य, स्रुववत् स्वधितेः, जुहूवत् वसाहोम हवण्याः, उपभृद्वत् पृषदाज्यग्रहण्याः सम्मार्ज्यः । उपभृती पृषदाज्यं चतुर्गृहीतमुपस्तृणोति ।

पृषदाज्यग्रहणमन्त्रा: -
----------------

(१) महीनां पयोसि । (२) विश्वेषां देवानां तनुः ।

---

(१) अथैनं विप्रस्याहुतिषाहं कृत्वाध्वराहुतिभिरभिजुहोति - - - - - - - - - - - - - - - ददातु स्वाहेति, बौ०श्रौ० ४।३ ।

(२) अथ संप्रैषमाह प्रोक्षणीरासादेध्मा० - - - - - - - - - - - - - - - - - - - दध्ना चो देहि, बौ०श्रौ० ४।३ ।

ततः बर्हिंषि अन्तर्धाय दध्यानयति । बर्हिंषि अपोद्धृत्य अभिघारयति ।
ततः पुनः उपभृतो - (३) विष्णोर्हृदयमसो । (४) एकस्मिन विष्णु-
स्त्वानुविक्रम इति[1] ।

हविरासादनेविशेषः[2] -

ततः अध्वर्युः पञ्चविधं बर्हिस्तीर्त्वा, काष्मर्यमयान् परिधीन् परिधाय, विधृत्योराश्ववालं प्रस्तरं निधायोपभृदनन्तरं पृषदाज्यग्रहणी-मासाद्य - ध्रुवामासादयेत्, इति पशुबन्धे विशेषः । आज्यस्थालीं, ध्रुवं स्वधितिं चाग्रेण स्रुचौ नीत्वा दक्षिणेन जुहूं प्रस्तरे सादयति । आसादि-तानामभिमन्त्रणं प्रकृतिवत् कुर्यात् ।

यूपसंस्कारः -

यूप संस्कारार्थं अध्वर्युः प्रदक्षिणमावृत्य, प्रत्यङ्ङाद्धृत्य, तूष्णीं संस्कृता यवमतीः प्रोक्षणीः बर्हिर्मुष्टिं, सध्रुवामाज्यस्थालीं, स्वरुं, रशने, मैत्रावरुणदण्डं, प्रथमपतितं यूपशकलं, हिरण्यमुपपात्रं चादायोत्तर वेदि

---

(१) आहृतासु प्रोक्षणीष्वुदस्यस्रुचं मार्जयित्वेध्मा० - - - - - -
- - - - विष्णुस्त्वानुविक्रम इति द्वितीयम्० ।बौ०श्रौ०४।३ ।
(२) पञ्चविधं बर्हिस्तीर्त्वा - - - - - - - - - - - - - - -
प्रस्तरेजुहूं, बौ० श्रौ० ४।४ ।

समीपे निधाय,[1] "यचेशिवव: परावधि०" इति मन्त्रपठनपूर्वकमुदपात्रोदकेन यूपं प्रक्षालयति।[2] प्रक्षालनानन्तरं अध्वर्युः चात्वालोत्करावन्तरेण प्रपाद्य यूपावटस्य पुरस्तात् - चषालयुक्तं यूपं प्रागग्रं शाययित्वा, उपरवेद्यामुत्तरतस्तिष्ठन् "पृथिव्यैत्वान्तरिक्षायत्वादिवेत्वेति०" इति मन्त्रेण मूलादारभ्य अग्रपर्यन्तं यवमतीप्रोक्षणीभिर्जलेन सकृदेव प्रोक्षति।[3] "शुन्धन्तां लोकाः पितृषदनाः" इति मन्त्रेण यूपावटे अपो निनयति।[4] "यवोऽसि यवया०" इति मन्त्रेण अवटे यवः प्रक्षेपः कुर्यात्।[5] ततः अध्वर्युः प्राचीनावीति भूत्वा, बर्हिर्मुष्टिं द्वेधाविभज्य अर्द्धं प्रागग्रं अर्द्धं दक्षिणाग्रं कृत्वा "पितृणां सदनमसी"ति मन्त्रेण तयोर्मध्यमवटस्य मध्ये निदधाति।[6] ततः अवटे हिरण्यं निधाय, तस्योपरि "पितृभ्यः स्वाहे"ति मन्त्रेण स्रुवाहुतिं जुहोति।[7] अत्र यजमानः प्राचीनावीति भूत्वा पितृभ्य इदं नममेति त्यागं कुर्यात्। ततः उभौ यज्ञोपवीतिनौ भवतः। अध्वर्युः "स्वावेशोस्ये"ति मन्त्रेण

---

(१) प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य यावति - - हिरण्यमुदपात्रमिति
बौ० श्रौ० ४।४ ।

(२) एतत् संनिधाय यूपं प्रक्षालयति यचे शिवव: - - - - - - - -
शुन्धतोरिति, बौ० श्रौ० ४,४ ।

(३) यूपस्य प्रक्षालितः प्रपन्नः - - - - - - - - प्रोक्षति पृथिव्यै-
त्वान्तरिक्षाय त्वा दिवेत्वेति। बौ०श्रौ० ४।४ । तै०सं० १।३।६।

(४) अवटेऽपो ऽवनयति शुन्धतां लोकाः पितृषदन इति।
तै० सं० १।३।६ । बौ० श्रौ० ४।४ ।

अग्रिमपृष्ठेऽपि--------

प्रथम पतितं यूपशकलं अवटे प्रक्षिपति[८]। तामेव आज्यस्थालीं, स्त्रुवां, स्वरुं, यूपरशनां, मैत्रावरुणदण्डं, उदपात्रञ्चादाय यजमानं प्रेषयति, - "एहि यजमान[९]" इति। अध्वर्युः अग्रेण यूपं परीत्य दक्षिणत उदङ्मुख-स्तिष्ठति। यजमानः यूपस्यावटस्य मध्येनोत्तरतो गत्वाऽग्रेण यूपं परीत्याध्वर्योर्यूपस्य च मध्येन पश्चात् गत्वोदङ्मुखस्तिष्ठति। पत्नी-चाध्वर्योरुत्तरतो यजमानस्य दक्षिणतः पश्चात् गत्वोदङ्मुखीतिष्ठ-त्युपरश्मीपे[२]। अध्वर्युः यूपात् चषालमुन्मुच्य, आज्येन यूपाग्रं "देवस्त्वा सविता मध्वानक्तु" इति मन्त्रेण स्त्रुवेणानक्ति। चषालमन्तरतवाह्य-तश्च स्वभ्यक्तं कृत्वा, "सुपिप्पलास्त्वौषधीभ्यः" इति मन्त्रेण यूपाग्रे

---

पूर्वपृष्ठस्याग्रे-----------

(५) यवान् प्रस्कन्दयति यवोऽसियवया० । बौ० श्रौ० ४।४ ।
तै० सं० १।३।६ ।

(६) बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृणां सदनमसीति,
बौ० श्रौ० ४।४, तै० सं० १,३,६ ।

(७) अवनद्धिरण्यमन्तर्धाय ---------------
पितृभ्यः स्वाहेति, बौ० श्रौ० ४।४ ।

(८) यूपशकलमवास्यति स्वावेशो० । बौ० श्रौ० ४।४ ।
तै० सं० १।३।६ ।

(९) अथा दत्त आज्यस्थालीं ------------
एहि यजमानेति, बौ० श्रौ० ४।४ ।

(२) अन्वञ्यजमानोऽन्वोपत्न्यग्रेण --------
यजमानोऽपरापत्नी, बौ० श्रौ० ४।४ ।

प्रतिमुञ्चति[1] ।

यूपाञ्जनम् -

ततः अध्वर्युः तक्षणकाले चिन्हितामग्निष्ठामश्रिं स्रुवेणा-
भिधारयन्नाह[2] ।

अन्जनप्रभृतिस्वरुअवगूहनान्तं पत्नीयजमानौ यूपं नोत्सृजेताम् ।
अध्वर्युः यूपस्योपरि आज्यमानयति । यजमानस्तेनाज्येन यूपं उपरिवर्जं
सर्वतः समनक्ति । पत्न्युपरिभागमनक्ति । यूपाञ्जनसंस्कारे अध्वर्युः होतारं
प्रेष्यति - 'यूपायाज्यमानायानुब्रूहि' ततो होता 'अञ्जन्तित्वामध्वरे
देवयन्तेति'[3] मन्त्रान पठति ।

यूपोच्छ्रयणम् -

अध्वर्युः अवटात् बहिर्यूपमुच्छ्रयन्नाह - 'उच्छ्रीयमाणायानुब्रूहि'

---

(१) अथप्रवृह्य चषालं यूपस्याग्रमनक्ति देवस्त्वा - - - - - - -
- - - - - - - - - - चषालं प्रतिमुञ्चति सुपिप्पला० ।
बौ० श्रौ० ४।४, तै० सं० १।३।६ ।

(२) अथ स्रुवेणाग्निष्ठामश्रिमभिधारयन्नाह यूपायाऽऽज्यमानायाऽनु-
ब्रूहि । आन्तमनक्ति - - - - - - - - - - - - - - - - -
सर्वतः परिमृशति, बौ० श्रौ० ४।४ ।

(३) ऋ० सं० ३।८।१, तै० ब्रा० ३।६।१ ।

स्रुचि यजमानेन सह यूपमुच्छ्रयति[1]। होता - "उच्छ्रयस्व वनस्पते०"[2] इति मन्त्रं पठति। अध्वर्युः "उद्दिवं स्तभानान्तरिक्षं०"[3] इति मन्त्रेण यूपमवटे प्रवेशयति। अवटे यूपनिधानसमये अग्निष्ठामश्रिं आहवनीयाभिमुखीं करोति। स्थिरीकृते यूपे यूपाग्रेस्थापितचषालं यजमानं "तद्विष्णोः परमं पदं०" इति मन्त्रेण अवेक्षते[4]। यजमानरध्वर्युश्च यूपदृढीकरणार्थं अवटप्रदक्षिणमृदं "ब्रह्मवनिंत्वा०"[5] इति मन्त्रेण प्रवेशयति। ततो मैत्रावरुणदण्डेन मृदं "ब्रह्मदृंह क्षत्रदृंह०[6] इ०" इति मन्त्रपाठपूर्वकं दृढीकरोति।

यूपपरिव्ययणम्[7] -
-------------

अध्वर्युः यूपरशनामादाय त्रिःसम्मृज्य मध्यमेन गुणेन यूपं नाभि-

---

(१) उच्छ्रयन्नाहोच्छ्रीयमाणायानुब्रूहि । बौ० श्रौ० ४.४

(२) ऋ० सं० मं० ३।८।३ । तै० ब्रा० ३।६।१ ।

(३) उच्छ्रयत्युद्दिवं स्तभानान्० । बौ० श्रौ० ४।४ ।

(४) अथैनं विष्णोर्व्यामृग्भ्यां कल्पयति, बौ० श्रौ० ४।४,
स यत्राग्निष्ठामश्रिमाहवनीयेन संपादयति तद्ध्रुवस्य चषालं
परीक्षयति तद्विष्णो० । बौ० श्रौ० ४।४ ।

(५) अथैनं प्रदक्षिणं पुरीषेण पर्यूहति "ब्रह्मवनिंत्वा०" ।
तै० सं० १।३।६ । बौ० श्रौ० ४।४ ।

(६) मैत्रावरुणदण्डेन सं हन्ति ब्रह्मदृंह - इ०, बौ० श्रौ० ४।४ ।
तै० सं० १।३।६ ।

(७) अथैतां त्रिगुणां रशनां त्रिःसंमृज्य - - - - - - - यजमानं
मनुष्या इति, परिवीरसि० तै० सं० १।३।६ । बौ०श्रौ०४।४ ।

दक्षे त्रिः प्रदक्षिणं परिव्ययन् "परिवीयमाणायानुब्रूहि" इति होतारं प्रैषं दत्त्वा रशनां "परिवीरसि०" इति मन्त्रेण परिव्ययति । "ऊर्ध्व-ऊ षुणऊतये०"[1] इति मन्त्रद्वयं पठति ।

यूपरशनाबन्धे यूपसमीपमारम्य परं संलग्नं कृत्वा अन्तं प्रवेष्ट्य कुशलक्रियया ग्रन्थिं कृत्वा, रशनाग्रं निभिन्नरशनामूलं प्रवेश्य अग्निष्ठाभ्यां मध्यमं रशनागुणं निभिन्न तत्र च स्वरुकाष्ठं "अन्तरिक्षस्त्वेति मन्त्रेण प्रवेशयति[2] । होता "पुनन्तिधीराअपसोमनीषा०"[3] इति परिव्ययण मन्त्रशेषान् पठति । सर्वे यूपमुत्सृजन्ति[4] । ततो अध्वर्युः पशुं यूपस्य पुरस्तान्नीत्वा प्रत्यङ्०मुखं पशुं यः कश्चिद्दास्यति[5] ।

पशोरुपाकरणम् -
----------------

अध्वर्युर्यजमानमवेक्ष्य बर्हिषि आदाय ऐन्द्राग्नं पशुमुपाकरिष्ये इति सङ्०कल्प्य, यजमानः "उपाकुरु इति प्रतिवचनं ददाति । ततः पशोः

---

(१) ऋ० सं० १।३६।१३-१४ । तै० ब्रा० ३।६।१ ।

(२) उपान्ते व्यतिषजत्यान्तं प्रवेष्टयत्यणिमति स्थविमत्प्रवयत्यधोत्तरेणाग्निष्ठामश्रिं मध्यमे गुणे स्वरुमव गूहत्यन्तरिक्षस्य त्वा-सानाववगूहामि । बौ०श्रौ० ४।४ । तै० सं० १।३।६ ।

(३) ऋ० सं० ३।८।५ । तै० ब्रा० ३।६।१ ।

(४) स्वर्वन्तं यूपमुत्सृजति । बौ० श्रौ० ४।४ ।

(५) अथैनं पशुं - - - - - - - - - - - - - - - - -
प्रत्यङ्०मुखमुपस्थापयति, बौ० श्रौ० ४।५ ।

शृङ्गयोर्मध्ये - बर्हिर्भ्यामन्वारभ्य 'इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमि'

इति प्रतिज्ञां कृत्वा 'उपवीरस्युपो देवान्॰'[1] इति मन्त्रेण उपाकरणं

[1] करोति । बर्हिषि अन्यैः असंसृष्टे निधाय, - अध्वर्युः पूर्वपरिगृहीत

शकलत्रये एकमधिमन्थनशकलं प्रागायतं उत्तरवेदिसमीपे 'अग्नेर्जनित्रमसि॰'[2]

इति मन्त्रेण निदधाति । तस्य पार्श्वयोः प्रागायतौ शकलद्वयं हस्ताभ्यां

युगपदेव वृषणावन्वञ्चौ 'वृषणौस्थः'[3] इति मन्त्रेण निदधाति ।

अग्निमन्थनम् -

---

दक्षिणहस्तेन उत्तराऽरणिं सव्य हस्तेन अधरा अरणिमुपादत्ते 'उर्वश्यस्यायुरसि॰'[4] इति मन्त्रेण । अरणी अपूर्वाज्यस्थाल्यां घृतेन 'घृतेनाक्ते वृषणं दधाथाम्॰'[5] इति मन्त्रेण समनक्ति । ततः अधिमन्थन शकले अरणी निधाय अध्वर्युः यजमानं वाचयति[6] ।

---

(१) तमिषेत्वेति बर्हिषी आदायोपा करोत्युपवीरस्युपोजुष्टमुपाकरोमीति । बौ० श्रौ० ४।५ । तै० सं० १।३।७ ।

(२) प्रज्ञातेबर्हिषि निधायाऽधिमन्थनं शकलं निदधात्यग्नेर्जनित्रमसीति । अग्नेर्जनित्रमसि॰ । तै० सं० १।३।७ । बौ० श्रौ० ४।५ ।

(३) वृषणावन्वञ्चौवृषणौस्थः । बौ० श्रौ० ४।५। तै० सं० १।३।७ ।

(४) अथाऽरणीआदत्तउर्वश्यस्यायुरसिपुरूरवा इति, बौ० श्रौ० ४।५ । तै० सं० १।३।७ ।

(५) अथैने आज्यस्थाल्यां समनक्ति घृतेनाक्ते वृषणं दधाथामिति । बौ० श्रौ० ४।५, घृतेनाक्ते॰, तै० सं० १।३।७ ।

(६) प्रज्ञातोवाचयति । बौ० श्रौ० ४।५ ।

वाचनमन्त्र: -

गायत्रं छन्दोनुप्रायस्वेति[1] । तत: अध्वर्यु: अग्निमन्थनार्थं होतारं प्रेष्यति[2] । अग्निमन्थनविधि: आधानविधौ उक्त: ।

यूपे पशुनियोजनम् -

अग्निमन्थनविधिं सम्पाद्य तमग्निमुत्तरवेद्यां प्रहृत्य अध्वर्यु: "देवस्यत्वे[3]"ति मन्त्रेण द्विगुणां रशनां आदाय, तया पशुं अक्ष्णया शिरसि बध्नाति[4] । द्वि गुणायास्त्रिगुणायाश्च अन्तौ एकीकृत्य बध्नाति[5] । पश्चात्तूष्णीं संस्कृताभिरद्भि: पशुं प्रोक्षति[6] । तत: पात्रान्तरे जलमानीय पशुं पाययति[7] । पुनरद्भि: पशुमुपरि प्रोक्ष्य, अधस्तादुपोक्षति[8] प्रोक्षणसमये अध्वर्यु: "कृतस्यत्वा देवहवि:" इत्यारभ्य "स्वात्तं चित्सदेवं हव्य"मित्यन्तान् मन्त्रान् पठेत[9] । पश्चात् होतासामिधेनीमन्त्रपाठ: करोति ।

---

(१) बौ० श्रौ० ४।५ । गायत्रं छन्दो० तै० सं० १।३।७ ।
(२) अथाहाग्नयेमथ्यमानायानुब्रूहि । बौ० श्रौ० ४।५ ।
(३) अथरशनामादत्ते देवस्यत्वा - - - - - - - - - - - - -
हस्ताभ्यामाददे इति । बौ० श्रौ० ४।५ ।
(४) तयाक्ष्णयापशुमभि दधाति । बौ० श्रौ० ४।५ ।
(५) द्विगुणायै च त्रिगुणायै चान्तौ संदधाति । बौ० श्रौ० ४।५ ।
(६) अथैनमद्भि: प्रोक्षति । बौ० श्रौ० ४।५ ।

अग्निमपृष्ठेऽपि --------

अत्र सप्तदशसामिधेन्यः भवति ।

पशुसंस्काराः -

"अग्नयेसमिध्यमानायानुब्रूहि"[10] इत्यादि प्रैष्यं आघारमाघा-
यन्तिं कृत्वा, अध्वर्युः उदङ्गत्य आक्रम्य, जौहवेनाज्येन यूपस्थं पशुं
ललाटे "सन्ते प्राण०"[11] इति मन्त्रेण समनक्ति । "संयजत्रैरङ्गानि"
इति मन्त्रेण ककुदि, "संयज्ञपति"[2]रिति मन्त्रेण दक्षिणस्यां श्रोण्याम् ।
ततः ध्रुवां समज्य यथायतनं सादयित्वा प्रवरं प्रवृणीते[3] । होतुः प्रवरणा-

---

पूर्वपृष्ठस्याग्रे---------

(७) पाययति, बौ० श्रौ० ४।५ ।
(८) उपरिष्टात्प्रोक्षआऽवस्ता दुपोक्षति । बौ० श्रौ० ४।५ ।
(९) बौ० श्रौ० ४।५ । कृतस्यत्वा० तै० सं० १।३।८ ।
सप्तदशसामिधेनोषुपायुषे पृथुपाजा०, तै० ब्रा० ३।६।१-४ ।
(१०) अथेध्मात्समिधमाददान ---------------
आघारमाघारयति, बौ० श्रौ० ४।६ ।
(११) अथास्य स्पर्शयन् स्रुचावुदङ्०ह०त्याक्रम्य जुह्वापशुं समनक्तिसन्ते-
प्राणो वायुना गच्छतामिति ललाटे । बौ० श्रौ० ४।६ ।
सन्तेप्राणो० तै० सं० १।३।८ ।
(१) संयजत्रैरङ्गानीति ककुदि ।
(२) संयज्ञपतिराशिषा इति दक्षिणस्यां श्रोण्याम् ।
बौ० श्रौ० ४।६ । तै० सं० १।३।८ ।
(३) अथ यथायतनं स्रुचौ सादयित्वा प्रवरं प्रवृणीते, बौ०श्रौ० ४।६ ।

नन्तरं आश्राव्यन् नत्या श्रावयिते असौ मानुषः इति मैत्रावरुणस्य नाम गृह्णाति[1] ।

प्रयाजयागः[2] -

---

घृतवतीशब्देन जुहूपभृतावादाय, अत्याक्रम्य, आश्राव्य समिद्भ्यः प्रेष्येति । प्रयाजयागे चतुर्थाष्टम्योः - समानमानः अष्टमे सर्वं समानयते[3] । स्वाहाकृतीभ्यः संस्रावं परिशिनष्टि[4] । अध्वर्युः दश-प्रयाजानिष्ट्वा उदङ्ङत्याक्रम्य स्वरुं, स्वधितिं चादाय तौ सह जुह्वां समज्य ताभ्यां सहैव पशुं 'घृतेनाक्तौ पशुं त्रायेथां' इति मन्त्रेण समनक्ति । ततः स्वधितिं शमितुर्हस्ते प्रयच्छति तथा च स्वरुं रशनायां अवगूहति । यथायतनं स्रुचौ सादयेताम्[5] । अग्नये क्रियमाणायानुब्रूहि ।

---

(१) अथाश्राव्यत्याश्रावयत्तु - - - - - - - - - - - - - -
असौमानुष इति मैत्रावरुणस्य नाम गृह्णाति ।
बौ० श्रौ० ४।६ ।

(२) प्रघृतः स्रुचावादायात्याक्रम्या श्राव्याह समिद्भ्यः प्रेष्येति ।
बौ० श्रौ० ४।६ ।

(३) बौ० श्रौ० ४।६ ।

(४) बौ० श्रौ० ४।६ ।

(५) दशप्रयाजानिष्ट्वोदङ्०अ०त्याक्रम्य - - - - - - - - - -
स्रुचौ सादयित्वा - अग्नये० बौ० श्रौ० ४।६ । घृतेनाक्तौ०
तै० सं० १।३।८ ।

पशोः पर्यग्निकरणम्[1] -

---

आग्नीध्रः आहवनीयादुल्मुकमादाय, चात्वालोत्करावन्तरेण शामित्रमग्रेण पशुं अनेन मुख इत्येवं त्रिः प्रदक्षिणं पर्येति । अध्वर्युः होत्रे मैत्रावरुणाय पर्यग्निकरणार्थं प्रैषं ददाति । होता - "अग्निहोतानो अध्वरे०"[2] इति ऋचस्य यथाविधिपाठं करोति । ततः अध्वर्युः "अनुपरिसरणमपाव्यानि" पञ्चाहुतीर्जुहोति[3] । तत्र होममन्त्राः - प्रजानन्तः०[4] - ५ इति ।

पशोः संज्ञपनविधिः -

---

ततः अध्वर्युः अपाव्य होमानन्तरं उपवेषेण गार्हपत्यादुदीचोऽङ्गारान्निरूहति । तानादाय यथासंचरं गत्वा शामित्रदेशे निदधाति[5] । आग्नीध्रः यूपोत्करयोर्मध्येन उदङ्नीयमानस्य पशोरग्रतोल्मुकं गृहीत्वा गच्छति[6] । वपाश्रपणीभ्यां पशुं च अध्वर्युयजमानयोरन्वारभते[7] ।

---

(१) अथैन आग्नीध्र आहवनीयादुल्मुकमाद - - - - - - - - - - प्रदक्षिणं पर्येति, बौ० श्रौ० ४।५ ।

(२) ऋ० सं० ४।१५।१-३ । अग्निहोतानो० तै०ब्रा० ३।६।१-४ ।

(३) अथानुपरिसरणमपव्यानि जुहोति, बौ० श्रौ० ४।५ ।

(४) बौ० श्रौ० ४।५ । प्रजानन्तः० तै० सं० ३।१।४ ।

(५) निधायाग्नीध्र उल्मुकं यथेतं त्रिः पुनः प्रतिपर्येति, बौ०श्रौ० ४।६ ।

(६) अथोल्मुकप्रथमाः प्रतिपद्यन्तेऽन्वक् शमिता पशुना, बौ०श्रौ० ४।५ ।

(७) पशुमध्वर्युर्वपाश्रपणीभ्यामन्वारभते वपाश्रपणी यजमानः बौ०श्रौ० ४।५ ।

अध्वर्युः उपप्रेष्य - "होतर्हव्यादेवेभ्य" मिति[1]। अत्र मैत्रावरुणः अघ्रिगुसंज्ञकः "दैव्याः[2] शमितारउतमनुष्या० इति मन्त्रपाठः अनवानं करोति। पाठानन्तरं दण्डं निदधाति। चात्वालोत्करावन्तरेणोदञ्चं नीयमानं पशुं "नानाप्राणो[3] यजमानस्य" ति द्वाभ्यां मन्त्राभ्यामनुमन्त्रयते। आग्नीध्रः शामित्रककाष्ठे उल्मुकं निदधाति। अध्वर्युः तस्योल्मुकस्य उत्तरतः प्राग्वीपाकरण बर्हिषोः "पृथिव्याः सम्पृचः पाहि" इति मन्त्रेणैकमुपास्यति[4]। अध्वर्युः शामित्रं प्रेष्यति।

प्रैषः - अकृण्वन्तमायुं संज्ञपयत[5]। शमितारः - बर्हिषोपरि प्रतीचीनशिरसमुदक् पादं संज्ञपयति[6]। यजमानऋत्विजश्च संज्ञप्यमानं पशुमनवेक्षमाणाः पृषदाज्य समीपे उपविशन्ति[7]। "संज्ञप्यः पशुः इति श्रुते सर्वे आवृत्य पूर्वाभिमुखाः भवन्ति।

---

(१) बौ० श्रौ० ४।६।

(२) दैव्याः शमितारआरभध्व०, तै० ब्रा० ३।६।५-६।

(३) अथैतं पशुमन्तरेण - - - विशंतेतिद्वाभ्यां। बौ०श्रौ० ४।६
नानाप्राणो० तै० सं० ३।१।४।

(४) स यत्रैतदाग्नीध्र - - - पृथिव्याः संपृचः पाहीति।
पृथिव्याः संपृचः पाहि० तै० सं० १।३।८। बौ०श्रौ० ४।६।

(५) बौ० श्रौ० ४।६। (६) तदैतं पशुं प्रतीचीनशिरसमुदीचीनपादं निघ्नन्ति। श्रौतकोश पृ० ५६५, द्वैधसूत्र।

(७) यथैतमेत्यपृषदाज्यावकाश आसते बहुप्रजा विश्वरूपा० बौ०श्रौ० ४।६।

संज्ञप्तहोमः[1] -

---

अध्वर्युः "यत्पशुर्मायुमकृत" इति आज्याहुतिं दत्वा पशुमन्वेति । पाशात् प्रमुच्यमानं पशुं "अदितिः पाशं" इति मन्त्रेणानुमन्त्रयते[2] । पशुबन्धनपाशं गृहीत्वा नैर्ऋत्यां दिशि "अरातीयन्तं०" इति मन्त्रेण निरस्यति[3] ।

संज्ञप्तपशोः प्रोक्षणविधिः -

---

प्रतिप्रस्थाता पत्नीमुत्थाप्य चात्वालोत्करावन्तरेण पत्नीं निष्क्रमय्य, प्राचीमुदानयन् "अनवप्रेहि घृतस्य०" इति मन्त्रं पत्नीं वाचयति[4] । ततः अध्वर्युः पशुसमीपे अपोवोक्षमाणां पत्नीं "आपोदेवीः शुद्धायुवः[5]" इति मन्त्रं वाचयति । ततः पत्नी स्वयमेव मन्त्रं ब्रुवाणा

---

(१) जुहोतिसंज्ञप्ता हुतिं यत्पशुर्मायुमकृत इति । बौ० श्रौ० ४।६ । तै० सं० ३।१।४ ।

(२) पाशात् पशुं प्रमुच्यमानमनुमन्त्रयते अदितिः पाशं प्रमुमोक्त्वेतम् इति । अदितिः पाशं० तै० सं० ३।१।४ । बौ० श्रौ० ४।६ ।

(३) अभिशाक्योपसर्ज्येमां दिशं निरस्यति अरातीयन्तमधरं० इति । अरातीयन्तमधरं० तै० सं० ३।१।४ । बौ० श्रौ० ४।६ ।

(४) अथ प्रतिप्रस्थातापत्नीमुदानयत्युदकमण्डलुमुत्थाप्य० अथैनामन्तरेण चात्वालोत्करावुदङ्०ङुप निष्क्रम्य प्राचीमुदानयन् वाचयति अनवप्रेहि घृतस्य० । बौ० श्रौ० ४।६ । नमस्त आताना अनर्वा प्रेहि०, तै० सं० १।३।८ ।

(५) आगतामध्वर्युरप्सु वाचयति आपोदेवीः शुद्धायुवः० इति । आपोदेवीः शुद्धायुवः तै० सं० १।३।८ । बौ० श्रौ० ४।६ ।

अभिषिञ्चति क्रमेण पशोः प्राणान् आप्याययति "वाक्तआप्यायतां०" इति मन्त्रैः वाचं, नासिके चक्षुषि । श्रोत्रे इति । पुनर्मन्त्रं वदति मन्त्रैः वागादीन् संमृशति शुन्धन्ति च । "यतेप्राणान्कुञ्जगाम०" इत्यादिमन्त्रैः प्राणान्, नाभिं, गुदं, पादानिति । शिष्टाः अपः पशोः पृष्ठवंशमूलादारभ्य "शमहोभ्यां०" इति मन्त्रेण तान् निनयति[1] ।

वपानिष्कासनार्थं पशोर्विशसनम् -

---

पत्नीं स्वस्थानं गते अध्वर्युः पशोः दक्षिणपार्श्वे द्वितीयमुपाकरणबर्हिः प्रागग्रं निनयाति । तदुपरि उत्तानं पशुं पर्यस्यन्ति । तथा स्वधितिं तिर्यञ्चं निदधाति[2] । "ओषधेत्रायस्वैनं । स्वधितेमैनं हिंसीः"[3] इति मन्त्रेण प्रार्थयति । ततः पशुं कृणत्ति बर्हिषा सह त्वचं छित्त्वा बर्हिषोऽग्रं - दक्षिणहस्ताङ्गुल्यन्तराले सक्तं कृत्वा, बर्हिषोऽधोभागस्थो भावस्थौ सह गृहीत्वा छिन्नप्रदेशं लोहितेनाक्तं

---

(१) आनुपूर्वं पशोः प्राणानाप्याययति वाक्त आप्यायताम् इति वाचमु० एतानेवपुनः संमृशति यतेप्राणान्कुञ्जगाम० शमहोभ्यामित्यतिशिष्टादक्षिणतोऽनुपृष्ठं निनयति । बौ०श्रौ०४।६,मन्त्रविभाग:तै०सं०१।३।८ ।

(२) नयन्ति पत्नीम् उत्तानं पशुं पर्यस्यन्ति । तस्य दक्षिणस्य पार्श्वस्य विवृत्तमनुप्राचीनाग्रं बर्हिर्निदधाति । स्वधितिंतिर्यञ्चं निदधाति । बौ० श्रौ० ४।६ ।

(३) बौ० श्रौ० ४।६ । तै० सं० १,३,६ ।

"नैर्ऋत्यांदिशि "रक्षसां भागोसीन्ति[1] मन्त्रेण निरस्यति । ततः अध्वर्युः अपउपस्पृश्य, छिन्नभागं विस्तीर्णं कृत्वा वपां "इषेत्वेति" मन्त्रेण निष्कास्यति । निष्कासितां वपां शाखां - वपाश्रपणीं प्रच्छादयति "घृतेनद्यावा पृथिवी" ति मन्त्रेण[3] । वपां स्वधितिना "अच्छिन्नोराय: सुवीरः" इति मन्त्रेण[4] छिनत्ति । ततः वपामद्भिः प्रक्षाल्य शामित्र अग्नौ प्रतितपति[5] । आग्नीध्रः पूर्वनिहितमुल्मुकमादाय उत्तरेणाभिमुखी गच्छति । तस्य पश्चादध्वर्युः यजमानः "उर्वन्तरिक्षमन्विहि[6]" इति मन्त्रेणवपाश्रपणीमन्वारभते । आग्नीध्रः गृहीतमुल्मुकमाहवनीये प्रक्षिपति । अध्वर्युः अंगुल्यन्तरे स्थापितं बर्हिषोऽग्रमाहवनीये "वायोविहि-स्तोकानां" इति मन्त्रेण प्रक्षिपति[7] ।

[2] (above इषेत्वेति)

---

(१) छिनत्तिबर्हिः । त्रित्वचं कृणत्ति । अथैतस्यैव बर्हिषोऽणिमत्सचैते स्थविमदुभयतो लोहितेनाऽऽक्त्वैमां दिशं निरस्यति रक्षसां भागोसि० रक्षसां भागोऽसीद० तै०सं० १।३।६ । बौ०श्रौ० ४।६ ।

(२) अथाऽपउपस्पृश्य वरोय आच्छाय इषेत्वा इति वपामुत्खिदति । इषेत्वा तै० सं० १।३।६ । बौ० श्रौ० ४।६ ।

(३) तयावपाश्रपणीप्रोर्णोति घृतेनद्यावापृथिवी प्रोर्णुवाथामिति । घृतेनद्यावापृथिवी० तै० सं० १।३।६ । बौ० श्रौ० ४।६ ।

(४) अविशारव्योपतृणा पस्तात्परिवासयति अच्छिन्नोरायः सुवीरः इति अच्छिन्नोरायः सुवीरः तै०सं० १।३।६ । बौ० श्रौ० ४।६ ।

(५) अथैनां प्रदक्षिणमावृत्याऽद्भिरभ्युक्ष्य शामित्रे प्रतितपति । बौ० श्रौ० ४।६ ।

अग्रिमपृष्ठेऽपि-------

वपायाग: -

----------

आहवनीये ज्वालायां वपां किञ्चित् प्रतितप्य प्रतिप्रस्थात्रे अध्वर्युः प्रयच्छति । प्रतिप्रस्थाता उदङ्मुख स्थित्वा वपां श्रपयति । अध्वर्युः आसीनः श्रप्यमाणायावपां उपरि पूर्वगृहीतापृषदाज्येन "त्वामुते दधिरे हव्यवाहं" इति मन्त्रेण स्रुवाहुतिं जुहोति । अध्वर्युः स्तोकमन्त्र-पठनार्थं होतारं प्रेष्यति[1] ।

स्तोकमन्त्राः -

-------------

"जुषस्व सप्रथस्तमम्०" । "इमं नो यज्ञममृतेषु धेहि०" इति मन्त्राः[2] । स्तोकपाठानन्तरं वपाश्रपणीतः वपामुद्धृत्य, अग्नावधिश्रित्य,

---------------------------------------------

पूर्वपृष्ठस्याग्रे-------

(६) अथोल्मुकप्रथमाः प्रतिपद्यन्ते । अन्वगध्वर्युर्वपया । अत्र वपाश्रपणी-पुनरन्वारभते यजमानः । ऐतिउर्वन्तरिक्षमन्विहि इति । उर्वन्तरिक्षमन्विहि । तै०सं० १।३।६ । बौ० श्रौ० ४।६-७ ।

(७) एत्या हवनीयस्याऽन्तमेष्वङ्गारेषु वपायै प्रतितप्यमानायै-बर्हिषाग्रमुपास्यति वायोविहिस्तोकानाम् इति । वायोविहिस्तोकानाम्, तै० सं० १।३।६ । बौ० श्रौ० ४।७ ।

(१) अथैनामन्तरेण - - - - - - - - - - - - - - - - - - -
अथाहस्तोकेभ्योऽनुब्रूहीति । बौ० श्रौ० ४।७ । त्वामुतेदधिरे-हव्यवाहं० तै० सं० ३।१।४ ।

(२) जुषस्वसप्रथस्तमं० । इमं नो यज्ञममृतेषु धेहि० । तै०ब्रा० ३।६।७-६ ।

अभिघार्य, उद्वास्य तेनैव आज्येन "यस्तआत्मा०" इति मन्त्रेण सान्नाय्यवत् अलं करोति । वपां दक्षिणतः स्रुचां - "अग्निर्होता", "अश्विनाऽध्वर्यु०" इत्यादि पञ्चहोत्रसंज्ञक मन्त्रेण आसादयति ।[1]

स्रुगासादनमन्त्रपाठः -
--------------------

अध्वर्युः होत्रनिगदे "घृतवती" शब्दं श्रुत्वा जुहूपभृतावादाया-त्याक्रम्या श्रावयितासद[2] ।

स्वाहाकृतिमन्त्रपाठः -
--------------------

अध्वर्युः मैत्रावरुणं "स्वाहाकृतोभ्यः प्रेष्य[4]" इति प्रैषं ददाति ।[3] मैत्रावरुणः "होतायक्षदग्निं स्वाहाज्यस्य स्वाहा०" इति प्रैषपाठं करोति । ततः अध्वर्युः आश्रावणं करोति । होता - "अयोजातोव्यमिमीतयज्ञं[5]" इति याज्यापाठे कृते आहवनीये आहुतिं ददाति । अध्वर्युः प्रत्याक्रम्य वपामभिघारयति । अत्र आज्यभागौ न स्तः । अध्वर्युः वपया-चरिष्यन् जुह्वां उपस्तीर्य, तत्र हिरण्यमवदाय स्वधितिनावपामवद्यति ।

---

(१) अग्निर्होता । अश्विनाऽध्वर्यु० । तै० आ० ३।१।१० ।

(२) कां० श्रौ० ४।७ ।

(३) कां० श्रौ० ४।७ ।

(४) होतायक्षदग्निं स्वाहाज्यस्य स्वाहा०, तै० ब्रा० ३।६।७-९ ।

(५) अयोजातो व्यमिमीतयज्ञं०, तै० ब्रा० ३।६।७-९ ।

वपायागप्रैष: -

अध्वर्युः मैत्रावरुणार्थं "इन्द्राग्निभ्यां छागस्यवपायामेदसो- ऽवदीयमानस्यानुब्रू ३ हि" इति प्रैषं ददाति[1]। अत्याक्रम्य, आश्राव्य, प्रत्याश्राविते आह - "इन्द्राग्निभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्य" इति। अध्वर्युः होतारं प्रति अनेन मन्त्रेण प्रैषं ददाति[2]। मैत्रावरुणः "होतायक्षदिन्द्राग्नी - - - - - - - - - - - - - - - - - - - होतर्यज इति प्रैषमन्त्रं पठति[3]। प्रैषं दत्वा वपायागात्पूर्वं "स्वाहादेवेभ्यः" इति मन्त्रेण स्रुवेण एकां आज्याहुतिं आहवनीये जुहोति[4]। होता - इन्द्राग्नी देवतोद्देशेन याज्यामन्त्रपाठं करोति[5]। याज्या पाठकाले अध्वर्युः "जातवेदोवपयागच्छदेवान्०" इति मन्त्रपठन् वषट्काल समकालं वपां जुहोति[6]। ततः उपरिष्टात् "देवेभ्यः स्वाहा" इति मन्त्रेण स्रुवेण एकामाज्याहुतिं जुहोति[7]। ततः वपाश्रपणीं प्रत्यगग्रान् कृत्वा आहवनीये - "स्वाहोर्ध्व

---

(१) बौ० श्रौ० ४।७ । (२) बौ० श्रौ० ४।७ ।

(३) तै० ब्रा० ३।६।७-६ ।

(४) पुरस्तात् स्वाहाकृतिं स्रुवाहुतिं जुहोति स्वाहादेवेभ्य इति । बौ० श्रौ० ४।७ ।

(५) गोभिर्विप्रः प्रमतिमिच्छमान० तै० ब्रा० ३।६।७-६ ।

(६) वषट्कृते वपां जुहोति जातवेदोवपया० बौ० श्रौ० ४।७ । जातवेदोवपया० । तै० सं० ३।१।४ ।

(७) अथोपरिष्टात् स्वाहाकृतिं स्रुवाहुतिं जुहोति देवेभ्यः स्वाहेति । देवेभ्यः स्वाहा, तै० सं० ३।१।४ । बौ० श्रौ० ४।७ ।

नभसं मारुतं गच्छतं०[1] इति मन्त्रेण अनुप्रहरति । ततः अध्वर्युः स्वस्थानमागत्य वेद्यां स्रुचौ सादयित्वा सर्वेषामृत्विजां यजमानपत्नी च चात्वालदेशं गत्वा परस्परं आह्वानं कुर्वन्तः सन्तु सर्वे "इदमापः प्रवहत०" इति मन्त्रद्वयेन मार्जनं कुर्वन्ति । पश्चात् यजमानपत्नी च अन्जलिना अपो-गृह्णाति "सुमित्रियान आपओषधयः सन्तु" इति मन्त्रं पठित्वा स्वशरीरं मार्जयति । "दुर्मित्रियास्तस्मैसन्तु" इति मन्त्रं पठित्वा नैर्ऋत्यां दिशि अपः सिञ्चति । सर्वे अपः स्पृष्ट्वा, पुनः यथायतनं उपविशन्ति[2] । इति निरूढपशुबन्धे वपायागः ।

पशुपुरोडाशयागः -

---

पशुपुरोडाशयागार्थमध्वर्युः आग्नीध्रमुद्दिश्य "पशुपुरोडाशं निर्वप" प्रतिप्रस्थातमुद्दिश्य प्रतिप्रस्थाता पशुं विशाधि । इति प्रैषं ददाति । ततः आग्नीध्रः अपस्पृष्ट्वा - शालामुखीयस्य पुरस्तात् आस्तृतेषु दर्भेषु पात्राणि सादयति[3] ।

---

(१) अत्र वपाश्रवणी अनुप्रहरति० स्वाहोर्ध्व नभसं मारुतं गच्छतम्० बौ० श्रौ० ४।७ । स्वाहोर्ध्व नभसं० तै० सं० १।३।६ ।

(२) अथोदङ्०उ०त्याक्रम्य यथायतनं स्रुचौ सादयित्वा समुत्क्रम्यचात्वाले मार्जयन्ते हृवयन्तिपत्नीं - - यथायतनमुपविशन्ति, बौ०श्रौ० ४।७ ।

(३) अथ सप्रैषमाहाग्नीत्पुरोडाशं निर्वपप्रतिप्रस्थाता पशुं विशाधि, बौ० श्रौ० ४।८ ।

पात्रासादनप्रकार: -

(१) स्फ्यम्, (२) एकादशकपालानि, (३) शूर्पम्,
(४) कृष्णाजिनम्, (५) शम्यां, (६) उलूखलमुसलम्,
(७) दृषदुपलम्, (८) मेक्षणम्, (९) पिष्टोद्वपनीम्,
(१०) प्रणीताप्रणयनम्, (११) दारुपलितं, (१२) मदन्तीमिति ।

अध्वर्यु: पशुपुरोडाश यागस्य उपक्रम: । जघनेन गार्हपत्यं स्फ्यं निधायादित्यत: प्रारम्य पिष्टसंयवनान्तं कर्म सम्पादयति । इत: प्रतिप्रस्थाता शामित्रसहकारेण इन्द्राग्नीदेवताकं संज्ञप्तं पशुं विशास्ति । पशुविशसनेऽएतत् सूत्रम् - हृदयं जिह्वां वक्षास्तानि सार्धं कुरुतात् तनिममतस्ने तानि सार्धं सव्यं दोरेकदारं करुतान्नानापार्श्वे अघतादक्षिणां श्रोणिमध्युद्धिं करुतादक्षिणं दो: सव्यां श्रोणिमणिमद्गुदस्य तानित्र्यङ्गानि कुरुताद्वनिष्ठुं च जाघनीं चावद्यतात् बहु यू: कुरुतात् त्रि: पशुं प्रच्यावयतात् त्रि: प्रच्युतस्य पशोर्हृदयं उत्तमं कुरुतादिति[१] ।

यथोक्त पशुविशसनानन्तरं अध्वर्यु: शामित्रशालायां पूर्वस्थापिते शामित्राग्नौ पशुपुरोडाशसिद्धये पशु कुंभीमधिश्रयति । तस्यां मंत्रेण निदधाति । तत: पशुकुंभोपात्रे प्रभूतमुदक मानीय, सर्वाणि पशो: अङ्गाव-

---

(१) अथ प्रतिप्रस्थाता पशुं विशास्ति शमितर्हृदयं - - - - - - - - उत्तमं कुरुतात्, बौ० श्रौ० ४।८ ।

दानानि निधाप्य भपयेत । कृते पशौ आग्नीध्रः दक्षिणेन आज्यस्थालीमिति हविरासादनक्रमेण अन्तर्वेद्यां हविरासादनं करोति[1] । ततः अध्वर्युः - जुहूपभृतयोरुपस्तीर्य पशुपुरोडाश यागार्थं मैत्रावरुणाय पुरोनुवाक्या पाठार्थं प्रैषं ददाति । प्रैषः - इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रू ३ हि[2] । मैत्रावरुणः "विहृयत्स्यन्मनसावस्य०" इति पुरोनुवाक्यामन्त्रं पठति[3] । ततः अध्वर्युः पुरोडाशस्य पूर्वार्धात् अवदानं गृहीत्वा अपरार्धात् अवद्यति । अभिघारयति, प्रत्यनक्ति । स्विष्टकृदर्थं पुरोडाशस्योत्तरार्धात् सकृदवदाय द्विरभिघारयति न प्रत्यनक्ति । पूर्वोक्त संचरेण अत्याक्रम्य, आश्राव्य, प्रत्याश्राविते "इन्द्राग्नीभ्यां पुरोडाशं प्रस्थितं प्रेष्य[4], प्रैषपाठानन्तरं[5] याज्यापाठः[6] । याज्यापाठान्ते वषट् कृते जुहोति[7] । अध्वर्युः - उपभृतस्थितं पुरोडाशं जुह्वां समावपमाने आह - "अग्नयेनुब्रू ३ हि[8] । होता -

---

(१) कृते पशौ पशुपुरोडाशं यावति० वेद्या सादयति, बौ० श्रौ० ४।८ ।

(२) बौ० श्रौ० ४।८ ।

(३) विहृयत्स्यन्मनसावस्य० तै० ब्रा० ३।६।८-१२ ।

(४) पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति - - - - - - - - - प्रेष्येति, बौ० श्रौ० ४।८ ।

(५) होतायक्षदिन्द्राग्नीपुरोडाशस्य जुषेतां हविर्होतर्यजा, तै० ब्रा० ३।६।८-१२ ।

(६) माक्षोध्वरश्मीरिति०, तै० ब्रा० ३।६।८-१२ ।

(७) बौ० श्रौ० ४।८ ।

(८) अथ समावपमान आहाग्नयेऽनुब्रूहि । बौ० श्रौ० ४।८ ।

अनुवाक्यापाठं करोति[१]। अध्वर्युः अनुवाक्यान्ते - आश्राव्याह, अग्नये प्रेष्यति[२]। ततः होतुः याज्यापाठः[३]। होतुः वषट्कृते अध्वर्युः उत्तरार्धपूर्वार्धे जुहोति[४]। अत्र पुरोडाशयागे इडाभक्षणविषये च द्वौ पक्षौ स्तः।

प्रथमपक्षः -
-----------

बौधायनसूत्रे - यागानन्तरं प्राशित्रमवदाय, इडामवद्यति। उपहूतायामिडायामग्नीध्रः आदधाति। यजमानं प्राश्नन्ति। मार्जयन्ते इति बौधायनः[५]।

द्वितीयः पक्षः -
----------------

तत्रैव उक्तः अथ हैक आचार्या एकादशकर्माणि पशुबन्धे उत्पादयन्ति। अस्मिन् पक्षे स्विष्टकृत् यागानन्तरं हविरुच्छिष्टमुद्रास्य

---------------------------------------------------

(१) त्वामीडते अजिरं दूत्याय० तै० ब्रा० ३।६।८-१२ ।

(२) बौ० श्रौ० ४।८ ।

(३) होतायक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज, तै० ब्रा० ३।६।८-१२ ।

(४) बौ० श्रौ० ४।८ ।

(५) अथोदङ्०३०त्याक्रम्य यथायतनं स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यति - - - - - - - - - - - - - - - - - - - - - - मार्जयन्ते। बौ० श्रौ० ४।८ ।

इध्मप्रव्रश्चनादि होमशेषं समापयेत्[1] । साम्प्रतिके काले याज्ञिकाः निरूढ-पशुबन्धेपशुपुरोडाशयागानन्तरं हविरुच्छिष्टमुद्वासनादि पूर्णपात्रनिनयनान्तं कर्म सम्पाद्य पशुपुरोडाशयागस्य समाप्तिं कुर्वन्ति ।

पशुपुरोडाशस्य उत्तरतन्त्रम् -

---

अध्वर्युः हविरुच्छिष्टमुद्वास्य स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा, अन्वाहार्यपचने इध्मप्रव्रश्चनान्याधाय, अत्र फलीकरणहोमं कृत्वा पूर्णपात्र-निनयान्तं कर्म सम्पादयेत् ।

अङ्गहविर्यागः -

---

अङ्गहविर्यागार्थमध्वर्युः सम्प्रैषं ददाति । सम्प्रैषः -

(१) अग्नीदुत्तरबर्हिरुपसादय ।

(२) प्रतिप्रस्थाता पशौ संवदस्व ।

ततः आग्नीध्रः स्रुवा दक्षिणतो बर्हिस्तीर्त्वा, यूपा आहवनीय योरन्तरेणा-हृत्य, हृदशूलं प्लक्षशाखायामुपगूहति[2] ।

---

(१) यथो एतद्बौधायनस्य कल्पं वेदयन्ते निरूढायैवाऽस्य ---- ---------- प्रतिज्यौपयज इति, बौ० श्रौ० ।

(२) अथ सम्प्रैषमाहाग्नीदुत्तरबर्हिरुपसादय ---------- हृदशूलमुपगूहति, बौ० श्रौ० ४।८ ।

प्रतिप्रस्थाता[१] - "आज्यस्थालीं स्रुवं चादाय, पूर्वगृहीतपृषदाज्यात् जुह्वां गृहीत्वा अन्तरेण चात्वालोत्करावुङ्गुपनिष्क्रम्य शमितारं पृच्छति । "शृतं हवी: शमित०" इति प्रैषः । ततः शमिता हृदयशूलं धारयन् पुरतः "शृतमिति०" प्रतिप्रैषं ददाति । एवं त्रिवारं प्रैषप्रतिप्रैषोच्चारणं अत्र कुर्यात् । प्रतिप्रैषोच्चारणकाले प्रतिप्रस्थाता किञ्चित् पुरतोगत्वा, प्रतिप्रैषे - (१) पूषामापशुपाः पातु । (२) पूषामा पथिपाः पातु । (३) पूषा मा अधिपाः पातु इति गमनमन्त्रं पठेत्[क] । शमितुः समीपं प्रतिप्रस्थाता तस्य हस्तात् हृदयशूलमादाय, तेन हृदयावदानं भित्वा, तं शमितुर्हस्ते दत्वा, पृषदाज्येन हृदयादीनि अङ्गानि युगपत् "सं ते मनसामनः सम्प्राणेन०[ख]" इति मन्त्रेण अभिघारयति । अभिघारानन्तरं पुनः आज्यस्थाल्या स्रुवेण सर्वाणि अवदानानि अभिघार्य, उद्गुद्वास्य, पुनरभिघार्य, एकादशावदानानि प्रत्येकं "यस्त-वात्मापशुषु०" इति मन्त्रेण अलंकरोति । अत्र अध्वर्युः प्रतिप्रस्थातारं "त्रियूः कृत्वा हरत" इत्यादेशं ददाति । ततः अध्वर्युः जुहूपभृतोः ध्रुवाज्येन उपस्तृणाति । इडायां आज्यस्थाल्याज्येन, वसाहोमहवण्यां अपूर्वाज्येन उपस्तृणाति । ततः अध्वर्युः जुह्वादि चतुष्टयं प्राशित्रं च गृहीत्वा,

---

(१) अथ प्रतिप्रस्थाता पृषदाज्यं विहत्य जुह्वां समानीयान्तरेण चात्वालोत्करावुदङ्ङुप निष्क्रम्य पृच्छति शृतं हवी ३: शमितः - - - पन्व होत्रा सादयति । बौ० श्रौ० ४।८ ।

क - बौ० श्रौ० ४,८ ।

ख - सं ते मनसा०, तै० सं० १।३।१० ।

स्कयं बर्हिर्भिकञ्च यूपाहवनीययोः - अन्तरेणाहृत्य दक्षिणतः सादयति ।
अत्रैव परिकर्मिणः - पश्वङ्ग०भ्यः यूषं पृथक् कृत्वा पात्रान्तरेण यूपं
आहवनीयं च अन्तरेणाहरन्ति । अध्वर्युः तं यूषं "पञ्चहोतृसंज्ञकेन मन्त्रेण[ग]
तस्या सादनं करोति ।

आसादनेस्थाननिर्देशः -

---

ध्रुवां प्लक्षशाखा दक्षिणतः सादयति । एवमेव आहृतयूषं
दक्षिणतः सादयति । तत्र यजमानद्वारा अनुमन्त्रणं "यन्मेऽग्न०" इति
मन्त्रेण भवति । यजमानानुमन्त्रणानन्तरं अध्वर्युः प्लक्षशाखायां हृदयं
निधायस्वधितिनातस्याग्रे छिन्नप्रदेशादवधन - मनोतासंज्ञकमन्त्रपाठार्थं
होत्रे प्रैषं[1] ददाति । प्रैषमन्त्रः - मनोतायै हविषोवदीयमानस्यानु-
ब्रू३हि[2] । होता - "त्वं ह्यग्ने[3]" इत्येकादशर्चं सूक्तं पठति । तत् समकालमेव
अध्वर्युः जुह्वां हृदयात् छिरवक्षति[4] । तथैव जिह्वायाः, वक्षसः, तन्निम्न-

---

(ग) अग्निहोता ------------------
मित्रऽपवक्ता, तै० आ० ३।१-१० ।

(१) प्लक्षशाखाया - हृदयं निधाय स्वधितिना तस्याग्रेऽवधन्नाह -
बौ० श्रौ० ४।८ ।

(२) बौ० श्रौ० ४।६ ।

(३) त्वं ह्यग्ने० ------------------
विवते राजनित्वे, तै० ब्रा० ३।६।८-१२ ।

(४) हृदयस्यैवाग्रे छिरवयति, बौ० श्रौ० ४।६ ।

श्चेति प्रत्येकं द्विरवद्यति । वृक्कयोः, मेदसोः पृथक् सादयित्वा, दक्षिण-वृक्कयात्, सव्यवृक्कयात्, सव्याद्दोष्णः, दक्षिणपार्श्वात्, सव्यात् पार्श्वात्, दक्षिणश्रोण्याः अध्युध्याः, ऊर्ध्वप्रदेशात् गुदं त्रेधा कृत्वामूलं उपयद्भ्यः अग्रं स्विष्टकृते निधाय मध्यभागस्य द्वैधं कृत्वा जुह्वां -अवदधाति[1] । पूर्वस्थापित दक्षिणवृक्कयमेदो यूष्णि निधाय, प्रसार्य, तेन मूलं प्रच्छाद्य, यूष्णोपसिच्य, ध्रुवाज्यमुप आहवनीययोर्मध्ये नाकुलेन ध्रुवेण जुह्वामभिघारयति[2] । सर्वाण्यवदानानि द्विर्द्विरवद्यति । सर्वत्र उपस्थानाभिमर्शनप्रत्यन्चनानि न सन्ति[3] ।

उपभृतिअवदानग्रहणप्रकारः[4] -
-----------------------

स्विष्टकृदर्थं उपभृति दक्षिणस्य दोष्णः सकृत् सव्यस्य सकृत्, श्रोणेः पिशितमवदाय, गुदस्यार्धं निधाय, सव्यवृक्कयमेदो यूष्णि निधाय,

---

(१) अथ जिह्वाया अथवक्षसो - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - -
जुह्वामवदधाति, बौ० श्रौ० ४।६ ।

(२) अथ वृक्कयमेदोयूषन्नवधायतेन जुह्वां प्रोर्णोति । यूष्णोप-सिञ्चति, अभिघारयति, बौ० श्रौ० ४।६ ।

(३) लल्लाख्यमौरेश्वरलिखितपद्धतिः, पृ० १० ।

(४) अथोपभृति स्विष्टकृते - - - - - - - - - - - - - - - - -
द्विरभिघारयति, बौ० श्रौ० ४।६ ।

प्रसार्य, तेन उपभृतं प्रच्छाद्य - यूष्णोपसिच्य, द्विरभिघारयति ।

प्राशित्रमवदानप्रकार:[१] -

बौधायनसूत्रे प्राशित्रमवदानं नोक्तं, परं च निरूढपशुबन्ध-प्रयोगकाराः रूढिबलात् प्राशित्रे अवशिष्टावदानं कुर्वन्ति । अवत्तावशिष्टेभ्यः प्राशित्रमवदाय पूर्ववदाज्य स्थाल्याः स्रुवदण्डेनाभिघार्य निदधाति ।

इडावदानप्रकार:[२] -

इडावदाने इडायां हृदयं, जिह्वां वक्षः, किञ्चित् अवशेष्य च तनिमतस्नु 'वनिष्ठुं'इति मन्त्रेण द्विर्द्विरवदाय, अनुक्तैश्च अन्यैः अनास्थिभिः हविरवशिष्टभागैः इडां वर्धयित्वा, यूष्णोपसिच्य पूर्ववदाज्यस्थाल्याः स्रुवेणाभिघारयति ।

वसाग्रहणविधि: -

वसाहोमहवण्यां वसां गृहीत्वा, यूष्णोपसिच्य, पूर्ववत्

---

(१) लल्लाख्यमोरेश्वर लिखितपद्धति:, पृ० १६ ।

(२) अथ हृदयं जिव्हां वक्षस्तनिममतस्नौ - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - अभिघारयति, बौ० श्रौ० ४।६ ।

अपूर्वाज्यस्थाल्याः स्रुवेणाभिघारयति[१]।

सकृदभिमर्शनविधिः -[४२]

---

युग्मतान्यवदानानि "ऐन्द्रः प्राणो अङ्गे अङ्गे निदिध्य०" इति मन्त्रेण अध्वर्युः अभिमृशति। ततः दक्षिणस्य पार्श्वस्य मांसवत् प्रदेशेन वसाहोमहवण्यां गृहीतां वसां - "श्रोरस्यग्निस्त्वाशृणा०[३]" इति मन्त्रेण भिक्ष्यति। ततः जाघनीं[४] प्रत्याहृत्य, पश्चान्नीत्वा शालामुखीयस्य समीपे निदध्युः। एततु पशुजुह्वादि पन्कमध्वर्युः यथाहृतं पर्याहृत्य, यथास्थानं निदध्युः[५]।

---

(१) अथ कंसे वा चमसे वा वसाहोमं गृह्णाति युष्णोपसिञ्चत्यभिघारयति। बौ० श्रौ० ४।६ ।

(२) अथपशोरवदानानिसंमृशत्यैन्द्रः प्राणोअङ्गे अङ्गे निदध्य०। ऐन्द्रः प्राणो अङ्गे अङ्गे० तै० सं० १।३।१० । बौ० श्रौ० ४।६ ।

(३) अथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्भतः "श्रोरस्यग्नि०"। श्रोरस्यग्निस्त्वा० तै०सं० १।३।१० । बौ० श्रौ० ४।६ ।

(४) संमृष्टस्य पशोः प्रतीचीं जाघनीं हरन्ति। प्रतिहरन्ति पशुम्। बौ० श्रौ० ४।६ ।

(५) अथ जुहूपभृतावाददान आह इन्द्राग्निभ्यां० इति, बौ० श्रौ० ४।६ ।

वसाहोमविधिः -

---

अध्वर्युः यथागतं प्रत्येत्य जुहूपभृतावावदान मैत्रावरुणार्थं प्रेषयति । प्रैषः - "इन्द्राग्निभ्यां छागस्य हविषोवदीयमानस्यानुब्रूहि" इति प्रैषं ददाति । अध्वर्युः अत्याक्रम्य, आश्राव्य, प्रत्याश्राविते होतुर्व्रत्विजार्थं प्रेषयति । होतुः प्रैषः - मैत्रावरुणः "इन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्य"[1] इति प्रैषानन्तरं पश्चात् आभरतं शिक्षतं वज्रबाहू० इति पुरोनुवाक्यां[2] पठति । प्रैष मन्त्रं पठति[3] । होता याज्यां पठति[4] । याज्यापठनसमये प्रतिप्रस्थातावसाहोमं करोति । तस्य स्वरूपम्[5] - आहवनीयस्योत्तरतस्तिष्ठन् - प्रतिप्रस्थाता याज्यायाः अर्धर्चान्तं कृत्वा "घृतं घृतपावानः पिबत०" इति मन्त्रेण वसाहोमं जुहोति । अध्वर्युः याज्यान्ते वषट्कृते जुहोति[6] ।

---

(१) अत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां० ।
बौ० श्रौ० ४।८ ।

(२) आभरतं० तै० ब्रा० ३।६।८-१२ ।

(३) तै० ब्रा० ३।६।८-१२ ।

(४) उपोध्यद्विदथं० तै० ब्रा० ३।६।८-१२ ।

(५) प्रतिप्रस्थातैष उत्तरतो वसाहोम धारय स्तिष्ठति सोऽर्धर्चे याज्यायै वसाहोमं जुहोति घृतं घृतपावानः पिबत० । घृतं घृतपावानः तै० सं० १।३।१० । बौ० श्रौ० ४।८ ।

(६) वषट्कृते हविर्जुहोति । बौ० श्रौ० ४।८ ।

दिक्होमविधिः[१] -

ततः प्रतिप्रस्थाता उपविश्य वसाहोमशेषेण "दिशः प्रदिश आदिशो०" इति मन्त्रेण दिशो जुहोति[१]।

वनस्पतियागः[२] -

अध्वर्युः दिक् होमानन्तरं दक्षिणमावृत्य, जुह्वामुपस्तीर्य स्रुवेण पृषदाज्यात् सकृत् गृहीत्वा "वनस्पतयेनुब्रूहि" इति प्रैषं ददाति। ततः अध्वर्युः शिरमिधार्य प्रसव्यमावृत्य, आश्राव्य, प्रत्याश्रावित आह - "वनस्पतये प्रेष्य" इति प्रैषानन्तरं होतुः - वषट्कृते उत्तरार्धपूर्वार्धं अतिहाय पूर्वाहुतोर्जुहोति[२]।

---

(१) दिशः प्रदिशआदिशो० तै० सं० १।३।१० । एतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति - दिशः प्रदिश आदिशो ------------------ दिग्भ्यः स्वाहा। बौ० श्रौ० ४।६ ।

(२) अथ प्रदक्षिणमावृत्य पृषदाज्यात् स्रुवेणोपघ्नन्नाह वनस्पतयेनु-ब्रूहित्याश्राव्याह वनस्पतये प्रेष्येति वषट्कृत उत्तरार्धे पूर्वार्धेऽतिहाय-पूर्वा आहुतीर्जुहोति। बौ० श्रौ० ४।६ ।

देवेभ्यो वनस्पते हवींषि० इति वनस्पतियागस्य पुरोनुवाक्या। होतायक्षद्वनस्पतिमभि ..... हविर्होतर्यज। मैत्रावरुणप्रै० वनस्पते रशनया० इति याज्या। तै० ब्रा० ३,६,८-१२

स्विष्टकृद्यागः[1] -

---

अध्वर्युः समावपमान आह "अग्नयेस्विष्टकृतेनुब्रूहि" इति मैत्रावरुणाय प्रैषं ददाति । आश्राव्य, प्रत्याश्राविते "अग्नयेस्विष्टकृते प्रेष्य" इति होतारं प्रेष्यति । प्रैषानन्तरं होतास्विष्टकृद्याज्यां पठति[1] । होतुर्वषट्कृते अध्वर्युः पूर्ववज्जुहोति । ततः संक्षालन निनयनान्तकर्म कुर्यात्[2] ।

इडोपाह्वानम्[3] -

---

अध्वर्युः होतुरङ्गुलिद्विरनक्ति । उपहूतायामिडायां अनिष्कृमग्नीधे षडवत्तमागं सम्पादयति । अत्र पद्धतिकाराः अग्नीधे इडाभागमपि वाञ्छन्ति । यजमानाः सप्तमाः इडां भक्षयन्ति[3] ।

---

(१) समावपमान आहाग्नये स्विष्टकृतेऽनुब्रूहीत्या श्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृत - - - - जुहोति । बौ० श्रौ० ४।६ । पिप्रीहिदेवां० इति पुरोनुवाक्या होता यक्षदग्निं स्विष्टकृत - - - हविर्होतर्यज मैत्रावरुणप्रैषः अग्निः स्विष्टकृतमयाऽग्नि - - अग्नयेदधविद्यो० । इति याज्या० तं०ब्रा० ३।६।८-१२

(२) अथोदङ्ङत्याक्रम्य - - - - - - - - - - - सादयित्वा, बौ० श्रौ० ४।६ ।

(३) होत्रइडामुपोपच्छन्ते - - - - - - - - - - - - मेदस्वत् प्राश्नन्ति मार्जयन्ते, बौ० श्रौ० ४।६ ।

अध्वर्युः प्राशित्रपरिहरणार्थं "ब्रह्मणे प्राशित्रं परिहर" इति ब्रह्मार्थं प्रैषं ददाति । ततः ब्रह्मणः प्राशित्रभागं प्राश्नाति । अध्वर्युः द्वितीयप्रैषं ददाति । अग्नीद्ब्रह्मणेवदाः परिहर इति प्रैषानन्तरं स तथा करोति[1] । प्रतिग्रहणमन्त्रः - वयं सोमव्रतेतव०[2] इति ।

दक्षिणादानविधिः[3] -
---

यजातः भागग्रहणानन्तरं यजमानः अन्वाहार्यचरोः प्रतिग्रहानन्तरं ऋत्विग्भ्यां ददाति । "देवस्यत्वेति" प्रतिग्रहणमन्त्रः इति । एवं श्रुत्युक्तदक्षिणादानानन्तरं अध्वर्युः सम्प्रैषति । प्रैषः - "अग्नीदौपयजानंगारानाहरोपयष्टरुपसीद ब्रह्मन् प्रस्थास्यामः समिधमादायाग्निदग्नीन् सकृत् सकृत् संमृड्ढि[4] ।

गुदहोमः अनूयाजश्च होमविधिः[5] -
---

ततः आग्नीध्रः शामित्रशालां गत्वा, शामित्रात् अङ्गारा-

---

(१) अथाह ब्रह्मणेवदाः परिहरेति तद्ब्रह्मा प्रतिगृण्हाति, बौ०श्रौ० ४।८ ।
(२) वयं सोमव्रते तव० । बौ० श्रौ० ४।१० ।
(३) लल्लाख्य गौरीश्वरपद्धतिः । पृ० २१ ।
(४) अथ सम्प्रैषमाह - अग्नीदौप० । बौ० श्रौ० ४।१० ।
(५) आहरन्त्येतान्छामित्रादौपयजानंगारापुरस्तान्प्रेण होतारं निर्वपति त्युपसीदत्युपयष्टागुदतृतीयेन, बौ० श्रौ० ४।१० ।

नादाय होतुः पुरस्तात् आसादयति । ततः प्रतिप्रस्थाता गुदतृतीयभागं वसाहोमहवणीं चादाय, होतुरुत्तरपार्श्वेउपविश्य गुदं प्रत्यनुयाजं स्वधितिना भिन्नन् प्रच्छिद्य, वसाहोमहवण्यामपर्यावृत्त्य जुहोति । गुदहोमयागस्य संज्ञाउपयड्याग इति ।[1] अध्वर्युः पृषदाज्यं गृहीत्वा, जुह्वां समानीय पृषदाज्यग्रहणोमुपभृतं कृत्वा, अत्याक्रम्य, आश्राव्य प्रत्याश्राविते आह - "देवेभ्यः प्रेष्य" इत्यध्वर्युःहोतारं प्रेषयति । प्रेषणसमकालमेव प्रतिप्रस्थाता होतुः पुरस्तात् अनुयाजयागस्य याज्यापठनान्ते वषट्कारोच्चारणकाले "समुद्रं गच्छस्वाहा" इति मन्त्रेण अङ्गारोपरि गुदकाण्डभागं जुहोति । एवमेव द्वितीय, तृतीय, चतुर्थ, अनुयाजयागस्य याज्यापठनान्ते प्रतिप्रस्थाता गुदकाण्डहोमं - "अन्तरिक्षं गच्छदेवं सवितारं गच्छ०" इति मन्त्रेण पूर्ववत् जुहोति । षष्ठाद्यनुयाजयागेषु प्रतिप्रस्थाता होमं न करोति ।[2]

द्वितीयः पक्षः -
----------------

प्रतिप्रस्थाता समस्तं गुद तृतीयभागं सकृदेव हुत्वा सर्वैः मन्त्रैः अनुमन्त्रयते ।[3]

---

(१) अथाध्वर्युः पृषदाज्यं - - - - - - - - - - - देवेभ्यः प्रेष्येति, बौ० श्रौ० ४।१० ।

(२) एवमेवोपयष्टोपयजति - - सर्वमन्ततोनुप्रहरति । समुद्रं गच्छ० । अन्तरिक्षं गच्छ० । तै० सं० १।३।११; बौ० श्रौ० ४।१० ।

(३) समस्तमेवैनमनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवमतम् ।

अनूयाजयागानन्तरं प्रतिप्रस्थाता बर्हिषि हस्तौ "अद्भ्यस्त्वौ-षधीभ्यो मनो मे हार्दियच्छ" इति मन्त्रेण निमार्ष्टि[1]। यजमान: वौपयाजिकहोमस्य धूमं "तनूं त्वचं पुत्रन्नप्तारमशीय" इति मन्त्रेण अन्वीक्षते[2]।

स्वरुहोम: -

---

अध्वर्यु: अनूयाजयागस्थानात् उदङ्०उ०त्य, आक्रम्य, पूर्व-स्थापितस्वरुकाष्ठं जुह्वामवदाय उत्तरवेदे: पुरस्तात् - प्रत्यङ्०मुख-स्तिष्ठन् "दिवं ते धूमो गच्छ०" इति मन्त्रेण जुहोति[3]। यथायतनं स्रुचौ सादयित्वा स्रुग् व्यूहनं करोति। व्यूहने उपभृत् अनन्तरं तन्मन्त्रेण पृषदाज्यग्रहणीमपि व्यूहेत्[4]।

सूक्तवाकयागविशेष: -

---

अस्मिन् पशुतन्त्रे सूक्तवाक प्रैषे ब्रूहि स्थाने प्रेष्येति वदेत्।

---

(१) बर्हिषि हस्तौ निमार्ष्ट्यद्भ्यस्त्वौषधीभ्यो०।
अद्भ्यस्त्वौषधीभ्यो० तै० सं० १।३।११। बौ० श्रौ० ४।१०।

(२) अथास्य धूममन्वीक्षते तनूं त्वचं०। बौ० श्रौ० ४।१०।
तै० सं० १।३।११।

(३) उदङ्०ङ०त्याक्रम्य जुह्वां स्वरुमवधाय पुरस्तात् प्रत्यङ्०-तिष्ठञ्जुहोति दिवं ते धूमोगच्छ०। बौ० श्रौ० ४।१०।

(४) अथ यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति।
बौ० श्रौ० ४।१०।

इति सूक्तवाकयागे विशेषः शेषं समानमेव ।

उज्जितिवाचनम् -

उज्जितिवाचने आज्यभागानन्तरं "इन्द्राग्न्योरहमुज्जिति अथ च वनस्पतेरहमुज्जिति" इत्युज्जिति वाचनम् ।

स शाखयाप्रस्तरहोमः[१] -

अग्नीनां सम्मार्जनम् । संस्रावहोमश्चकृत्वा उत्करे स्रुचौ विमुञ्चेत् । मन्त्रः - अग्नेरगोपन्नगृहस्य सदस्य सादयामि ।

जाघनीयागः -

स्रुक् विमोचनानन्तरं अध्वर्युः उत्करस्थानात् प्रदक्षिणमावृत्य, प्रत्यङ्०उ०ाद्रुत्य, शालामुखीये अग्नौ सोमं त्वष्टारं च आज्येन यष्ट्वा, जुह्वामुपस्तीर्य, पूर्वस्थापितजाघन्याः अंगविशेषस्यऊर्ध्वप्रदेशात् द्विरवदाय, अभिघार्य "देवानां पत्नीः" इति मन्त्रेण यजति । पुनः जुह्वामुपस्तीर्य जाघन्याः अधोभागे द्विरवदाय, अभिघार्य, "अग्निं गृहपतिं०" इति मन्त्रेण यजति[२] ।

---

(१) शंयुनाप्रस्तरपरिधिसंप्रकीर्य संस्रावव्यस्रुचोविमुच्य:, बौ०श्रौ० ४।२० ।
(२) जाघन्याः पत्नीः संयाजयन्त्याज्यस्यैव सोमं त्वष्टारं च यजत्युत्तानायै - - अग्निं गृहपतिम्, बौ० श्रौ० ४।२० ।

पत्नीसंयाजस्य इडोपाह्वानेविशेष: -

अध्वर्यु: होतु: हस्ते उपस्तीर्य, जाघन्या: अलोम प्रदेशात् द्विरवदाय, अभिघार्य, इडोपाह्वान निगद: पठति । उपहूतायामिडायां अग्नीध जाघन्या: अधोभागादेव षडवत्तमाधाय, स्रुचि चतुर्गृहीतं गृहीत्वा, अन्वाहार्यपचने पूर्ववत् प्रायश्चित्त होमं कृत्वा, पत्नीव्रतं विसृज्य, प्राडि०त्य, ध्रुवामाप्याय्य, दर्शपूर्णमासोक्त प्रायश्चित्त मन्त्रै: जुहुयात्[1] ।

समिष्टयजुर्होम: -

तत: पंचधातूत्समज्य, प्रहृत्य, दक्षिणेन पदावेदिमाक्रम्य, तिष्ठन्नध्वर्यु: ध्रुवाज्यात् स्रुवेणोपहत्य "यज्ञयज्ञंगच्छ०" "एषतेयज्ञोयज्ञपते०" इत्याभ्यां मन्त्राभ्यां जुहोति । तथा स्रुवन्निधाय, ध्रुवामादाय "देवागातुविदोगातुं वित्वा०" इति मन्त्रेण पुनर्जुहोति । इमौ समिष्टयजुर्होम: । तत: ब्राह्मणतर्पणान्तं कर्म सम्पादयति[2] ।

---

(१) अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलै: पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं हुत्वा न फलीकरणहोमेन चरति । बौ० श्रौ० ४।१० ।

(२) अथ प्राडि०त्य ध्रुवामाप्याय्य त्रीणि समिष्ट यजूंषि जुहोति यज्ञयज्ञं गच्छ०, बौ० श्रौ० ४।१० । यज्ञयज्ञं गच्छ० । एषते यज्ञोयज्ञपते० । देवागातुविदो०, तै० सं० १।४।४४ ।

हृदयशूलोद्वासनविधिः -

---

अध्वर्युः स्फ्यमुदपात्रं हृदयशूलञ्चादाय - "एहि यजमान" इति प्रैषमुक्त्वा, पत्न्यासह ऋत्विजश्चान्त्वरेण चात्वालोत्करावुदङ्०-ङुपनिष्क्रामति । अध्वर्युः मंडपात् बहिर्निष्क्रम्य, यूपं स्फ्येनोद्धत्य, अवोक्ष्य, शुष्कार्द्रयोः सन्धौ "शुगसितमभिशोच०" इति मन्त्रेण हृदयशूलमुपगूहति । उपगूहनस्थानमद्भिः प्रोक्षति । एतत् हृदयशूलोद्वासनमिति[१] ।

यजमानस्यमार्जनविधिः -

---

यजमानः अञ्जलिनामपोगृह्णाति - "सुमित्रियानआपओषधयः सन्तु" इति मन्त्रेण स्वां तनूं मार्जयति "दुर्मित्रियाः०" इति मन्त्रेण "नैर्ऋत्यां दिशि अपः सिञ्चति ।

समिद्धोमः -

---

सर्वे ऋत्विजः अपोपस्पृशन्तः हृदयशूलमनवेक्षमाणः - यज्ञवेदिमागच्छन्तः अर्धपथे आर्द्राः सपलाशाः तिस्रस्तिस्रः समिधआददे ।

---

(१) अथ याचति स्फ्यमुदपात्रं हृदयशूलमित्येतत्समादायाहेहियजमान - - - - हृदयशूलमुद्वासयति शुगसितमभि० शुगसितमभि०, तै० सं० १।३।११ । बौ० श्रौ० ४।१०-११ ।

पश्चात् यजमानः आहवनीये (१) एधोस्येधिषीमहि । (२) समिदसि-स्वाहा । (३) तेजोसिस्वाहा । एभिर्मन्त्रै समिद्धोमं करोति । "तेजोमयिधेहिस्वाहा" आपोन्ववारिणं इति मन्त्रेणाहवनीय मुपतिष्ठन्ते[1] ।

औपयजिकेऽग्नौसक्तुहोमविधिः -

---

औपयजिके अग्नौ "यत्कुसीदमप्रतीतं०" इति मन्त्रेण वेदिस्तीर्णं बर्हिरुपोषति । पूर्वाज्येनोपस्तीर्णान् - अभिघारितान् सक्तून् बर्हिषा-प्रदीप्तेऽग्नौ अञ्जलिना - "विश्वलोपविश्वदा०, इति मन्त्रेण जुहोति । तथा हस्तौ मिथः संघृष्टालेपं "अघादेकोहुतादेकः" इति मन्त्रेण अपनयति । इति सक्तुहोमः[2] ।

उपस्थानविधिः -

---

सक्तुहोमानन्तरं च

सक्तुहोमानन्तरं यजमानः उत्तरवेद्यग्निं उपतिष्ठते । ततः वायुं

---

(१) अथा प्रतीचामायन्ति वरुणस्यान्तर्हित्यै प्रपथे समिधः कुर्वते - - - - - - तेजो मयिधेहीत्यथाहवनीमुपतिष्ठन्ते बौ० श्रौ० ४।११ ।

(२) अथौपयजिकेऽग्नौ बर्हिरुपोषति - - - हस्तौ प्रघ्नं सयतेऽघा देकोऽहुतादेकः० बौ० श्रौ० ४।११ । यत्कुसीद० । विश्वलोप-विश्वदा० । अघादेकोहुतादेकः० तै० सं० ३।३।८ ।

ततः आदित्यं, ततः यूपं, उपतिष्ठन्ते[1]।

समिन्तु समारोपविधिः -

यजमानः उत्तरवेद्यग्निं समिधि 'अयं ते योनिः०' इति मन्त्रेण समारोपयति[2]।

पूर्णाहुतिहोमः -

आजुह्वानः सु०। इति द्वाभ्यां मन्त्राभ्यां शालामुखीयं ज्वलयित्वा, अपूर्वाज्येन स्रुचिचतुर्गृहीतं गृहीत्वा 'सप्ततेअग्ने०' इति मन्त्रेण पूर्णाहुतिं जुहोति। पश्चात् गां, अनड्वाहं वा दक्षिणां ददाति[3]।

---

(१) अथ देवता उपतिष्ठते अयं नो० बौ० श्रौ० ४।११। अयं नो नमसा०। सत्वं नो०। देव संस्फान०। तै० सं० ३।३।८। आशासानः सुवीर्यं०। तै० सं० ३।५।५।

(२) अथ पूर्वाग्निं शकले समारोपयत्ययं ते योनिर्ऋत्विय इति, बौ० श्रौ० ४।११, अयं ते योनिर्ऋत्विय० तै० सं० १।५।५।

(३) तं मध्यमेऽग्नावपि सृजत्याजुह्वानउद्बुध्य स्वाग्न इति द्वाभ्यामथमध्यमग्निमुपसमाधाय मध्यमेऽग्नौ पूर्णाहुतिं जुहोति सप्तते अग्ने० पूर्णाहुतौवरं ददाति धेनुवारं वानड्वरं वा दद्यादिति हस्माह बौधायनः। बौ० श्रौ० ४।११। आजुह्वानः सु०। सप्तते अग्ने० तै० सं० ४।६।५।

अस्मिन् प्रथमे अनुष्ठिते पशुबन्धे विशेषोवदेयम् -

---

अयं द्विदेवत्य: पशु: इन्द्राग्नी देवतेसंज्ञके ।सार्वत्रैष्टुभ: एकादश-प्रयाजा: । एकादशअनूयाजा: । एकादशकपाल: पशुपुरोडाश: । एकादशा-वदानानि । एकादशोपयाजा: । इति । बौधायन श्रौतसूत्रानुसारेण निरूढपशुबन्ध: ।

आश्वलायनोक्तं पशुतन्त्रम् -

---

निरूढपशुबन्धस्य इष्टिरुभयतोऽन्यतरतोवा[1] इति सूत्रानुसारेण आग्नेयो इष्टिरनुष्ठेया अथवा आग्नावैष्णावो इष्टिरनुष्ठेया भवति । अत्रक्रम:[2] च पुरस्तात् आग्नेयो उपरिष्टात् - आग्नावैष्णावोति ।

प्रथमपक्ष: -

---

पुरस्तादेव एका इष्टिरनुष्ठेया नोपरिष्टात् ।

द्वितीयपक्ष: -

---

उपरिष्टादेव आग्नावैष्णावो इष्टिं कुर्यात् न पुरस्तादिति ।

---

(१) आ० श्रौ० ३।१,२ ।

(२) आग्नेयोवा । आग्नावैष्णावो वा । उभेवा । आ०श्रौ० ३।१।३-५

(३) अन्यतरा पुरस्तात् । आ० श्रौ० ३।१,६ ।

अनेन सूत्रवचनेन स्पष्टमेतत् आश्वलायनानां निरूढपशुबन्धस्य अनुष्ठानात्पूर्वं पश्चाद्वा आग्नेयी - आग्नावैष्णवी वा एका इष्टिः अवश्यमनुष्ठेया भवति । अस्याः इष्टेरनन्तरं पशुतन्त्रप्रधान निरूढपशुबन्धस्य अनुष्ठानमुक्तम् । अतः आश्वलायन प्रयोगे आग्नेयी आग्नावैष्णवी वा इष्टिकरणपद्धतिः यदीयं तदेव प्रथमतः उच्यते ।

आग्नेयीइष्टिवर्णनम् -

अग्निप्रधानदेवताका इष्टिः आग्नेयी । अस्यामिष्ट्यां अष्टाकपालः पुरोडाशः भवति । 'अग्निर्मूर्धा[1] भुवो यशस्यें[2]' ति याज्यानुवाक्ये भवति । वार्त्रघ्नावाज्यभागौ ।

आग्नावैष्णवीइष्टिः -

द्विदेवत्यप्रधाना आग्नावैष्णवी इष्टिः भवति । इयमिष्टिः निरूढपशुबन्धस्योपरिष्टात् अनुष्ठेया भवति । अत्र एकादशकपालः पुरोडाशः । वार्त्रघ्नावाज्यभागौ । याज्यानुवाक्ये आश्वलायनसूत्रोक्ते भवतः । अग्नाविष्णूसजोषसे० इति पुरोनुवाक्या । अग्नाविष्णूमहितधाम प्रियवां०

---

(१) ऋ० सं० ८।४४।१६ ।

(२) ऋ० सं० १०।८।६ ।

इति याज्या।[1] स्विष्टकृति - 'अग्नेयदद्य' ति संयाज्ये। अनयोः इष्ट्योः तन्त्रं पौर्णमासवदेव भवति। एतदनुष्ठानानन्तरमेव निरूढपशुबन्धस्य प्रारंभो भवति।

अग्निप्रणयनम्[2] -
---

अग्निप्रणयनं चातुर्मास्य यागान्तर्गतवरुणप्रघास पर्वणि उक्तमेव। तथैवात्र अग्निप्रणयनं कुर्यात्।

यूपसंस्काराः -
---

ततः पाशुबन्धिकायावेदेः पश्चात् निरसनउपवेशन कृत्वा, अध्वर्युणा प्रेषितो होता यूपसंस्कारान्तर्गत यूपाञ्जनादि मन्त्रान् क्रमेण पठेत्।[3] अभिहिं कृत्य 'अञ्जन्ति त्वा मध्वरे देवयन्तो०'[4] इति मन्त्रः त्रिवारं पठेत्। 'उक्तेन वचनेनार्धर्चं आरमेत्'[5] इति सूत्रवचनात् अर्धर्चान्ते अध्वर्युणा उच्छ्रयणार्थं प्रेषिते 'यदूर्ध्वस्तिष्ठाद्रविणेह०' इति मन्त्रस्योत्तर-

---

(१) ऋ० सं० ४।२५।२६।

(२) उक्तमग्निप्रणनम्। आ० श्रौ० ३।१।७।

(३) पश्चात् पाशुबन्धिकायावेदेरुपविश्यप्रेषितो यूपायाज्यमानायानुब्रूह्यञ्जन्ति त्वामध्वरे देवयन्त इति। आ० श्रौ० ३।१।८।

(४) ऋ० सं० ३।८।१।

(५) आ० श्रौ० ३।१।८।

भागं पठित्वा "उच्छ्रयस्ववनस्पते०"[1] । "समिद्धस्य श्रयमाण: पुरस्तात्०[2] १ ।"
"ऊर्ध्वऊषुणऊतये०"[3] १ । "ऊर्ध्वोन: पाह्यं हसो निकेतुना०"[4] १ ।
"जातोजायतेसुदिनत्वे०"[5] १ । इति मन्त्रैः अर्धवसानं कुर्यात्[6] । पुन: परिवीय-
माणार्थं अध्वर्युणा प्रेषिते "पुनन्तिधीरा अपसोमनीषा०" इत्यनेन उत्तरार्ध-
र्चेन - "युवासुवासा: परिवीत आगात्०"[7] इति मन्त्रमुपसन्तत्य तथैव कृत्वा
परिदध्यात्[8] ।

अग्निमन्थनम् -
------------

अत्र अग्निमन्थनं चातुर्मास्ययागान्तर्गत वैश्वदेव पर्ववत् कुर्यात्[9] ।

---

(१) उच्छ्रयस्ववनस्पते - - - - - - - - - - - - - - - - - -
- - - - - - - - - - ऊतय इति द्वे । आ० श्रौ० ३।१,
आ० श्रौ० ३।१।९, कृ० सं० ३।८।३ ।
(२) आ० श्रौ० ३।१।९, कृ० सं० ३।८।२ ।
(३) कृ० सं० १।३५।१३ ।
(४) कृ० सं० १।३५।१४ ।
(५) कृ० सं० ३।८।५ । आ० श्रौ० ३।१।९ ।
(६) उच्छ्रयस्ववनस्पते० सुदिनत्वे अन्हामित्यर्धर्चं आरभेत् ।
आ० श्रौ० ३।१।८ ।
(७) कृ० सं० ३।८।४ ।
(८) युवासुवासा: परिवीत आगादितिपरि दध्यात्,
आ० श्रौ० ३।१।९ ।
(९) उक्तमग्निमन्थनम्, आ० श्रौ० ३।१।१२ ।

देवता आवाहनम् -

अत्र विशेष उच्यते - निरूढपशौ वैकल्पिकौ आज्यभागौ ।[1]
आज्यभागकरणपक्षे - प्रकृतिवत् चाग्नेयावाज्यभागौ । अकरणपक्षे -
प्रधानदेवतया सहैव अग्नेरावाहनं कुर्यात् ।

तस्य स्वरूपम् -

इन्द्राग्नी अग्न आवहेति । अत्र उपोद्बलकं - आश्वलायनसूत्र-
वचनम् - "अग्नबावहेतितु प्रथमदेवताभिति"[2] । प्रयोगकारास्तु रूढिबलात्
आज्यभागौ कुरुतः । आवाहनेऽग्निमग्नआवह । सोममावह । इत्याज्य-
भागौ । इन्द्राग्नीआवह । इति प्रधानदेवते । वनस्पतिमावह । देवां
आज्यपां आवहेत्यादि सप्मागौसिसम्भां प्रजापशुभिर्मूढहि इत्यन्तं प्रकृतिवत्
कुर्यात् ।

प्रवृत्ताहुतीर्होमः -

होमोऽयं होतृकर्तृकः । होमस्थानं प्रत्यगुदक् आहवनीयादवस्थाय
इत्येवमादिधर्मेण स्रुवेण "जुष्टोवाचेभूयासं० १ । पुनः सकृत् गृहीतेन पञ्च-

---

(१) कृताकृतावाज्यभागौ । आ० श्रौ० ३।१।१२ ।
(२) आ० श्रौ० १।३।७ ।

विग्राहं जुहोति । मंत्रा: - स्वाहावोच० १ । (२) स्वाहावाचस्पतये० ३
(३) स्वाहासरस्वत्यै । (४) महीभ्य: सम्महीभ्य: स्वाहा एतेषां
चतुर्णां मन्त्राणां अन्ते स्वाहाकारो न कर्तव्य: । मन्त्रादावेव पठितत्वात् ।
स्वाहाकारान्तैर्मन्त्रैरनेवंमन्त्रे पठित इति । पश्वावेव अयं होम: नान्यत्रेति[1]।

वेद्यां प्रशास्तुरागमनम् -

प्रशास्तानाम मैत्रावरुण: इति । अध्वर्युणा प्रेषिते प्रशास्तारं तीर्थेन प्रपादयति । मैत्रावरुण: चात्वालोत्करावन्तरेण अभिहृततरेण पादेन विहारं प्रपद्यते । होता - तस्मै प्रत्यङ्०मुखावस्थिताय प्राङ्०मुखो दण्डं प्रयच्छति । दक्षिणोत्तराभ्यां पाणिभ्यां मित्रावरुण प्रयच्छामि इत्यन्तेन मन्त्रेण प्रशास्ता तथाभूताभ्यां पाणिभ्यां होतुपाण्योरवस्तात् "मित्रा-वरुणयोस्त्वाबाहुभ्यां० अक्रो विधुरोभूयासम्" इत्यन्तेन मन्त्रेण गृह्णाति[2]। दण्डं प्रतिगृह्योत्तरेण होतारं अतिक्रमेत् । दक्षिणेन दण्डं हरेत् । न च दण्डेन आत्मानं अन्यं वा उपस्पृशेत् आप्रैष वचनात्[3]।

---

(१) प्रवृत्ताहुतीर्जुहुयात् । जुष्टोवाचेभूयासं० संमहीभ्य: स्वाहेति ।
आ० श्रौ० ३।१।१३-१४ ।

(२) प्रशास्तारं तीर्थेन प्रपाद्य - - - विधुरोभूयासमिति ।
आ० श्रौ० ३।१।१६-१७ ।

(३) आ० श्रौ० ३।१।१८ ।

मैत्रावरुण प्रेषस्थानम् -

होतृषदनात् दक्षिणे भागे वेदेरुत्तरे श्रोणौ बहिः प्रह्वीवस्थाय[1] वेद्यां दण्डमवष्टभ्य प्रेषितो ब्रूयात् । ततः होता स्रुगादापनादि प्रकृतिवत् कर्म कुर्यात् ।

प्रयाजयागः -

अत्र एकादशप्रयाजाः भवन्ति । तेषां प्रेषाः - अध्वर्युणा प्रेषितो मैत्रावरुणः प्रेषमन्त्रैः होतारं प्रेषयति[2] । होता - आप्रीभि-ऋग्भिर्यजति[3] ।

गौत्रदृष्ट्या आप्रीसूक्तानां ग्राह्याग्राह्यविचारः[4] -

"समिद्धो अग्निरिति[5] शुनकानाम्" । "जुषस्व नः समिधमिति[6]

---

(१) दक्षिणाहोतृषदनात्० प्रेषार्थमाऽऽदेशम् । आ० श्रौ० ३।१।२० ।

(२) आ० श्रौ० ३।२।१-३।४ ।

(३) अध्वर्यु प्रेषितो० प्रेषसलिंगाभिः, आ० श्रौ० ३।२।४-५ ।

(४) समिद्धोअग्निरितिशुनकानां० यथऋषिवा, आ०श्रौ० ३।२।६-७ ।

(५) ऋ० सं० २।३।१-११ ।

(६) ऋ० सं० ७।२।१-११ ।

वसिष्ठानाम् । "समिद्धोअद्यमनुष[1]" शुनकवसिष्ठव्यतिरिक्तानां सर्वेषाम् । एतत् सूक्ते अन्याजादीनां नाराशंस एव द्वितीयो भवति । अस्य सूक्तस्य द्वितीयामुद्धृत्य "नराशंसस्य महिमानमेषाम्" इति वासिष्ठी आवपेत् । यथा ऋषि वा आप्रीया भवन्ति । तत्र यथाऋषि आप्री विभागार्थं भगवता शौनकेन श्लोकोक्तः -

कण्वोऽङ्गिगरोऽगस्त्यः शुनको विश्वामित्रो त्रिरेव च ।
वसिष्ठः कश्यपो वध्र्यश्वो जमदग्निरथोक्त इति ॥

"सुसमिद्धोनआवह[2]" त्येतत् काण्वानाम् । "सुमिद्धो अग्नआवह[3]" तिद्व्यतिरिक्तानामांगिरसानाम् । "समिद्धो अद्यराजसि[4]" त्यगस्त्यानाम् । "समिद्धोअग्निर्निहित[5]" - इति शुनकानाम् । "समित्समित्सुमना[6]" इति इति विश्वामित्राणाम् । "सुसमिद्धायशोचिषे[7]" इत्यत्रीणाम् । "जुषस्वनः समिधमिति[8]" वसिष्ठानाम् । "समिद्धो विश्वतस्पति[9]" इति

---

(१) ऋ० सं० १०।११०।१-११ ।

(२) ऋ० सं० १।१३।१-१२ ।

(३) ऋ० सं० १।१४२।१-१३ ।

(४) ऋ० सं० १।१८८।१-११ ।

(५) ऋ० सं० २।३।१-११ ।

(६) ऋ० सं० ३।४।१-११ ।

(७) ऋ० सं० ५।५।१-११ ।

(८) ऋ० सं० ७।२।१-११ ।

(९) ऋ० सं० ९।५।१-११ ।

कश्यपानाम् । "इमां मे अग्नसमिधं जुषस्व" [1] इति वध्र्यश्वानाम् । "समिद्धो अद्य" ति शुनकवध्र्यश्वव्यतिरिक्तानां भृगूणाम् । इति आप्रीसूक्तविचार: । अत्र "समिद्धो अद्य" इति सर्वेषां [2] विशेषसूत्रवचनात् "समिद्धोऽद्यमनुषोदुरोणे" इत्येतदाप्रीसूक्तं स्वीक्रियते । प्रेषन्ति आह्वानं कुर्वन्ति एभिरिति व्युत्पत्त्या प्रैषमन्त्रा: -

| अथ प्रयाजप्रैषा: [3] | प्रयाजयाज्या [4] |
| --- | --- |
| (१) होतायक्षदग्निं समिधासुषमिधा० | (१) "समिद्धो अद्यमनुषोदुरोणे०" |
| (२) होतायक्षत्तनूनपातमदितं० | (२) "तनूनपात् पथऽऋतस्ययानान्०" |
| (३) होतायक्षदग्निमिडईडितो० | (३) आजुह्वानईड्योवन्धश्च० |
| (४) होतायक्षद् बर्हि:० | (४) प्राचीनं बर्हि: प्रदिशापृथिव्या० |
| (५) होतायक्षद्दुरऋष्वा: कवष्यो० | (५) व्यचस्वतीरुर्विया विश्रयन्ताम्० |
| (६) होतायक्षदुषासानक्ता० | (६) आसुष्वयन्ती यजते उपाके० |
| (७) होतायक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा० | (७) दैव्याहोतारा प्रथमा सुवाचा |
| (८) होतायक्षत्त्वष्टारं० | (८) आनोयज्ञं भारतीतूयमेतु० |
| (९) होतायक्षद्वनस्पतिं० | (९) यइमे द्यावापृथिवीजनित्री० |
| (१०) अग्नेदग्निरसनाद्वनिनि० | (१०) उपावसृजत्मन्यासमंजन्० । |

---

(१) ऋ० सं० १०।७०।१-११ । (२) आ० श्रौ० ३।२ ।
(३) नि० कु० प्र० चरणव्यूहस्य पृ० १४ पं० ३ से पृ० १६ पं० ४ तक । आ० श्रौ० पृ० ४५६-१-१२ ।
(४) ऋ० सं० १०।११०।१-११ ।

पशुपर्यग्निकरणम् -

प्रयाजयागानन्तरं अध्वर्युणा प्रेषितो मैत्रावरुण: पर्यग्निकरणमन्त्रान् "अग्निर्होता नो अध्वरे०" इति तृचं पठति[1]। पुन: प्रेषितो मैत्रावरुण: उपप्रैषं अनवानं पठति[2]। उपप्रैषानन्तरं होता "दैव्याशमितार आरभध्व"मिति अध्रिगुप्रैषं पठति[3]। अस्मिन् अध्रिगुप्रैषे पशो: संख्यानुरोधेन ऊहो भवति। "संज्ञप्त: पशु:" इति श्रुत्वे होता पुन: स्वोपवेशनस्थाने तृणनिरसनादिकं कृत्वा, उपविशति "अग्निर्होतावेत्वग्नेर्होत्रं वेतु" इति स्रुगादापानमन्त्रं पठति च[4]। स्रुगादापनमन्त्रान्ते होता उक्तप्रयाजस्य "सद्योजातोव्यमिमीत यज्ञ०" इति याज्या पठति।

आज्यभागसम्बन्धिविचार: -[5]

अत्र मैत्रावरुणप्रैषौ वैकल्पिकौ अत: याज्यानुवाक्ययो: होता एव ब्रूयात्। संप्रैषपक्षे - अनुवाक्या प्रैषं मैत्रावरुणो ब्रूयात्।

---

(१) ऋ० सं० ४।१५।१-३। प्रेषितो मैत्रावरुणोऽग्निर्होताना इति तृचं पर्यग्नयेऽन्वाह।

(२) अध्रिगवे प्रेष्योपप्रेष्य०। आ०श्रौ० ३।२।१०, आ०श्रौ० ३।२।६।

(३) अ दैव्या: शमितार आरभध्व०, आ० श्रौ० ३।३।१-।

(४) उक्तमादापनं स्वाहाकृतीभ्य:। आ० श्रौ० ३।४।२।

(५) आ० श्रौतसूत्र दीपिका, पृ० ६५।

आज्यभागस्य पुरोनुवाक्या -

अग्निः - "अग्निर्वृत्राणि जंघनत्"[1] पुरोनुवाक्या ।

सोमः - "त्वं सोमासि सत्पतिः"[2] इति पुरोनुवाक्या ।

आज्यभागस्य याज्या -

अग्निः - ये यजामहेऽग्निं जुषाणो अग्निराज्यस्य हविषो-वेतु० । सोमः - ये यजामहे सोमं जुषाणः सोमआज्यस्य हविषोवेतु० । सप्रैषत्वात् होतुर्याज्यामन्त्रे देवतादेशो न कर्तव्यः ।

आज्यभागप्रैषौ[0] -

१- "होतायक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज" इति पूर्वस्य ।

२- "होतायक्षत् सोममाज्यस्य जुषतां हविर्होतर्यज" इत्युत्तरस्य ।

वपायागः -

वपायागार्थमध्वर्युणा प्रेषितो होता "आवृत्रहणावृत्रहभिः शुष्मैः"[3]

---

(१) ऋ० सं० ६।१६।३४ ।

(२) ऋ० सं० १।९१।५ ।

(३) आवृत्रहणा० ऋ० सं० ६।६०।३० । आ० श्रौ० ३।७।१३ ।

(०) आ० श्रौ० परिशिष्ट पृ० सं० ४६०-१३-१४ ।

इत्यनुवाक्यां पठति ।

मैत्रावरुणप्रैष: -

---

होतायक्षदिन्द्राग्नीवपायामेदसो जुषेतां हविर्होतर्यज[1] इति प्रैष: ।

वपायागस्य याज्या -

---

प्रत्याश्राविते होता "शुचिंनुस्तोमं नवजातमद्या०" इति मन्त्रस्य[2] याज्या पठति । तत: सर्वे ऋत्विज: चात्वालदेशं गत्वा "इदमाप: प्रवहत०" इति मन्त्रेण "सुमित्रियान आपओषधय: सन्तु" इति सौत्रमन्त्रेण मार्जयन्ते । मार्जनानन्तरं सर्वे तीर्थदेशेन मण्डपात् वहि: निर्गच्छन्ति । पशुपुरोडाश श्रपणानन्तरं पुन: तीर्थदेशेन प्रवेशं कृत्वा, स्वे-स्वे स्थाने उपविशत: होता-मैत्रावरुणश्चेति[3] ।

---

(१) आ० श्रौ० परिशिष्ट पृ० सं० ४८०,१५ ।

(२) शुचिं नु० ऋ० सं० ७६३।१ । आ० श्रौ० ३।७।१३ ।

(३) हुतायां वपायां सब्रह्मकाश्चात्वाले मार्जयन्ते निधाय दण्डं मैत्रावरुण:० इदमाप: प्रवहत० ऋ० सं० १।२३।२२ । आ० श्रौ० ३।५।१-६ ।

पुरोडाशयागः -

'आमर्त्तं शिप्रातं वज्रबाहु०'[1] इति पुरोडाशयागस्य पुरोनुवाक्या । प्रधानपुरोडाशस्य मैत्रावरुणप्रैषः - होता यक्षदग्निं पुरोडाशस्य जुषेतां हविर्होतर्यज[2] । इति प्रैषः । याज्या - 'गोभिर्विप्रः प्रमतिमिच्छमानः'[3] इति याज्या ।

पुरोडाशस्य स्विष्टकृद्यागः -

'इडामग्नेपुरुदं०सं०' इत्यनुवाक्या । मैत्रावरुणप्रैषः - होतायक्षदग्निं पुरोडाशस्य०' इति ।

'स्वदस्वहव्यासमिषोदिदीहि०' इति याज्या[4] । पशौ स्विष्टकृन्निगदो न भवति । प्रकृतिवत् इडोपाह्वानम् । कर्मित्वात् मैत्रावरुणोपि इडां भक्षयति । 'एतावन्मार्जनं पशौ'[5] इति सूत्रवचनात् इडाभक्षणान्ते मार्जनं न भवति ।

---

(१) आमर्त्तं० ऋ० सं० १।१०६।७ । आ० श्रौ० ३।७।१३ ।
(२) आ० श्रौ० परिशिष्ट पृ० सं० ४६०,१७ ।
(३) गोभिर्विप्रः प्रमति० ऋ० सं० ७।६३।४ । आ० श्रौ० ३।७।१३ ।
(४) इडामग्ने पुरुदंसं० सनिं गोर्होतायक्षदग्निं पुरोडाशस्य स्वदस्वहव्या समिषोदिदीहीति पुरोडाशस्विष्टकृतः । आ० श्रौ० ३।५।१६ । इडामग्नेपुरुदंसं० ऋ०सं० ३।२२।५ । स्वदस्वहव्या० ऋ०सं० ३।५४।२२
(५) आ० श्रौ० ३।५।१३ ।

मनोतासंज्ञकसूक्तपाठविधि: -

मनोतायै अध्वर्युणा प्रेषिते मैत्रावरुण: "त्वं ह्यग्नेप्रथमोमनोते" ति त्र्योदशर्च आघोक्तेत्रि: पठति ।[1]

अंगहविर्याग: -

अंगहविर्यागस्य "उभा वा मिन्द्राग्नी आहुवध्या०" इत्यनुवाक्या[2] मैत्रावरुणप्रैष: - होतायक्षदिन्द्राग्नीछागस्य० करतएवेन्द्राग्नीजुषेतां हविर्होतर्यज ।[3] इति प्रैष: । "प्रचर्षणिभ्य: पृतनाहवेषु०"[4] इति याज्या । अत्र याज्यामंत्र वसाहोमार्थं अर्धे विरमेत् । वसाहोमे कृते उत्तरार्धं ब्रूयात् ।[5]

वनस्पतियाग: -

"देवेभ्योवनस्पते हवींषि" इति पुरोनुवाक्या । मैत्रावरुणप्रैष: -

---

(१) मनोतायै प्रेषितस्त्वं ह्यग्ने प्रथम इत्यन्वाह । आ० श्रौ० ३।६।१ । त्वं ह्यग्ने प्रथमो मनोता० ऋ० सं० ६।१।९-१३ ।

(२) उभावामिन्द्राग्नी० । ऋ० सं० ६।६०।१३ । आ० श्रौ० ३।७।१३ ।

(३) हविषाचरन्ति । तत्र प्रैषे करत एवाग्नीषोमावेव मित्यैतरेयिण: आ० श्रौ० ३।६।२-३ ।

(४) प्रचर्षणिभ्य: पृतना० ऋ० सं० १।१०९।६ । आ० श्रौ० ३।७।१३

(५) याज्याया अन्तरार्धर्चौ वसाहोम आरमेत् आ० श्रौ० ३।६।८ ।

'होतायक्षदग्निवनस्पतिमभि०' इति अत्र प्रैषमन्त्रे अवध्यम् - सूत्रवचनात् आज्यभागयोः अकरणपक्षे अग्नेः सोमस्य च स्थाने उद्धारः कर्तव्यः[1]।

'वनस्पतेरशनयानियुया०' इति याज्या।

स्विष्टकृद्यागः -

'पिप्रीहि देवां०'[2] इति पुरोनुवाक्या मैत्रावरुणप्रैषः - 'होतायक्षदग्निस्विष्टकृतं०' इति प्रैषः। 'अग्नेयदद्यविशो अध्वरस्य०'[4][3] इति याज्या। याज्यान्ते पूर्ववत् इडोपाह्वानम्। इडामैत्रावरुणोपि मद्धायति[5]।

एकादशानूयाजयागः -

अध्वर्युणा प्रेषितः प्रशास्ता प्रैषसूक्तक्रमेण होतारं

---

(१) वनस्पति ना सन्ति प्रैषमभितो याज्यानुवाक्ये, आ०श्रौ० ३।६।८ । स्विष्टकृद्यागात् पूर्वं कर्तव्यस्य वनस्पति यागस्य याज्यानुवाक्ये 'देवेभ्यो वनस्पते हवींषि' 'वनस्पतेरशनयानियुया' इति ऋग्वेद-खिलेषु प्रैषाध्याये पठिते । दृश्यतां वैदिक संशोधन-मण्डलप्रकाशिता सभाष्या ऋग्वेदसंहिता ४ खण्डे ९८४-८५ पृ० ।

(२) पिप्रीहि देवां० ऋ० सं० १०।२।१ ।

(३) अग्नेयदद्यविशो० ऋ० सं० ५ ६।१५।१४ ।

(४) आ० श्रौ० ३।६।११ ।

प्रेष्यति[१]। प्रशास्ता प्रेषितो होताक्रमेण देवं बर्हिरित्यादिभिर्यजति ।

| अनूयाजप्रैषाः[२] | अनूयाजयाज्याः[३] |
|---|---|
| (१) देवं बर्हिः सुदेवं देवैः० | (१) देवं बर्हिर्वसुवनेवसुधेयस्यवेतु । |
| (२) देवीर्द्वारः संघाते० | (२) देवीर्द्वारोवसुवनेवसुधेयस्यव्यन्तु । |
| (३) देवीउषासानक्ताद्यस्मिन्० | (३) देवीउषासानक्तावसुवने-वसुधेवीतां । |
| (४) देवीजोष्ट्रीवसुधिती० | (४) देवीजोष्ट्रीवसुवनेवसुधेयस्यवीतां । |
| (५) देवीऊर्जाहुतीइषमूर्जमन्या० | (५) देवीऊर्जाहुतीवसुवनेवसुधेयस्यवीतां |
| (६) देवा दैव्याहोतारापोतारा० | (६) देवादैव्याहोतावसुवनेवसुधेयस्यवीतां |
| (७) देवीस्तिस्रस्तिस्रोदेवीः० | (७) देवीस्तिस्रस्तिस्रोदेवीर्वसुवने-वसुधेयस्यव्यन्तु |
| (८) देवोनराशंसस्त्रिशीर्षा० | (८) देवोनराशंसोवसुवनेवसुधेयस्यवेतु |
| (९) देवोवनस्पतिर्वर्षप्रावा० | (९) देवोवनस्पतिर्वसुवनेवसुधेयस्यवेतु |
| (१०) देवं बर्हिर्वारितीनां० | (१०) देवंबर्हिर्वसुवनेवसुधेयस्यवेतु । |
| (११) देवोअग्निःस्विष्टकृत्० इति उक्तप्रैषः । | (११) देवोअग्निःस्विष्टकृत्सुद्रविणा । |

---

(१) तेषां प्रैषास्तृतीयं प्रैषसूक्तम् । एकादशेह । आ०श्रौ० ३।६।१२ ।

(२) आ० श्रौ० परिशिष्ट पृ० सं० ४६०,२२-३२ ।

(३) प्रागुत्थाइ द्वावावपेत । देवोवनस्पतिर्वसुवनेवसुधेयस्यवेतु० ।
आ० श्रौ० ३।६।१३ ।

अत्र अनुयाज्यागे अनवानं प्रैष्यति अनवानं यजति च[1]।

सूक्तवाक्यागः[2] -

---

सूक्तवाकार्थं आश्रवणे कृते अप्रेषित एव मैत्रावरुणः "अग्निमद्य" इति सूक्तवाकप्रैषं मैत्रावरुणो ब्रूयात् । अत्र वनस्पतिवर्जं आवाहनक्रमेणैव देवता निगमेत् । सूक्तवाकप्रैषः - "अग्निमद्यहोतारमवृणीतायं यजमानः[3]। इति । होता - "इदं द्यावापृथिवी[4]" इति सूक्तवाक निगदं ब्रूयात् ।

मैत्रावरुणदण्डप्रतिपत्तिः -

---

यत्र सावभृथं कर्म तत्र अवभृथान्ते मैत्रावरुणः दण्डं अप्सु प्रक्षिपेत् । यत्र अवभृथराहित्यं तत्र सूक्तवाकान्ते मैत्रावरुणः दण्डं आहवनीये प्रक्षिपेदिति[5]। मैत्रावरुण दण्डस्य प्रतिपत्तिः । होताप्रायश्चित्तहोमान्तं प्रकृतिवत् करोति । अत्र वेदस्तरणं कृताकृतं भवति[6]।

---

(१) अनवानं प्रैष्यति । अनवानं यजति । आ० श्रौ० ३।६।१४ ।
(२) सूक्तवाक प्रैषे पूर्वस्मिन्निगमे गृह्णन्नित्यत्राऽऽज्यभागौ, आ० श्रौ० ३।६।१५-१६ ।
(३) आ० श्रौ० परिशिष्ट पृ० सं० ४६१, ३३ ।
(४) सूक्तवाकाय संप्रेषित इदंद्यावा० । आ० श्रौ० १।६।१ ।
(५) समाप्य प्रैषमग्नौ दण्डमनुप्रहरेदनवभृथे । आ० श्रौ० ३।६।२१ ।
(६) कृताकृतं वेदस्तरणम् । आ० श्रौ० ३।६।२३ ।

हृदयशूलस्यानुमंत्रणप्रकार: -

प्रायश्चित्त होमानन्तरं होतुर्मैत्रावरुणयो: अग्निपशुकेव्यवस्य । तीर्थेन निष्क्रम्य, पूर्वगुहितहृदयशूलं भूमौ प्रदिाप्य 'शुगसियो स्मान् द्वेष्टियं च० इति मन्त्रेणानुमन्त्र्यते । सर्वे अनुमंत्रयेयुरुपउपस्पृशेयुश्च ।

अनुमंत्रणविधि: -

'द्विपेराज्ञोवरुणस्य०' इति त्रय: सूक्तमन्त्रा: पठनीया:[१] ।

अनुमन्त्रणे ।

समिद्ग्रहणं समिधादानं च विधि: -

शूलं अनवेक्षमाणप्रत्यायन्त: तिस्र: समिध गृह्णन्ति । एतत् समिद् ग्रहणं समन्त्रकं भवति । (१) अग्ने: समिदसि तेजोऽसि० इति प्रथमसमित् (२) एधोस्ये धिषीमहि' द्वितीया 'समिदसि समेधिषीमहि' तृतीयासमित् एवं प्रकारेण समिद् ग्रहणं कृत्वा, आहवनीयमेत्य होता - आहवनीयं 'आपोअद्यान्वचारिषं' इति मन्त्रेणोपतिष्ठते । तत्र - तिष्ठन्त: समिधा अभ्यादधाति, यथागृहीत क्रमेण - (१) अग्निसमेदसि० ।

---

(१) तीर्थेन निष्क्रम्य० । तस्योपरिष्टादपउपस्पृशन्ति द्वीपेराज्ञो० आ० श्रौ० ३।६।२३-२४ ।

(२) सोमस्य समिदसि० । (३) पितॄणां - समिदसि० होमोयं तिष्ठन्नेव भवति । ततः प्राकृतसंस्था जपः "ओं वमे स्वरश्चमे०" इति[१]।

एतत्तु आश्वलायनानुसारेण निरूढपशुबन्ध विवरणम् । आश्वलायनसूत्रस्य प्रयोगदीपकाकारेण श्रीमन्नारायणभट्टेन सुविस्तृतः प्रपञ्चितः । अस्मिन् - प्रकृतिभूते आश्वलायनानां सर्वत्र बौधायन सापेक्षत्वं दृश्यते । हौत्र प्रयोगेतु समग्रतया आश्वलायनोनिरपेक्षः इति ।



---

(१) अस्पृष्ट्वाऽनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तः समिधः - कुर्वीत तिस्रस्त्वत्र एकैकः । अग्नेः समिदसि० । एत्योपतिष्ठन्तआपो० । ततः संस्थाजप इति पशुतन्त्रम् । आ० श्रौ० ३।६।२५-२८ ।

# पंचमाध्याय:

## चतु:पर्वात्मक चातुर्मास्य यागस्य बौधायनाश्वलायनाभ्यां समग्ररूपेण विचार:

## चातुर्मास्य यागः

### प्रथमं वैश्वदेवपर्व : चातुर्मास्यः -

चतुर्षु मासेषु भवः चातुर्मास्यः । चातुर्मास्यानि इति कर्म समुदाय नाम । सोऽयं चातुर्मास्य यागः प्रकारचतुष्टयेन सम्पद्यते । (१) यावज्जीवम्, (२) सांवत्सरिकम् । (३), द्वादशाहम्, (४) यथाप्रयोग इति ।

### यावज्जीव सांवत्सरिकपक्षयोः

यावज्जीव सांवत्सरिकपक्षयोः चातुर्मास्य यागानुष्ठानं समान तन्त्रेणैव भवति ।

### तयोः कालः -

(१) फाल्गुनीपौर्णमास्यां वैश्वदेवपर्वाख्यं कर्म ।

(२) आषाढ्यां पौर्णमास्यां वरुणप्रघास पर्वाख्यं कर्म ।

(३) कार्तिक्यां पौर्णमास्यां दिनद्वय साध्यं साकमेध पर्वाख्यं कर्म ।

(४) पुनः फाल्गुन्यां पौर्णमास्यां शुनासीरीय पर्वाख्यं कर्मेति ।

यावज्जीवपक्षे प्रतिसंवत्सरे च सूत्रोक्तकाले चातुर्मास्य यागानुष्ठानं कुर्यात् ।

द्वादशाहपक्ष: -

उत्तरायणे शुक्लपक्षे प्रतिपदि वैश्वदेवपर्वाख्यं कर्म । चतुर्थ्याम् - वरुणप्रघासपर्वाख्यं कर्म ।

अष्टम्यां नवम्यां च -

दिनद्वयसाध्यं साकमेधपर्वाख्यं कर्म । द्वादश्यां - शुनासीरीय पर्वाख्यं कर्म ।[१]

यथाप्रयोग: -

यथाप्रयोगपक्षे क्रमेण चत्वारि पर्वाणि अनुष्ठेयानि । प्रथम-

---

(१) वैश्वदेवहविर्भिर्यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्याम्० उदगयन आपूर्यमाण पक्षस्य पुण्याहे प्रयुञ्जीत बौ० श्रौ० ५।४ । अथाऽतश्चातुर्मास्यानिव्याख्यास्याम:
- - - - - - - - - - - - - - - - - - - - -
यथा प्रयोगमित्यौपमन्यव:, बौ० श्रौ० २१।१-६ । कथमुखलु- यावज्जीव प्रयुक्तानां - - - - - - - - - - - - - - - -
द्वादशरात्र्यो भवन्तीति, बौ० श्रौ० २३।८ । चातुर्मास्यानि प्रयोक्ष्यमाण: पूर्वेद्युर्वैश्वानरपार्जन्याम्, आ० श्रौ० २।१५-१ । सांवत्सरिकाणि । तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोग:, आ० श्रौ० २।१४।२-३ ।

दिवसे वैश्वदेवपर्व । द्वितीये दिवसे वरुणप्रघासपर्व । तृतीयचतुर्थाभ्यां: - साकमेधपर्व । पञ्चमेदिवसे - शुनासीरीयपर्व एवं रूपेण यथाप्रयोगे चातुर्मास्य यागानुष्ठानं पञ्चादिनात्मकमेव भवति । उपर्युक्ता: चातुर्मास्य यागस्यानुष्ठान कालाः आश्वलायन बौधायनयोः समानरूपेण वर्णिताः ।

चातुर्मास्य याजिनां व्रतचर्या -
-------------------------

नानृतं वदेत् । न मांसमश्नीयात् । न स्त्रियमुपेयात् । अजात-पुत्र ऋतौ भार्यामुपेयात् । ऊर्ध्वादि वासांसि नक्षालयेत् । न मृन्मयेन पिबेत् । शूद्राय उच्छिष्टं न दद्यात् । स्वयमेव पादप्रक्षालनं कुर्यात् । तिल-व्यतिरिक्तं कौशोधान्यं लवणं च नाश्नीयात् । आसन्द्यां न शयीत । मध्यान्हे रात्रौ च आज्यपूर्वं हविष्यमश्नीयात् । अन्यस्यार्त्विज्यं न कुर्यात् । तैलाभ्यङ्गेण दन्तधावनं च न कुर्यात्[१] । एते नियमा अपि उभयोः सूत्रयोः समाना एव ।

-------------------------------------------------

(१) अत्र तद् द्वादशाहं व्रतं चरति । तस्यै तद् व्रतम् । नाऽनृतं वदति नमांसमश्नाति । ----------------------
न कौशीधान्य मन्यत्र तिलेभ्यः, बौ० श्रौ० २।२० । पौर्ण-मासेनेष्टवा चातुर्मास्य व्रतान्युपेयात् ।
केशान्निकर्तयीत । श्मश्रूणि वापयीताधः शयीत मधुमांस-लवणस्त्र्यवलेखनानि वर्जयेत् । ऋतौ भार्यां मुपेयात्,

आ० श्रौ० २।१६।२२-२५ ।

पाशुकचातुर्मास्य याग: -

सांवत्सरिकादिषु त्रिषु पर्वेषु चातुर्मास्य याग: त्रि: प्रकारेण भवति[1]।

(१) ऐष्टिक चातुर्मास्य याग: ।

(२) पाशुक चातुर्मास्य याग: ।

(३) सौमिक चातुर्मास्य याग: ।

सांवत्सरिकादिषु त्रिषु चातुर्मास्य कालपर्वेषु इष्ट्या, पशुना, सोमेन वा अनुष्ठान संभव: । यथाप्रयोग पर्वे - ऐष्टिक चातुर्मास्य यागानुष्ठानमेव भवति । सौमिकचातुर्मास्य यागे - इष्टितन्त्रं सवनीयेष्टिवत् । अत्र सोमशब्देन अग्निष्टोम एव गृह्यते । पाशुक चातुर्मास्ये - ऐन्द्राग्नं पशुमालमेतेति विशेष: । पाशुकचातुर्मास्ये पाशुकतंत्रं निरूढतंत्रं पशुबन्ध तन्त्रेण भवति ।

आश्वलायनसूत्रे पर्वचतुष्टययुक्तं चातुर्मास्य यागस्वरूपम् । "चातुर्मास्यानि प्रयोक्ष्यमाण: पूर्वेद्युर्वैश्वानरपार्जन्याम्"[2] । इति सूत्रवचनात् यागा-

---

(१) सौमिक्य: । आ० श्रौ० २।१५।४ । सोमेन यजेतावक्ती पशुना, आ० श्रौ० २।२०।६ ।

(२) आ० श्रौ० २।१५ ।

रंभात् पूर्वेद्युः वैश्वानर पार्जन्येष्टेः विधानम्[1] । देवताहविश्च - अस्यां इष्ट्यां द्वे देवते (१) वैश्वानरः, (२) पार्जन्येति । हविः - वैश्वानरो द्वादश कपालः पुरोडाशः । पार्जन्यश्चरुः ।

आश्वलायनमतेन याज्यानुवाक्ये

वैश्वानरस्य - "वैश्वानरो अजीजनत्०"[2] इति पुरोनुवाक्या । "पृष्टोदिवि पृष्टो अग्निः पृथिव्यां०"[3] इति याज्या ।

पर्जन्यस्य - "पर्जन्याय प्रगायत०"[4] । इति पुरोनुवाक्या । "प्रवातावान्तिपतयन्ति विद्युतः०"[5] इति याज्या ।

---

(१) औपवसथ्येऽहन् द्विहविषमारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुम्, बौ० श्रौ० ५।१ ।

(२) वैश्वानरो अजीजन दग्निर्नो नव्यसीं मतिम् । क्षयावृधानओजस, आ०श्रौ० २।१५।२ ।

(३) ऋ० सं० म० १।९८।२ ।

(४) ऋ० सं० ७।१०२।१ ।

(५) ऋ० सं० ५।८३।४ ।

बौधायनमतेन -

-------------

वैश्वानरस्य - "वैश्वानरोनऊत्या[1]" इति पुरोनुवाक्या ।

"पृष्टोदिविपृष्टो०" इति याज्या ।

पर्जन्यस्य - "पर्जन्याय प्रगायत०[2]" इति पुरोनुवाक्या

"अच्छावदत०" इति याज्या ।

अग्न्याधेय प्रभृत्यात उपांशु हविषः, आ० श्रौ० २।१५ ।
इयमिष्टिः उपांशु प्रधाना भवति । चातुर्मास्य यागस्य औपवसथ्येहनि द्विहविष्कं आरम्भणीयेष्टिं कुर्यात् । अत्र देवतेपि वैश्वानरपार्जन्यौ इति बौधायनः ।
इयमिष्टिः उभयोरपि सूत्रयोः समानैव ।

आश्वलायनमतेन वैश्वदेव पर्व -

---------------------

आश्वलायन श्रौतसूत्रे हौत्रप्रधानत्वात् अस्मिन् वैश्वदेवपर्वणः
उपक्रमे अग्निमन्थनार्थं प्रैषादेवप्रारम्भः[3] । तत्र प्रथमस्तावत् अग्निमन्थनीया कृत्वः होतुः प्राकृतवेद्यां सामिधेनीस्थाने स्थित्वा अभिहिंकार पुर्वकं "अभित्वा

---------------------------------------------

(१) तै० सं० १।५।११ ।

(२) तै० ब्रा० २।४।५ ।

(३) प्रातर्वैश्वदेव्यां प्रेषितोऽग्निमन्थनीया अन्वाह
आ० श्रौ० २।१६।१ ।

देवसवित रित्याथा: यज्ञेन यज्ञमयजन्त देवा इति परिधानीया ऋचोन्ता: सामिधेनीवत् पठनं विहितम् । तत: सामिधेनी मन्त्रपाठे "पृथुपाजाअमर्त्यं" इति द्वौ ऋचौ धाय्यारूपेण पठनीयौ[1] ।

नवप्रयाजा:[2] -
-----------

अत्र पौर्णमासेष्टिवत् आदित: चतुर: - प्रयाजान् पठित्वा नवप्रयाज संख्या परिपूरणार्थं चतुर्णां प्रयाजानां विधानं कृतमस्ति ।

ते च यथा -
-----------

(१) दुरो अग्नआज्यस्य व्यन्तु ३ वौ ३ षट् ।
(२) उषासानक्ताग्न आज्यस्य वीतां वौ ३ षट् ।
(३) दैव्या होताराग्न आज्यस्य वीतां वौ ३ षट् ।
(४) तिस्रो देवीरग्न आज्यस्य वीतां वौ ३ षट् ।

अन्तिम: प्रयाजा प्राकृतवदेव । अन्तिमे प्रयाजे - (१) अग्नि:, (२) सोम:, (३) सविता, (४) सरस्वती, (५) पूषा,

-----------------------------------------------

(१) पश्चात् सामिधेनी स्थानस्य --------------
धाय्ये विराजौ, आ० श्रौ० २।१६।१-६, ऋ०सं० ३।२७।५-६ ।
(२) नवप्रयाजा: प्रागुक्ताच्चतुर आवपेतदुरो -----------
व्यन्त्विति, आ० श्रौ० २।१६।६ ।

(६) स्वतवसोमरुत:, (७) विश्वेदेवा:, (८) द्यावापृथिवी, इति अष्टौ देवता आवाप्या:[१] । इमा एव प्रधानदेवता: वैश्वदेव पर्वण: ।

आश्वलायन प्रधानदेवतानां याज्यानुवाक्ये एते मन्त्रा: -

---

(१) अग्नि: - "अग्निर्मूर्धादिव: ककुत्०"[२] इति पुरोनुवाक्या ।
"भुवो यज्ञस्य रजसश्चनेता०"[३] इति याज्या ।
(२) सोम: - "सोमयास्ते मयोभुव:"[४] इति पुरोनुवाक्या ।
"यातेधामानिदिविया पृथिव्याम्०"[५] इति याज्या ।
(३) सविता - "आविश्वदेवं सत्पतिं०"[६] इति पुरोनुवाक्या ।
"वाममद्य सवित:०"[७] इति याज्या ।
(४) सरस्वती - "पावकान: सरस्वती०"[८] इति पुरोनुवाक्या ।
"पावीरविकन्याचित्रायु:०" इति याज्या ।

---

(१) अग्नि: सोम: सविता सरस्वती पूषा मरुत: स्वतवसो विश्वेदेवा-द्यावापृथिवी, आ० श्रौ० २।१९।१० ।
(२) ऋ० सं० ८।४४।१६ ।
(३) ऋ० सं० १०।८।६ ।
(४) ऋ० सं० १।९१।९ ।
(५) ऋ० सं० १।९१।४ ।
(६) ऋ० सं० ५।८२।७ ।
(७) ऋ० सं० ६।७१।६ ।
(८) ऋ० सं० १।३।१० ।

(५) पूषा - "पूषन् तवव्रते वयं०" इति पुरोनुवाक्या [1] ।

"शुक्रन्ते अन्यद्यजतन्ते अन्यत्०" इति याज्या [2] ।

(६) मरुतस्स्वतवसः - "इहे हवः स्वतवसः०" इति पुरोनुवाक्या [3] ।

"प्रचित्रमर्कं गृणते तुराय०" इति याज्या [4] ।

(७) विश्वेदेवाः - "विश्वेदेवासआगत०" इति पुरोनुवाक्या [5] ।

"येकेचज्मा महिनो अहिमाया०" इति याज्या [6] ।

(८) द्यावापृथिवी - "महोद्यौः पृथिवीचन०" इति पुरोनुवाक्या [7] ।

"प्रपूर्वजेपितरानव्यसीभिः०" इति याज्या [8] ।

स्विष्टकृति विराजौ संयाज्ये इति वचनात् -

याज्यानुवाक्ये इमे भवतः - "प्रेद्धोअग्ने०" इति पुरोनुवाक्या [9] ।

"इमो अग्ने०" इति याज्या [10] ।

---

(१) ऋ० सं० ६।५४।६ ।

(२) ऋ० सं० ६।५८।१ ।

(३) ऋ० सं० ७।५६।११ ।

(४) ऋ० सं० ६।६६।६ ।

(५) ऋ० सं० २।४१।४३ ।

(६) ऋ० सं० ।

(७) ऋ० सं० १।२२।१३ ।

(८) ऋ० सं० ७।५३।२ ।

(९) ऋ० सं० ७।१।३ ।

(१०) ऋ० सं० ७।१।१८ ।

अत्र विशेषः[1] -

---

अस्मिन् पर्वणि स्वतवत् गुणविशिष्टोमरुतो देवता आश्वलायन-सूत्रे स्वीकृता । अथ च तेषां मरुतां याज्यानुवाक्ययोर्विधानं कृतमस्ति । तेन यत्र कुत्रचित् शाखान्तरभेदेन निर्गुणानामपि मरुतां एते एव याज्यानुवाक्ये भवतः । प्रकरण पठितत्वात् गुणशब्दस्य च स्तुत्यर्थतयाऽप्यन्वयसंभवात् । इति नारायणवृत्तिकारः । स्विष्टकृदादि इडोपाह्वानान्तं प्राकृतवदेव ।

अनुयाजाः[2] -

---

अस्मिन् पर्वणि नवानुयाजाः विहिताः । प्राकृतौ अनुयाजौ आदिमौ पठित्वा तत ऊर्ध्वं इमाः षट् संख्याकाः अनुयाजाः अत्र आवपनीयाः । अन्ते देवो अग्निः स्विष्टकृदिति प्राकृतोऽनुयाजः । ते च यथा --

(१) देवोद्वारो वसुवने वसुधे यस्य व्यन्तु ।

(२) देवी उषासानक्ता वसुवने वसुधेयस्यवीताम् ।

(३) देवीजोष्ट्री वसुवने वसुधे यस्य वीताम् ।

(४) देवो ऊर्जाहुती वसुवने वसुधे यस्य वीताम् ।

---

(१) आ० श्रौ० पृ० सं० ६५ ।

(२) नवानुयाजाः षडूर्ध्वं प्रथमाद्देवोर्द्वारो वसुवने वसुधे यस्य व्यन्तु - - - - - - - - - - - - - - - - - - -
देवोस्तिप्रस्तिप्रोदेवोर्वसुवने वसुधे यस्य व्यन्त्वति, आ०श्रौ० २।१६।

(५) देवा दैव्याहोतारा वसुवने वसुधे यस्य वीताम् ।

(६) देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधे यस्य व्यन्तु ।

इति नवानुयाजाः ।

वाजिनयागः[1] -

अनुयाजानन्तरं सूक्तवाक - शंयुवाक्योः कर्मणोः उपरिष्टात् वाजिनयागो भवति । अत्र वाजिनयागकरणे विकल्पोऽपि उक्तः । अनुयाजानन्तरं वा सूक्तवाकानन्तरं वा शंयुवाकानन्तरं वेति । वाजिनयागे द्रव्यं वाजिनमिति । वाजिभ्योद्देशेन अत्र वाजिनयागे याज्यानुवाक्ये[2] एते भवतः -

'शंनो भवन्तु वाजिनो हवेषु०'[3] इति पुरोनुवाक्या ।

'वाजेवाजेवत वाजिनोनो०'[4] इति याज्या ।

वाजिनयागे याज्यान्ते अनुवषट्कारो[5] विहितः । यत्र सानुवषट्कृता याज्या

---

(१) अनुयाजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद्वाजिभ्यो वाजिनमनावाक्याऽऽदेशम्, आ० श्रौ० २।१६ ।

(२) शंनो भवन्तु वाजिनो हवेषु वाजेवाजेऽवतवाजिनोनः, आ० श्रौ० २।१६।१४ ।

(३) ऋ० सं० ७।३८।७ ।

(४) ऋ० सं० ७।३८।८ ।

(५) अग्नेवीहीत्यनुवषट्कारो वाजिनस्याग्ने वीहीति वा, आ० श्रौ० २।१६ ।

भवति तत्र अनुवषट्कारान्ते अनुमन्त्रणमपि द्विवारं भवति[1]। वाजिनयागे याज्या मन्त्रपठने ऊर्ध्वंज्ञु[2]: - अनवानत्वं[3] विहितम् । अतः याज्या मन्त्रोच्चारणादौ होताऊर्ध्वंजानुर्भूत्वा याज्यां पठति, याज्यापाठान्ते पुनः पूर्ववत् भूत्वा अनुवषट् करोति ।

वाजिनभक्षणम्[4] -
--------------

वाजिनभक्षणमिडामिव उपह्वानपूर्वकं कुर्यात् ।

उपह्वानक्रमः[5] -
------------

होता अध्वर्युं प्रति अध्वर्युरुपह्वयस्व - ततः ब्रह्माणं, आग्नीध्रं, एवमेव अध्वर्युः, ब्रह्मा, आग्नीध्र, यजमानाः क्रमेण उपह्वानं कुर्युः । होतुः

---

(१) यत्र क्वचैकसंप्रैषे द्वौ वषट्कारौ समस्तावेव तत्र-
द्विरनुमन्त्रयेत, आ० श्रौ० २।१६ ।

(२) ऊर्ध्वज्ञुरनवानं याज्याम्, आ० श्रौ० २।१६ ।

(३) अनवानमनुच्छ्वसन्निति । देवत्रातभाष्ये ।

(४) वाजिनभक्षमिडामिव प्रतिगृह्योपहवमिच्छेत्,
आ० श्रौ० २।१६ ।

(५) अध्वर्युः उपह्वयस्व ब्रह्मन्नुपह्वयस्वाग्नीदुपह्वयस्वेति,
आ० श्रौ० २।१६ ।

प्राथम्यात् होता "यन्मेरेतः प्रसिच्यते०"[1] इति सूत्रोक्त मन्त्रेण वाजिनभक्षणं करोति । वाजिनभक्षो प्राणभक्षपक्ष एवोक्तः । शेषं कर्म पौर्णमासतन्त्रेणैव समापयेत् । "एतदन्ते पौर्णमासेनेष्ट्वा चातुर्मास्य व्रतान्युपेयात्[2] ।" केशान्निवर्तयीत[3] आद्योत्तमयोः पर्वणोः अनेन सूत्र वचनेन वैश्वदेव पर्वसमाप्तौ यजमानस्य व्रतप्रतिज्ञा केशवापनादि कर्तव्यतया विहिता । आश्वलायनमतेन वैश्वदेवपर्वविधिः ।

बौधायनमतेन वैश्वदेव पर्व -

---

वैश्वदेव पर्वणः पूर्वेद्युः आरम्भणीयां इष्टिं कुर्यात्[4] । ततः वैश्वदेव पर्वणि विश्वेभ्यो देवेभ्यो वत्सापाकरणं कुर्यात्[5] । सान्नाय्यार्थे सायं दोहविधिः एवमन्तं समापयेत्[6] ।

अथ वैश्वदेवपर्व -

---

प्रातः अग्निहोत्र होमानन्तरं अपां प्रणयनात् पूर्वं आज्यसंस्कारं कृत्वा चतुर्गृहीतं स्रुचि गृहीत्वा, पञ्चहोतारं उपांशु विधिना आहवनीये जुहुयात् ।

---

(१) यन्मे रेतः प्रसिच्यते० आ० श्रौ० २।१६ ।

(२) आ० श्रौ० २।१६ । (३) तत्रैव २।१६ ।

(४) औपवसथ्येऽहन् द्विहविषमारम्भणीयमभिष्टिं निर्वपति, बौ०श्रौ० ५।१

(५) अथाऽस्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति,बौ०श्रौ० ५।१ ।

(६) वैश्वदेवं ------------------------

सांनायास्य वावृता तूष्णीं वा, बौ० श्रौ० ५।१ ।

अत्र अन्वारब्धे यजमाने अध्वर्युः स जुहोति[१]। उपस्थानवरदानान्तं कर्मकुर्यात्। पश्चात् कूष्माण्डहोमं, सारस्वतहोमं च कुर्यात्।

देवताद्रव्यन्च[२९] -

(१) अग्निः - अष्टाकपालः पुरोडाशः ।

(२) सोमः - चरुः ।

(३) सविता - द्वादशकपालः पुरोडाशः ।

(४) सरस्वती - चरुः ।

(५) पूषा - चरुः ।

(६) मरुतः - सप्तकपालः पुरोडाशः ।

(७) विश्वेदेवाः - आमिक्षाम् ।

(८) द्यावापृथिवी - एककपालः पुरोडाशः ।

---

(१) अथ प्रातर्हुते अग्निहोत्रे ---------------
यजमाने स्वाहेति, कां० श्रौ० ५।१ ।

(२) आग्नेयमष्टाकपालं निर्वपति ---------------
द्यावापृथिव्यमेककपालमिति, कां० श्रौ० ५।१ ।
आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं० द्यावापृथिव्यमेक-
कपालम्, तै० सं० १।८।२ । यदामिक्षा । यद्व्युद्दराति०
वैश्वदेव्यामिक्षा भवति० वाजिनमानयति० तै० ब्रा०
१।६।२-३ ।

याज्यानुवाक्ये[1] -

(१) अग्नि: - "अग्निर्मूर्धादिव: ककुत्०" इति पुरोनुवाक्या ।
"भुवोयज्ञस्य०" इति याज्या ।

(२) सोम: - "त्वं न:सोमविश्वत:०" इति पुरोनुवाक्या ।
"याते धामानि०" इति याज्या ।

(३) सविता - "तत्सवितुर्वरेण्यं०" इति पुरोनुवाक्या ।
"अचित्तीयच्चकृमा०" इति पुरोनुवाक्या ।

(४) सरस्वती - "चोदयित्रीसूनृतानां०" इति पुरोनुवाक्या ।
"पावीरवीकन्याचित्रायु:०" इति याज्या ।

(५) पूषा - "पूषा गा अन्वेतु०" इति पुरोनुवाक्या ।
"शुक्रं ते अन्यद्यजतं०" इति याज्या ।

(६) मरुतस्स्वतवस: - "तेऽवर्धन्तस्स्वतवसो०" इति पुरोनुवाक्या ।
"प्रचित्रमर्कं०" इति याज्या ।

(७) विश्वेदेवा: - "विश्वेदेवाऋतावृध०" इति पुरोनुवाक्या ।
"विश्वेदेवा: शृणुतेमं०" इति याज्या ।

(८) द्यावापृथिवी - "द्यावान: पृथिवी इमं०" इति पुरोनुवाक्या ।
"प्रपूर्वजेपितरा०" इति याज्या ।

---

(१) सर्वे याज्यानुवाक्यामंत्रा: तै० सं० ४।१।११ ।

(६) स्विष्टकृति - "अग्निंस्तोमेनबोध" इति पुरोनुवाक्या ।

"सहव्यवाउमर्त्यः०" इति याज्या ।

वाजिनयागस्य याज्यानुवाक्ये - "शंनोभवन्तुवाजिनो०" इति पुरोनुवाक्या ।

"वाजेवाजेवतवाजिनः०" इति याज्या ।

देवताहविर्निर्वापे प्रोक्षणानन्तरं आलम्बनान्ते प्रातर्दोहः । ततः अधिवपनात् प्राक् चरुपुरोडाशीयानां हविर्द्रव्याणां विभागः । कपालोपधानमधिश्रयणञ्च गार्हपत्ये[१] । शृतानां हविर्द्रव्याणां उपस्तरणाभिघारणानुमन्त्रणम् । ततः उद्वासनम्[२] । उपस्तृते चमसे आमिक्षां व्युद्धृत्य, तदुपरि किञ्चित् वाजिनमानीय, आज्याभिघारणम्[३] । वेद्यां हवींषि आसादनम्[४] । आसादितेषु हविष्षु आहवनीय समीपे अग्निमन्थनम्[५] । पश्चात् - नवप्रयाजाः, प्रधानदेवतानां

---

(१) अध्युष्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपदधाति

- - - - - - - - - - - - - - - - - - - - - - - -

द्यावापृथिव्यमेक कपालमिति, बौ० श्रौ० ५।१ ।

(२) आनुपूर्व्यं हवींष्युद्वासयत्युपस्तीर्णाभिघारितान् पुरोडाशानभिघार्य चरून्, बौ० श्रौ० ५।२ ।

(३) अथकं सेवा चमसे वाऽऽमिक्षां व्युद्धृत्य वाजिनमानीयाऽऽथाऽऽभिघारयति, बौ० श्रौ० ५।२ ।

(४) अथैतानि संपरिगृह्याऽन्तर्वेद्यां सादयति । बौ० श्रौ० ५।२ ।

(५) अथ निर्मन्थ्यस्याऽऽवृता निर्मन्थ्येन चरति०, बौ० श्रौ० ५।२ ।

याग:, स्विष्टकृद्याग:, इडोपाह्वानादि नवानुयाजान्[1] कर्मसम्पाद्य[2] वाजिन-
याग:, वाजिनयागोयं "उपांशुचरेत्" इति बौधायन वचनात् उपांशु: अनुष्ठेय: ।
तत: वाजिनोपाह्वानम्[3], यजमान: वाजिनं प्रत्यक्षं भक्षयति, इतरे अवघ्राण-
विधिना भक्षयन्ति[4] । समिष्टयजुर्होम:[5], यज्ञविमोक:, पश्चात् व्रतविसर्जनानन्तरं
कर्म समापयेत्[6] । तत: वैश्वदेवपर्वाङ्गभूतोवपनविधि:[7] सयथा --

---

(१) अथध्मात्समिधमाददान आह - - - - - - - - - - - - - - - -
नवानुयाजानिष्ट्वा, बौ० श्रौ० ५।३-४ ।

(२) उदङ्ङत्याक्रम्य - - - - - - - - - - - - - - - - - - - -
अनुवषट्कृते हुत्वा, बौ० श्रौ० ५।४ ।

(३) हरति भक्षं स यावन्त ऋत्विज स्तेषूपहवमिष्ट्वा, बौ०श्रौ० ५।४ ।

(४) यजमान एव प्रत्यक्षं भक्षयति "यन्मेरेत: प्रसिच्यते यन्म आप्यायते
यद्वा जायते पुन: । इति सौत्रमंत्र, बौ० श्रौ० ५।४ ।

(५) समिष्टयजूंषि जुहोति यज्ञयज्ञं गच्छेष ते यज्ञो यज्ञपतेदेवागातुविद
इति । बौ० श्रौ० ५।४ ।

(६) अथ पूर्णपात्र विष्णुक्रमश्चरित्वा विसृजते व्रतम्, बौ० श्रौ० ५।४ ।

(७) अथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य-
त्रेण्याशलल्या लोहितायस्य च क्षुरेण शीर्षण्नि च वर्तयते
परि च वपते । "कृतमेव परमेष्ठ्यृतं नात्येति किंचन
- - - राध्यासमिति । पुरस्तादेवाऽग्रेऽथ दक्षिणतोऽथ
पश्चादथोत्तरतोऽथोपरिष्टात्, बौ० श्रौ० ५।४ ।
कृतमेवपरमेष्टि - - - - - - - - - - - - - - - - - -
तेनशकेयं तेनराध्यासम्, तै० ब्रा० १।५।५ । देवा
वै यद्यज्ञेऽकुर्वत । ० ते केशानग्रेवपन्त । अथश्मश्रूणि ।
अथोपपक्षाव । तै० ब्रा० १।५।६ ।

योग संख्या ···· ···· ···· ····    दिनांक···· ···· ···· ···· ···· ····

# चातुर्मास्येषु वरुण-प्रघास-विहारः

[बौधायनश्रौतसूत्रानुसारेण]







१) गार्हपत्यः
२) अन्वाहार्य पचनः
३) आहवनीयः
४) वेदिः
५) पशुबान्धिकि वेदिः (उत्तरा)
६) उत्तर वेदिः
७) चात्वालः
८) उत्कर:
९) दक्षिण वेदिः
१०) दक्षिणाहवनीयः
११) उत्तर नाभिः

(स्केल१ इंच:-४० अंगुलानि)

अध्वर्युः प्रत्यङ्मुखः प्राङ्मुखस्य वा - स्वायतन उपविष्टस्य यजमानस्य शिरसि केशान् प्रागादि दिक् चतुष्टय मध्ये चेति त्रेण्याशलल्या पञ्चधा विभजेत् । "कृतमेवपरमेष्ठिः" इत्यारम्य "तेन शक्यं तेनराध्यास" मित्यन्तं मन्त्रसमुदायं पठित्वा पञ्चधा प्रविभागेन वपनं कारयेत् । प्रतिविभागं मन्त्रावृत्तिः । ततः स्नानं स्वासने उपवेशनम्, आचमनं, भस्मधारणं, "संवत्सरीणां स्वस्ति माशास्ते"[1] इति यजमानः ब्रूते । ततः सर्वे स्वस्तिमन्त्रवाचनपूर्वकं आशिष इच्छन्ति यजमानाय । ततः यजमानः -अन्तरालव्रतान्याचरेत् । इति वैश्वदेवपर्व ।

आश्वलायनमतेन वरुणप्रघासः - वरुणप्रघासकालः -

---

चातुर्मास्य यागक्रमे द्वितीयं पर्ववरुण प्रघास इति । तस्य कालः विशेष रूपेण आश्वलायनेन प्रदर्शितः । "पञ्चम्यां पौर्णमास्यां वरुणप्रघासः"[2] इति सूत्रानुसारेण यस्यां पौर्णमास्यां वैश्वदेवपर्वणः अनुष्ठानं कृतं तामारभ्य या पञ्चमी पौर्णमासी तस्यां वरुणप्रघासनामकंपर्वानुष्ठेयमिति । वरुणप्रघास-

---

(१) संवत्सरीणां स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्ते इति सूक्तवाकः, बौ० श्रौ० ५।४, तस्माद्वैश्वदेवेन यजमानः । संवत्सरीणां स्वस्तिमाशास्ते इत्याशासीत० यद्विश्वेदेवाः समयजन्त । तद्विश्व देवस्य वैश्वदेवत्वम् ।
- तै० ब्रा० १।४।१० ।

(२) आ० श्रौ० २।१७।१ ।

कर्मणि प्राकृतवेदे: दक्षिणत: एका अपरवेदि: कर्तव्या । तत्र एक: प्रति-
प्रस्थातृनामकऋत्विक् उत्तरवेद्यां अध्वर्युसमकालमेव हविष्करणार्थं वरणीय: ।

आश्वलायन प्रयोगक्रम: -

प्रथमेष्टे: प्रतिज्ञासंकल्प: । तत: - प्राकृताहवनीयात् अग्नि-
प्रणयनम् । उभयोर्वेद्यो: प्रणयनपूर्वकमग्निस्थापनम्[1] । तत्र क्रम: - प्रथमस्तावत्
उत्तरवेद्यां अग्निस्थापनं तदनन्तरं प्राकृतवेद्यां स्थापनम्[2], पश्चात् अग्निमन्थनम्,
यद्यपि उभयोर्वेद्यो: अग्निस्थापनं विहितमस्ति, तत्रापि मथ्यमानस्य एकस्यैव
अग्नेरयं विभाग: इति कृत्वा ऊहो न कर्तव्य: । एतदर्थमेव 'अग्निमन्थनादि
समाना'[3] इति सूत्रवचनम् ।

देवताद्रव्यञ्च[4] -

| देवता | द्रव्यम् |
|---|---|
| (१) अग्नि: | व्रीहिमयोऽष्टाकपाल: पुरोडाश: । |

(१) पश्चादाशपौर्णमासिकाया - - - विज्ञायते, आ०श्रौ० २।१७।२-५ ।
(२) उत्तरमग्निमनुव्रजन्नुत्तरा: आ० श्रौ० २।१७।६ ।
(३) अग्निमन्थनादि समाना वैश्वदेव्या । आ० श्रौ० २।१७।१३ ।
(४) हविषां तु स्थाने षष्ठप्रभृतीनामिन्द्राग्नी मरुतो वरुण: क:
आ०श्रौ० २।१७।१४ । आग्नेयमष्टाकपालमिति - - - - - -
कायमेककपालम्, बौ० श्रौ० ५।५, ऐन्द्राग्नमेकादशकपालं मारुती-
मामिक्षां वारुणीमामिक्षां कायमेककपालं, तै० सं० १।८।३ ।

(२) सोम: - व्रीहिमयश्चरु: ।

(३) सविता - द्वादशकपाल: पुरोडाश: ।

(४) सरस्वती - व्रीहिमयश्चरु: ।

(५) पूषा - संयावरूपश्चरु: ।

(६) इन्द्राग्नी - एकादशकपाल: पुरोडाश: ।

(७) मरुत: - आमिक्षा ।

(८) वरुण: - आमिक्षा ।

(९) क: - एककपाल: पुरोडाश: ।

उत्तरवेद्यां पाशुककर्मण: समनुष्ठाने सति इन्द्राग्नी द्वादशकपाल-स्थाने ऐन्द्राग्न: पशु:[१] निरूढ पशुबन्धोक्तपाशुकतन्त्रेण कर्तव्य: ।

वाजिनयाग: -

प्रधाने यागान्ते वैश्वदेवपर्ववत् वाजिनयाग: समनुष्ठेय: ।

वाजिनोपह्वाने विशेष: -

अस्मिन् वरुणप्रघास कर्मणि प्रतिप्रस्थातु: वृतत्वात् सोपि उप-ह्वाने अधिकृत: - "प्रतिप्रस्थाता वाजिनेतृतीय:"[२] इति सूत्रवचनात् - उपहव-

---

(१) ऐन्द्राग्न: पशु:, आ० श्रौ० २।१७।१६ ।

(२) आ० श्रौ० २।१७।१५ ।

याचने होत्रध्वर्यो: पश्चात् अयं "प्रतिप्रस्थाता" तृतीय स्थानिक: । उपहव-
याचनं होत्रादि यजमानान्तं भक्षणमपि तथैव । पर्वण: समाप्तौ अवभृथेष्टि:[1]।
आश्वलायनेन वरुणप्रघासपर्वान्ते विभाषया अवभृथेष्टि: उक्ता[2] । इत्थ-
माश्वलायनेन वरुणप्रघास: प्रपञ्चित: ।

याज्यानुवाक्ये -
-------------

वैश्वदेवोक्तस्य आद्यस्य देवतापञ्चकस्य याज्यानुवाक्ये पूर्वमेव
उक्ते अग्रिमा: चतस्र: याज्यापुरोनुवाक्या: इन्द्राग्न्यादित: क: पर्यन्तानाम्[3]
इमा: याज्यानुवाक्या: सूत्रे उक्ता: --

(१) इन्द्राग्नी - "इन्द्राग्नीअवसागतम्०"[4] इति पुरोनुवाक्या ।
"श्नथद्वृत्रमुतसनोतिवाजि"[5] इति याज्या ।
(२) मरुत: - "मरुतो यस्य हि क्षये०"[6] इति पुरोनुवाक्या ।
"अरा इवेद चरमा अहेव०"[7] इति याज्या ।

---

(१) संस्थिायाबवभृथं व्रजन्ति, आ० श्रौ० २।१७।१६ ।
(२) तत्रावभृथेष्टि: कृताकृता, आ० श्रौ० २।१७।१७ ।
(३) इन्द्राग्नी अवसागतं - - - - - - - - - - - - - - - - - -
समवर्तताग्र इति, आ० श्रौ० २।१७ ।
(४) ऋ० सं० ७।९४।७ ।
(५) ऋ० सं० ६।६०।१ ।
(६) ऋ० सं० १।८६।१ ।
(७) ऋ० सं० ५।५८।५ ।

(३) वरुणः - "इमं मे वरुण श्रुधी०[1]" इति पुरोनुवाक्या ।
"तत्वायामि ब्रह्मणा०[2]" इति याज्या ।
(४) कः - "कयानश्चित्रआभुव०[3]" इति पुरोनुवाक्या ।
"हिरण्यगर्भः समवर्तताग्रे०[4]" इति याज्या ।

बौधायनमतेन याज्यानुवाक्ये --

वैश्वदेवोक्तास्य आद्यस्य देवता पंचकस्य याज्यानुवाक्ये पूर्वमेवोक्ते । अग्निभाः चतस्रः याज्यापुरोनुवाक्याः इन्द्राग्न्यादितः "कः" पर्यन्तानामिमाः याज्यानुवाक्याः[5] --

(१) इन्द्राग्नी - "इन्द्राग्नीरोचनादिवः०" इति पुरोनुवाक्या ।
"श्नथद्वृत्रमुतसनोति०" इति याज्या ।
(२) मरुतः - "प्रवर्षणिभ्यः पृतना०" इति पुरोनुवाक्या ।
"मरुतो यस्य हि क्षये०" इति याज्या ।
(३) वरुणः - "अवते हेडोवरुण०" इति पुरोनुवाक्या ।
"उदुत्तमं वरुणपाश०" इति याज्या ।
(४) "कः" - "कयानश्चित्रआभुव०" इति पुरोनुवाक्या ।
"को अद्य युङ्क्ते०" इति याज्या ।

---

(१) ऋ० सं० १।२५।१९ । (२) ऋ० सं० १।२४।११ ।
(३) ऋ० सं० ४।३१।१ । (४) ऋ० सं० १०।१२१।१ ।
(५) सर्वे मन्त्राः, तै० सं० ४।२।११ ।

(५) स्विष्टकृति - "अग्नेर्यसुपथारायेऽ" इति पुरोनुवाक्या ।
"आदेवानामपिऽ" इति याज्या ।

बौधायनमतेन वरुणप्रघास: -
-------------------------

अत्र बौधायनेन क्रमश: यज्ञसंभारा: कल्प्यन्ते ।

संभारा:[१] -
---------

(१) श्वेतशल्य: तिस्र:, (२) लोहितक्षुर:, (३) द्वात्रिंशत्-कपालानि, (४) आमिक्षास्थाल्यौ, (५) तिस्र: वरुस्थाल्य:, (६) पञ्चमेक्षणानि, (७) द्विशताधिकानि शमी पर्णानि, (८) करीरसक्तुव:, (९) ऐषीकं शूर्पम्, (१०) शुक्ला-ऊर्णा, (११) यवतुषा:, (१२) पिष्टमय: सशृंगोमेष:, (१३) पिष्टमयी सशृंगामेषी, (१४) प्राकृतानि - अग्निहोत्र हवण्यादीनि इष्टि पात्राणि द्वि गुणितानि । (१५) द्विगुणित: इध्मा बर्हि:, (१६) दार्शपौर्णमासिकीव दक्षिणा ।

एतान् संभारान् सम्पाद्य वरुणप्रघास पर्व कर्म आरभेत् । अत्र पर्वणि एककालावच्छेदेन उभयोर्वेद्यो: कर्मसम्पादनार्थमेक: अधिक: अध्वर्यु:

---------------------------------------------

(१) स उपकल्पयते त्रेणीं शल्लीं - - - - - - - - - - - - - - दार्शपौर्णमासिकीव दक्षिणा, बौ० श्रौ० ५।५ ।

वरणीयः[1] । स एव प्रतिप्रस्थातृ नाम्ना सर्वैः उच्यते ।

प्रयोगक्रमः -

पूर्वेद्युः शाखापवित्रादि सम्पाद्य सायं दोहान्तं कर्म कुर्यात्[2] । तत्र प्रतिप्रस्थाता "मरुतां वरुणस्य चोद्देशेन "इहे हवो मरुतो रमयन्तु गावः" इति मन्त्रपाठं कुर्यात् । प्रातर्हुते अग्निहोत्रे अध्वर्युरेव अग्नीन् परिस्तृणाति[3] । उत्तरस्यां वेद्यां वैश्वदेव पर्ववत् पात्राण्या सादयेत्[4] । प्रतिप्रस्थाता[5] दक्षिणस्यां वेद्यां प्राकृतानि पात्राणि सादयेत् । अत्र प्रणीताप्रणयनं अध्वर्युरेव कुर्यात् । आग्नेयादि पञ्चहवींषि वैश्वदेववत् निरूप्य ऐन्द्राग्नं निर्वपेत् । करम्भपात्राणि, मेषं, मेषीं, शमीपर्णानि करीरसक्तून् एकोर्क शूर्पञ्च सह हविर्भिः प्रोक्षेत् । उभावध्वर्यू स्वानि-स्वानि पात्राणि प्रोक्षणादि संस्कारान् कुरुतः[6] । हविः श्रपणार्थं कपालोपधानम् ।

---

(१) द्वावध्वर्यू, बौ० श्रौ० ५।५ ।

(२) अथाऽस्यैतदहर्दयावत्सा - - - - - - - - - - - - - - - - - -
तूष्णीं वा, बौ० श्रौ० ५।५ ।

(३) अथ प्रातर्हुतेऽग्निहोत्रे पृष्ठ्यां स्तीर्त्वाऽपः प्रणीय निर्वपति ।
बौ० श्रौ० ५।५ ।

(४) समानं कर्म पर्यग्नि करणात्, बौ० श्रौ० ५।५ ।

(५) अध्वर्युरेवोत्तरस्यां वेद्यां हरति प्रतिप्रस्थाता दक्षिणस्याम्, बौ०श्रौ०५।५

(६) अंत्रतानि करम्भ पात्राण्यभि पर्यग्नि कुर्वन्ति मेषीं च मेषं च
- - - - - - - - - - - - - - - - - - शूर्पमिति, बौ० श्रौ० ५।५

ततः आदितः पञ्चदिकानां वैश्वदेववत् उपवाय देषामुत्तरतः ऐन्द्राग्न्यं एकादशकपालान्युपदध्यात् । ततः प्रतिप्रस्थातः तदुत्तरतः उपवेशेन बहुङ्गारान्निरूह्य मारुतस्थाल्यां प्राक्दोंह्यमानीय मेक्षणेन आलोड्य श्रपयेत् । एवमेवतदुत्तरतः वारुणस्थालीमधिश्रित्य, तदुत्तरतः कायस्य एककपालमुपदध्यात् । एवं हविषामधिश्रयणम् । ततः प्रतिप्रस्थाता मारुत्यां स्थाल्यां तप्तेपयसि दध्यानीय, अथ च अध्वर्युः वरुणोद्देशेन वरुणस्थाल्यां दध्यानीय आमिक्षां निर्माय, तस्माद्वाजिनं पृथक्कृत्य निदधाति । ततः करम्भपात्राणि मेषादिभिः सह - हविर्भिः पर्यग्निकरणं करोति । शेषं इष्टितन्त्रमुभयोर्वेद्योः समानमेव । करम्भपात्राणि वरुणदेवत्यानि भवन्ति । ततः उत्तरवेद्याः व्याघारणविधिः ।

उत्तरपरिग्रहप्रैषः[१] -
---

उत्तरपरिग्रहप्रैषे द्विवचनान्त ऊहः कर्तव्यः ।

हविरासादनम्[०] -
---

उभौ अध्वर्यु आज्यस्थाल्यादीन्यादाय, दक्षिणतः प्रतिप्रस्थाता, उत्तरतो अध्वर्युश्च गार्हपत्यस्य पश्चात् प्राङ्मुखौ उपविशतः । प्रतिप्रस्थाता

---

(०) एतद्विषयकं ब्राह्मणम्, तै० ब्रा० १।६।४-५ ।

(१) उत्तरां परिग्रहां परिगृह्य०, बौ० श्रौ० ५।५ ।

व्युद्धरणस्थालीमाज्येन उपस्तीर्य, मारुतीं गार्हपत्ये पुनरभिश्रित्याभिघार्य[1] उद्वास्य, आमिक्षां किञ्चित् स्थाल्यां परिशेषयन् व्युद्धरण पात्र्यां तां प्रतिक्षिप्य, तत्र मेषीमवदाय, तस्यामुखे - शमी पर्णानि करीरसक्तून्, आमिक्षां च, अवधाय, तदुपरि किञ्चित् वाजिनमानीय "यस्त आत्मेति" मन्त्रेण हविरालम्बनं करोति[2]। अध्वर्युरपि मारुतीवत् वारुणीमुद्वासयति। तस्यां मेषमवदधाति आमिक्षां च उपवपति, वाजिनेनाभिघारयति[3]। एवं उभयोर्वेद्योर्मध्ये हविरासादनं कुर्याताम्। उभयोर्वेद्यो: हविरासादनानन्तरं अग्निमन्थनं[4] वैश्वदेववत् कुर्यात्। अग्निं प्रहृत्य, अभिहुत्य[5] सामिधेनीप्रैष:[6]। अग्निसम्मार्जनप्रैष:[7] अध्वर्यु: प्राकृतवेद्यां आग्नीध्र: उत्तरवेद्यां अग्निं सम्मार्ष्टि[8]।

---

(१) प्रदक्षिणमावृत्य प्रत्यन्चावाद्रवती दक्षिणत एवाध्वर्युरुत्तरत: प्रतिप्रस्थाता, बौ० श्रौ० ५।६।

(२) मारुतीं प्रतिप्रस्थाता कंसे वा चमसे वामिक्षां व्युद्धृत्य तस्यां मेषीमवदधात्यथास्यैं शमीपर्ण करीरसक्तु नामिक्षामित्युपवपति वाजिनमानीयाथाभि घारयति, बौ० श्रौ० ५।६।

(३) वारुणीमध्वर्युस्तथैव कंसे वा चमसे वामिक्षां व्युद्धृत्य तस्यां मेषमवदधात्यथास्यैं शमी पर्णानि - - - - - - - - - - अथाभिघारयति, बौ० श्रौ० ५।६।

(४) अध्वर्युरेवनिर्मन्थ्यस्यावृता निर्मन्थ्येन चरति, बौ० श्रौ० ५।६।

(५) प्रहृत्याभिहुत्य, बौ० श्रौ० ५।६।

(६) अग्नयेसमिध्यमानायानुब्रूहीति, बौ० श्रौ० ५।७।

(७) अध्वर्युरेवसं प्रैषमाहाग्नीदग्नीं स्त्रिस्त्रि: संमृड्ढीति, बौ० श्रौ० ५।७।

(८) संमृष्ट उत्तरोऽग्निर्भवत्यसं मृष्टो दक्षिणत:, बौ० श्रौ० ५।७।

प्रतिप्रस्थातृ यजमान पत्न्योः संवादस्वरूपम्[1] -

अत्र पर्वणि प्रतिप्रस्थातृ यजमानपत्न्योः संवादस्वरूपं श्रुतिरेव निदर्शयति । प्रतिप्रस्थाता पत्नीं पृच्छति - पत्नि । कस्तेजारः ? पत्नी "असौ" इति पदेन तं दर्शयति । तत्र श्रुतिः यज्जारं सन्तं न प्रब्रूयात्, प्रियं ज्ञातिं रुन्ध्यात् । असौ मे जारः इति वाक्येन तस्य निदर्शनम् । इत्थं संवादस्वरूपम् ।

ततः ऐषिके शूर्पे करम्भ पात्राणि समोप्य प्रतिप्रस्थाता पत्न्यै प्रयच्छति[2] । तं शूर्पं पत्नी शिरसि निदधाति[3] । अथ एनां दक्षिणद्वारोपनिष्क्रम्य दक्षिणेन अन्वाहार्यपचनं दक्षिणेनोत्तरवेदी परीत्य प्राचीमुदानयन् एनं मन्त्रं वाचयति[4] --

---

(१) अथ प्रतिप्रस्थाता पत्नीं पृच्छति ----------------
निर्दिशेत्, बौ० श्रौ० ५।७ । पत्नीं वाचयति० यज्जारं सन्तं न प्रब्रूयात् । प्रियं ज्ञातिरुन्ध्यात् असौ मेजारः इति निर्दिशेत् ।
तै० ब्रा० १।६।४-५ ।

(२) अंसत्राणि ----------------------
पत्न्यै प्रयच्छति, बौ० श्रौ० ५।७ ।

(३) तानि पत्नी शीर्षन्नधि निधत्ते, बौ० श्रौ० ५।७ ।

(४) अथैनां दक्षिणया द्वारोपनिष्क्रमय्य ------------
सजोषस इति, बौ० श्रौ० ५।७, प्रघास्यान् हवामहे०
तै० सं० १।८।३ ।

प्रघास्यान् हवामहे मरुतो यज्ञवाहस: । करम्भेण सजोषस: ।। अध्वर्युरुत्तर-मार्गेणागत्य दक्षिणस्या वेदे: पुरस्तात् प्रत्यङ्०मुखस्तिष्ठति - तस्य दक्षिणतो यजमान: तस्य दक्षिणत: यजमानपत्नी । यजमान: पत्नी हस्तात्शूर्पेण सह करंभ पात्राणि गृहीत्वा शिरसि - किंचिन्निधाय, तस्योपरि शूर्पं निधायाऽप्रणवां पुरोनुवाक्यां वदेत्[१] । पुरोनुवाक्या - "मो षूणइन्द्रपृत्सु-देवा:०[२]" इति । पत्न्या सह यजमानो याज्यां ब्रूयात्[३] । याज्या - यद्ग्रामेयदरण्ये०[४] पठेत् । वरुणायेदं नममेति त्यागं पठेत् । शूर्पमग्नावनुप्रहरेत् । अध्वर्यु: अनुप्रहृतं शूर्पमनुमन्त्रयते । अनुमन्त्रणमन्त्र: - अक्रन् कर्मकर्मकृत्[५] इति । तत: तत: होतृवरणम्[६], नवप्रयाजा: प्रयाजे उभौ पृथक् जुहुत: । चतुर्थाष्टमयो: समानं उभयोरपि भवत: । नवप्रयाजान् इष्ट्वा आज्यभागान्तं प्रचरत उभौ ।

---

(१) अंत्राग्नि करम्भ पात्राणि - - - - - - - - - - - - - - -
पुरोऽनुवाक्या मन्वाह, बौ० श्रौ० ५।७ ।

(२) मो षूणइन्द्र - - - - - - - - - - - - - - - - - - - -
वरुदैवतेगो:, बौ० श्रौ० ५।८, तै० सं० १।८।३ ।

(३) उभौ याज्यां पत्नी च, बौ० श्रौ० ५।८ ।

(४) यद्ग्रामे - - - - - - - - - - - - - - - - - - - - - -
स्वाहेति, बौ० श्रौ० ५।८ । यद्ग्रामेयदरण्ये०
तै० सं० १।८।३ ।

(५) अंत्रतदंष्णोकं शूर्पमग्नावनुप्रहरत्यपि वाद्भिरभ्युक्षा भुंक्ते
व्यवयतोऽध्वर्युरनुमन्त्रयतेऽक्रन् कर्मकर्मकृत:, बौ० श्रौ० ५।८ ।
अक्रन् कर्मकर्मकृत: ० तै० सं० १।८।३ ।

(६) प्रसिद्धं होतारं वृणीते, बौ० श्रौ० ५।८ ।

प्रतिप्रस्थाता उपरमति । ततः अध्वर्युः आग्नेयादि पौष्णान्तं वैश्वदेववदिष्ट्वा ऐन्द्राग्नं पुरोडाशं वषट्कृते जुहोति[१]।

ततः प्रतिप्रस्थाता जुह्वामुपस्तीर्य उत्तरवेद्यां आमिक्षामवद्यन् आह - मरुद्भ्योऽनुब्रूहि इति । प्रथमामिक्षा अवदानेन सह शमीपर्णं करीरसक्त्वा मिक्षास्तोकानामर्द्धमवद्यति । द्वितीयामिक्षावदानेन सह शमीपर्णं करीरसक्त्वामिक्षास्तोकात् मेषीं च अवदाय, आक्रम्य, आश्राव्य प्रत्याश्राविते आहमरुतो यजेति, वषट् कृते जुहोति[२]। ततः प्राकृतवेद्यामध्वर्युः वारुण्याः प्रतिप्रस्थातृवत् अवद्यन् वरुणोद्देशेनमेषमवद्यति पूर्ववत् वषट्कृते जुहोति[३]। अध्वर्युरेव कायेन प्रचरति कमुद्दिश्य वषट्कृते जुहोति[४]। अथस्विष्टकृद्यागः । स्विष्टकृते उभौ जुहुतः[५]। अध्वर्युरुत्तरवेदिकेग्नौ बत्वा मिक्षाणानि अनुप्रहरति । प्रतिप्रस्थाता स्वमेक्षणं स्वाग्नौ अनुप्रहृत्य यथायतनं स्रुचौ आसादयति[६]।

---

(१) प्रसवमाकांक्षतः - - - - - - - - - - - - - - - - - - - -
अथाध्वर्युरुपरमति, बौ० श्रौ० ५।८ ।

(२) अथ प्रतिप्रस्थाता मारुत्या अवद्यन्नाह - - - - - - - - - -
वषट्कृते जुहोति, बौ० श्रौ० ५।८ ।

(३) अथाध्वर्युर्वारुण्यामवद्यनाह० वषट्कृते जुहोति, बौ० श्रौ० ५।८ ।

(४) उपांशवेक कपालेन चरति कायानुब्रूहि कं यजति, बौ० श्रौ० ५।८ ।

(५) अथ स्विष्टकृताचरत० - - - - - - - - - - - - - - - - - -
आहुतीर्जुहुतः, बौ० श्रौ० ५।८ ।

(६) अंक्तानि मेक्षणान्याहवनीययोरनु प्रहरतो० - - - - - - - - -
- - - - - - - - - - - - स्रुचः सादयित्वा, बौ० श्रौ० ५।८ ।

प्राशित्रावदानम्[1] -

अध्वर्युः इडापात्र्यां आग्नेयादि ऐन्द्राग्नान्तान्यवदाय, इडापात्रं प्रतिप्रस्थात्रे प्रयच्छति । प्रतिप्रस्थाता मारुत्या इडामवदाय अध्वर्यवे इडापात्रं प्रयच्छति । ततः अध्वर्युः वारुण्याऽवदाय, एककपालस्य आश्रयादवदाय, अभिघार्य इडां होत्रे प्रयच्छति । मार्जनान्तं प्राकृतो विधिः । प्रतिप्रस्थाता इडान्वारम्भः इडाभक्षणञ्च करोति ।

दक्षिणादानविधिः -

इत्युक्त्वा अन्वाहार्यं दक्षिणेति । ततः हविरुच्छिष्टोद्वासनं, स्रुचोः व्यूहनं, तृणमनुप्रहरणं, शंयुवाकं, स्रुक्विमोकं च कुर्यात्[2] । ततो वैश्वदेव-पर्ववत् वाजिन यागानुष्ठानं भवति । अत्र उभौ अध्वर्युः प्रतिप्रस्थाता च वाजिनो यजेति, वषट्कृते सः उभौ जुहुतः । अनुवषट्कारसहितौ च । वाजि-नोपाह्वाने प्रतिप्रस्थाता तृतीयः, भक्षणे चतुर्थः । पत्नीसंयाजान अध्वर्युरेव कुर्यात् । वेदवाचने द्विवचनान्तऊहः कर्तव्यः । प्रायश्चित्त होमान्तमुभौ पृथक् कुरुतः । उत्करे उपवेशौ निगूहनेऽपि द्विवचनान्तऊहः । व्रतविसर्जनात् पूर्वं वारुणीनिष्कासेन अवभृथमेयात् । उदकतीरं गत्वा अवभृथेष्टिं कुर्यात् । ततः अवभृथेष्ट्यन्ते प्रकृतिवत् व्रतविसर्जनं कुर्यात् । इति वरुणप्रघासः ।

---

(१) प्राशित्रमवदायेडामवद्यति, बौ० श्रौ० ५।८ ।

(२) बौ० श्रौ० ५।९ ।

योग संख्या···· ···· ···· ····                                                                 दिनांक···· ···· ···· ···· ···· ····

# चातुर्मास्येषु साकमेध-विहारः

(बौधायन श्रौतसूत्रानुसारेण)

१ गार्हपत्यः
२ अन्वाहार्यपचनः
३ आहवनीयः
४ वेदिः
५ पाशुबन्धिकीवेदिः
६ उत्तरवेदिः
७ चात्वालः
८ उत्करः
९ उत्तरनाभिः
१० पैतृकीवेदिः
११ प्रणीतान्वाहार्यपचनः







(स्केल- १ इंच : ४० अंगुलानि)

साकमेधपर्व - आश्वलायन श्रौतसूत्रे साकमेधाख्यं पर्व साकमेधकाल: -

एतत् साकमेधाख्यं पर्वकर्म, वैश्वदेव-वरुण प्रघास पर्वणो: अनन्तरं भवति। यथा वरुणप्रघासपर्वण: सकाशात् तृतीयस्यां पौर्णमास्यां ऐन्द्राग्नपशोरनुष्ठानम्, तथैव तदनन्तरं मासद्वयात् परं साकमेधपर्वण: अनुष्ठानं कुर्यात्[1]।

साकमेध: -

साकमेध इति कर्मसमुदायस्य नाम। अनीकवदादीनां आदित्यान्तानां इष्टिकर्मणां 'साकमेध' इति नाम्ना व्यवहार: क्रियते। यस्यां पौर्णमास्यां साकमेधो यष्टव्य: तस्य पूर्वेद्यु: एकैकस्मिन् सवने एकैका इष्टि: अनुष्ठेया[2]।

प्रात:सवनम् -

प्रात:सवने अनीकवत्[3] गुणवन्तमग्निमुद्दिश्य प्रथमा इष्टि: भवति। इयमिष्टि: पौर्णमासतन्त्रेण अनुष्ठेया।

---

(१) तथा तत: साकमेधा:, आ० श्रौ० २।१८।१।
(२) पूर्वेद्युस्तिस्र इष्टयोऽनुसवनम्, आ० श्रौ० २।१८।२।
(३) प्रथमायामग्निरनीकवान्, आ० श्रौ० २।१८।३।

याज्यानुवाक्ये[1] -

अस्यां प्रथमेष्टौ 'अनीकवन्तमूतये०' इति पुरोनुवाक्या । 'सैनानीकेन सुविदत्रो अस्मे०'[2] इति याज्या । शेषं पौर्णमासवद् भवति ।

माध्यन्दिनसवनम् -

माध्यन्दिनसवने सान्तपनगुण[3]विशिष्टं मरुतं उद्दिश्य द्वितीया इष्टिः कर्त्तव्या अत्र वृधन्वन्तावाज्य[4]भागौ ।

याज्यानुवाक्ये[5] -

अत्र 'सान्तपना इदं हविः०'[6] इति पुरोनुवाक्या ।
'यो नो मरुतो०'[7] इति याज्या ।

---

(१) अनीकवन्तमूतयेऽग्निं गीर्भिर्हवामहे । सनः पर्षदतिद्विषः । सैनानीकेन सुविदत्रो अस्मे इति, आ० श्रौ० २।१८।३ ।
(२) ऋ० सं० २।६।६ ।
(३) मरुतः सान्तपनाः, आ० श्रौ० २।१८।४ ।
(४) उत्तरस्यां वृधन्वन्तौ, आ० श्रौ० २।१८।४ ।
(५) सांतपना इदं हविर्यो नो मरुतो अभिदुर्हृणायुरिति आ० श्रौ० २।१८।४ ।
(६) ऋ० सं० ७।५९।९ ।
(७) ऋ० सं० ७।५९।८ ।

इयमिष्टिः प्रकृतिवदनुष्ठेया ।

उत्सवनम् -

----------

उत्सवने गृहमेधीय संज्ञाविशिष्टमरुद्देवतोद्देशेन इयमिष्टिरनुष्ठेया [1] । न इयमिष्टिः आज्यभागप्रभृति इडोपाह्वानान्ता संतिष्ठते [2] । अस्या इष्टेर्नाम गृहमेधीयेष्टिरिति प्रसिद्धिः । पुष्टिमन्तौ आज्यभागौ [3] । स्विष्टकृति विराजौ संयाज्ये, ते संयाज्ये "अयाडग्निः" इति निगदरहिते भवतः [4] ।

याज्यानुवाक्ये [5] -

------------

अत्र "गृहमेधासआगत०"[6] इति पुरोनुवाक्या ।

"प्रबुध्न्याव ईरते०"[7] इति याज्या ।

आश्वलायनसूत्रे आम्नातत्वात् एते एव याज्यानुवाक्ये गृहमेधीये भवतः ।

---

(१) मरुद्भ्यो गृहमेधेभ्यः, आ० श्रौ० २।१८।५ ।

(२) उदाऽऽज्यभाग प्रभृतीडान्ता, आ० श्रौ० २।१८।५ ।

(३) पुष्टिमन्तौ । आ० श्रौ० २।१८।७ ।

(४) विराजौ संयाज्ये अनिगदे । आ० श्रौ० २।१८।७ ।

(५) गृहमेधास आगत प्रबुध्न्या व ईरते महां असीति,

आ० श्रौ० २।१८।६ ।

(६) ऋ० सं० ७।५६।१० ।

(७) ऋ० सं० ७।५६।१४ ।

एवं तिस्रः इष्टयः साकमेधपर्वणः पूर्वेद्युः सवनक्रमेण अनुष्ठेयाः । "एतस्यां रात्र्यां अन्नं प्रसुवीरन्"[1] अस्मिन् सूत्रे रात्र्यामिति वचनात् इयं तृतीया-गृहमेधीया इष्टिः रात्रावेव परिसमाप्यते । "तस्या विवासे पौर्णदर्वं जुहुयुः"[2] रात्र्याः - पश्चात् भागो विवासकाल इति विवासकालोनाम प्रबोधकालः । तस्मिन् समये दर्विहोमाख्यं कर्म भवति । दर्विहोमोनाम पौर्ण-दर्वमिति दर्विहोमकालविषये विविधाः पक्षाः सूत्रे उक्ताः[3] कृष्णमेरुवति वा मेघेरुवति वा ब्रह्मपुत्र शब्देन आग्नीध्रं सम्बोध्यराव्यन्ति । अस्मिन् दर्वि-होमोक्ते याज्यानुवाक्ये मन्त्रे शतक्रतुलिङ्गात् - शास्त्रान्ते ऐन्द्रं पौर्णदर्व-मित्याम्नानाच्च अस्य कर्मणः प्रधानदेवता इन्द्र एव भवति ।

याज्यानुवाक्ये -

अत्र "पूर्णादर्विंपरापत०"[4] इति सूत्रोक्त पुरोनुवाक्या ।

"देहि मे ददामिते०"[5] इति सूत्रोक्ता याज्या ।

---

(१) आ० श्रौ० २।१८।१० ।

(२) आ० श्रौ० २।१८।११ ।

(३) कृष्णेरवाणे । स्तनयित्नौवा । आग्नीध्रं हैकेरावयन्ति च ब्रह्मपुत्रं वदन्तः । आ० श्रौ० २।१८।१२-१४ ।

(४) पूर्णादर्वि परावत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो, आ० श्रौ० २।१८।१५ ।

(५) देहि मे ददामि ते नि मे धेहि नि ते दधे । अपामित्यमिव संभरकोऽम्बा ददते ददिति । आ० श्रौ० २।१८।१५ ।

एतदन्तमेव कर्मसमाप्तिर्भवति ।

क्रीडेनेष्टिः -

दर्विहोमसमाप्तौ क्रीडिनेष्टेरनुष्ठानं भवति[1]। इयमिष्टिः पौर्णमासतन्त्रवत् भवति । आज्यभागौ परोदावार्त्रघ्नौ[2] भवतः ।

आज्यभागयोः पुरोनुवाक्ये एते भवतः -

अग्नेः - "उतब्रुवन्तुजन्तव:०"[3] इति पुरोनुवाक्या ।

सोमः - "अयं कृत्नु गृभीत:०"[4] इति पुरोनुवाक्या ।

प्रधानदेवता - "मरुतः क्रीडिनः ।

याज्यानुवाक्ये[5] -

"क्रीडंवः शर्धोमारुतम्०"[6] इति पुरोनुवाक्या ।

---

(१) मरुद्भ्यः क्रीडिभ्य उत्तरा, आ० श्रौ० २।१८।१६ ।
(२) उत ब्रुवन्तु जन्तवोऽयं कृत्नुरगृभीत इति परोदावार्त्रघ्नौ आ० श्रौ० २।१८।१७ ।
(३) ऋ० सं० १।७४।३ । (४) तत्रैव ८।७९।१ ।
(५) क्रीडं वः शर्धो मारुतमत्यासो न ये मरुतः स्वञ्चः आ०श्रौ० २।१८।१८
(६) ऋ० सं० १।३७।१ ।

"अत्यासोनये मरुत: स्वन्व:" इति याज्या[1] ।

स्विष्ट कृति एते संयाज्ये भवत:[2] --

अत्र "जुष्टोदमूना अतिथिर्दुरोणे०" इति पुरोनुवाक्या[3]
"अग्नेशर्धमहते सौभगाय०" इति याज्या[4] ।

शेषमिष्टितन्त्रं समानमेव ।

माहेन्द्रेष्टि: -
------------

एतत् इष्टिकर्म महाहविरिति नाम्नायाज्ञिकै: साकमेधपर्वणि व्यवह्रियते । अस्यां इष्टिकर्मणि वाजिनाभाव:, वाजिनाभावादेव आमिक्षाभाव: इति सिद्धमेव अवभृथोपि अत्र कर्मणि नोक्त:[5] ।

प्रधानदेवता : (१) अग्नि: । (२) सोम: । (३) सविता ।
(४) सरस्वती । (५) पूषा । (६) इन्द्राग्नी ।

---

(१) ऋ० सं० ७।५६।१६ ।
(२) जुष्टोदमूना अग्ने शर्ध महते सौभगायेति संयाज्ये ।
आ० श्रौ० २।१८।१६ ।
(३) ऋ० सं० ५।४।५ ।
(४) ऋ० सं० ५।२८।३ ।
(५) वाजिनावभृथवर्जं माहेन्द्रयुक्ता वरुणप्रघासै: ।
आ० श्रौ० २।१८।२० ।

(७) इन्द्रः । (८) विश्वकर्मा । एताः अष्टौ प्रधानदेवताः ।
"हविषां तु सप्तमादीनां स्थान इन्द्रो वृत्रेन्द्रो महेन्द्रो वा" देवतानां
मध्ये या सप्तमो इन्द्राख्या देवता तत्र विभाषया ग्रहणमाश्वलायनेन
कृतमिति । (१) इन्द्रः केवलः - (वृत्रेन्द्रः, महेन्द्रो वा ), (२) अपरा
विश्वकर्मा इति[1] । एषु एक एव देवतापक्षः स्वीकार्यः ।

याज्यानुवाक्ये -

पूर्वतनानां प्रधानदेवतानां याज्यानुवाक्याः - वरुणप्रघास
पर्वणि उक्ताः लिखिताश्च । अत्र विशेषः लिख्यते[2] । वृत्रहन्तुरिन्द्रस्य --

"आतूनइन्द्रवृत्रहन्" इति पुरोनुवाक्या[3] ।

"अनुतेदायि मह इन्द्रियाय०" इति याज्या[4] ।

---

(१) हविषां तु सप्तमादीनां स्थान इन्द्रो वृत्रेन्द्रो महेन्द्रो वा
विश्वकर्मा च । आ० श्रौ० २।१८।२१ ।

(२) आतुन इन्द्र वृत्रहन्ननु ते दायिमह
इन्द्रियाय विश्वकर्मन् हविषा-
वावृधानो या ते धामानि परमाणि
यावमेति, आ० श्रौ० २।१८।२२ ।

(३) ऋ० सं० ४।३२।१ ।

(४) ऋ० सं० ६।२५।२८ ।

विश्वकर्मण: -

"विश्वकर्मन् हविषावावृधान:"[1] इति पुरोनुवाक्या ।

"यातेधामानि परमाणि यावमा०"[2] इति याज्या ।

शेषमिष्टितन्त्रं समानम् ।

पित्र्येष्टि: -

चातुर्मास्य प्रधानवेदे: दक्षिणस्यां दिशि पित्र्येष्टि-विहारं स्वतन्त्रं निर्माय तत्र पित्र्येष्टे: अनुष्ठानं कुर्यात् । एतदर्थमेव आश्वलायनेन "दक्षिणाग्नेरग्निमतिप्रणीयपित्र्या"[3] । इति विशिष्टं सूत्रं प्रणीतमस्ति । प्राकृतविहारस्थितदक्षिणाग्ने: अग्निमानीय पित्र्येष्टिदेशं गत्वा तत्र निर्मिते आयतने - अग्नौ निधाय, तस्मिन्नेवाग्नौ पित्र्येष्टिकर्म कुर्यात् । अनेन पित्र्येष्टौ दक्षिणाग्ने: प्रधानत्वं सिद्धं भवति । अस्यामिष्टौ अग्नेरुपस्थान-विधरुक्तत्वात् आहवनीयायतनादाहवनीयाऽग्ने: विहरणं सिद्धं भवति । एतत्सर्वकर्म दक्षिणाभिमुखमनुष्ठेयम् । दक्षिणाभिमुखस्य तात्पर्यं दक्षिणादिगेव प्राचीमित्वा कर्म कुर्यात् । पित्र्येष्टि: शंयुवाकान्ता[4] भवति । अत्र जपादि

---

(१) ऋ० सं० १०।८१।६ ।

(२) ऋ० सं० १०।८१।५ ।

(३) आ० श्रौ० २।१९।१ ।

(४) सा शंयवन्ता । आ० श्रौ० २।१९।२ ।

मंत्रा लुप्ता भवन्ति[1] । जपलोपे देवता आवाहनादि मन्द्रस्वरेण कर्तव्यम् ।
अत्राह आश्वलायनः - "होतारमवृथा वषट्कारानुमन्त्रणाभिहिंकारवर्जम्"[2]
इति सूत्रवचनात् अनुमन्त्रणलोपप्रतिषेधात् जपादीनां जपानामुपलक्षणार्थ-
मिति गम्यते । जपशब्देन अत्र केवल जप एव न गृह्यते । अतः "नान्यस्योपांशु
प्रयोज्यस्यापि" तेन होतृनिगदस्य अलोपः सिद्धो भवति । लुप्ताजपा यस्याः
सा लुप्तजपा "होतारमवृथै" त्यस्य निगदस्यैक देशस्य उपांशुत्व सिद्ध्यर्थं
जपेदिति वचनेन जपशंकया - लोपशंकानिवृत्त्यर्थं तद्वर्जनवचनमितरयोः प्राप्तस्य
प्रतिषेधस्य प्रतिप्रसवार्थमेव । अतः अस्यां पित्र्येष्ट्यां यानि कर्माणि प्रकृतौ
प्राङ्मुखानि भवन्ति तानि कर्माणि अस्यां पित्र्येष्ट्यां दक्षिणामुखानि
कर्तव्यानि[3] । होत्रप्रधानत्वात् आश्वलायनेन अत्र विशेषधर्मान् उक्त्वा, सामि-
धेनीतः प्रयोगमुक्तवान् ।

सामिधेनी संज्ञकानां मन्त्राणां स्थाने विशेष विधानम् -

---

"उशन्तस्त्वानिधीमहि०"[4] इत्येको मंत्रः त्रिवारमनुच्छ्वसन् अनु-
ब्रूयात्[5] । "ताः सामिधेन्यः" इति वचनात् ता एव सामिधेन्यः इत्येव

---

(१) लुप्तजपा । आ० श्रौ० २।१६।३ ।

(२) आ० श्रौ० २।१६।३ ।

(३) तस्यां प्राञ्चि कर्माणि दक्षिणा । आ० श्रौ० २।१६।४ ।

(४) ऋ० सं० १०।१६।१२ ।

(५) उशन्तस्त्वा निधीमहीत्येतां त्रिरनवानं, आ० श्रौ० २।१६।६ ।

गम्यते । तासां सामिधेनीनामुक्तेन प्रणवेन "आवह देवान् पितॄन्यजमानाय" इति निगदं सन्धाय अवसानं कर्तव्यम् । एवं स्पापिऋायायां प्रतिपत्तिः[1] भवति । सर्वत्र सामिधेन्यन्ते देवा इज्यन्ते । अत्र तु देवाश्च पितरश्च इज्यन्ते इति विशेषः ।

प्रधानदेवताः[2] -
---------------

(१) पितॄन् सोमवतः । विकल्पे सति सोमं पितृमन्तमिति ।

(२) पितॄन् बर्हिषदः ।

(३) पितॄनग्निष्वात्तान् । विकल्पे अग्निष्वात्ताः पितरः ।

(४) यमम् । विकल्पे वैवस्वन्तमिति ।

देवता-नाम् आवाहनम् -
-------------------

आवाहने आवह देवान् पितॄन्यजमानाय इत्येतदन्तमुक्त्वा अवसाय, जीवातुमन्तौ आज्यभागौ आवाह्य प्रधानदेवताः - आवाहयेत् । स्विष्टकृतिः - "अग्निं होत्रायावह" इत्येतस्य स्थाने "अग्निं कव्यवाहनं" मिति ब्रूयात्[3] ।

---------------------------------------------------

(१) तासामुक्तेन प्रणवेनाऽऽवह देवान्पितॄन्यजमानायेति प्रतिपत्तिः आ० श्रौ० २।१९।७ ।

(२) पितरः सोमवन्तः सोमो वा पितृमान्पितरो बर्हिषदः पितरोऽग्नि ष्वात्ता यमः, आ० श्रौ० २।१९।२३ ।

(३) अग्निं होत्रायाऽऽवह स्वं महिमानमावहेत्ये तस्य स्थानेऽग्निं कव्यवाहनमावाहयेत्, आ० श्रौ० २।१९।८ ।

प्रयाजे - "बर्हिर्वर्जं चतुरः प्रयाजान् यजति[1] ।

आश्रावणप्रत्याश्रावणे आगूर्वषट्कारयोश्च स्थाने विशेषः -

आश्रावणे[2] - "ओ ३ श्रावय" इत्यस्य स्थाने ओं ३ स्वधा इति ।

प्रत्याश्रावणे[3] - "अस्तु श्रौषडित्यस्य स्थाने "अस्तु स्वधा" इति ।

प्रत्याश्रावणे आश्वलायनेन "अनुस्वधा[4]" इति विकल्प उक्तः ।
अत्र स्वधा पाठे प्लुतः पठितव्यः । तस्य स्वरूपम् - "अस्तुस्वा ३ धा"
स्वधा शब्दः दीर्घान्त एव प्रयोक्तव्यः ।

आगूरुच्चारणे[5]: -

"ये यजामहे" इत्ये तस्य स्थाने ये स्वधा इति ।

वषट्कारे[6] - वषट्कारे स्वा ३ धानमः इत्युच्चारणं कर्तव्यम् । उपरितनानामाश्रावणादीनां मन्त्राणां मध्ये यदक्षरस्थाप्लुतिः सा नित्या[7] भवति ।

(१) न बर्हिष्मन्तौ प्रयाजानुयाजौ, आ० श्रौ० २।१६।१२ ।
(२) ओं स्वधेत्याश्रावणम्, आ० श्रौ० २।१६।२० ।
(३) ओं स्वधेत्याश्रावणम्, आ० श्रौ० २।१६।२० ।
(४) अस्तु स्वधेति प्रत्याश्रावणम्, आ० श्रौ० २।१६।२० ।
(५) ये स्वधेत्यागूर्य स्वधामह इति वा, आ० श्रौ० २।१६।२१ ।
(६) स्वधानम इति वषट्कारः । आ० श्रौ० २।१६।२१ ।
(४) अनुस्वधा स्वधेति संप्रैषः । आ० श्रौ० २।१६।२० ।
(७) नित्याः प्लुतयः, आ० श्रौ० २।१६।२२ ।

देवतासु आद्ये वैकल्पिके (१) पितृणां सोमवत्त्वगुणः अथवा सोमस्य पितृमत्त्वगुणः। (२) बर्हिषदोऽग्निष्वात्ता इति च पितृणामेव गुणः।

आज्यभागयोः पुरोनुवाक्ये -

---

अत्र अग्निः - "आनो अग्ने सुचेतुना०"[1] इति पुरोनुवाक्या
सोमः - "त्वं सोममहेभगं०"[2] इति याज्या।

याज्ये नित्ये एव भक्तः।

प्रधानयागस्य याज्यानुवाक्ये -[3]

---

प्रधानयागे अत्र द्वेद्वे अनुवाक्ये भवतः[4]। याज्यात्वेकैव।

पितृन् सोमवतः -

---

"उदीरतामवरउत्परासः"[5] "त्वया हि नः पितरः सोमपूर्वे०"[6]

---

(१) ऋ० सं० १।७९।६।
(२) ऋ० सं० १।९१।७।
(३) उदीरतामवर - - - - - - - - - - - - - - - - -
महीरनु। आ० श्रौ० २।१९।२४।
(४) दक्षिण आग्नीध्र उत्तरोऽध्वर्युर्द्वे अनुवाक्ये०। आ०श्रौ० २।१९।१९।
(५) ऋ० सं० १०।१५।१।
(६) ऋ० सं० ९।९६।११।

इत्यनुवाक्ये ।

"उपहूताः पितरः सोम्यासः०"[1] इति याज्या । देवता विकल्पे – त्वं सोमप्रचिकितोमनीषाः०"[2] "सोमोधेनुं सोमोअर्वन्तमाशुं०"[3] इत्यनुवाक्ये । "त्वं सोमः पितृभिः संविदानः०"[4] इति याज्या ।

~~वेदे–~~
पितृन् बर्हिषदः –

"बर्हिषदः पितर ऊत्यर्वाक्०"[5] "आहं पितृन्० सुविदत्रां अवित्सि०"[6] इत्यनुवाक्ये । इदं "पितृभ्यो नमो अस्त्वद्य०"[7] इति याज्या ।

अग्निष्वात्ताः पितरः –

"अग्निष्वात्ताः पितर एह गच्छत०"[8] "येचेहपितरो येचनेह०"[9]

---

(१) ऋ० सं० १०।१५।५ ।

(२) ऋ० सं० १।९१।१ ।

(३) ऋ० सं० १।९१।२० ।

(४) ऋ० सं० ८।४८।१३ ।

(५) ऋ० सं० १०।१५।४ ।

(६) ऋ० सं० १०।१५।३ ।

(७) ऋ० सं० १०।१५।२ ।

(८) ऋ० सं० १०।१५।११ ।

(९) ऋ० सं० १०।१५।१३ ।

इत्यनुवाक्ये । "ये अग्निदग्धा ये अनग्निदग्धा०"[१] इति याज्या ।

यमम् -
------

"इमं यम प्रस्तरमाहिसीद०"[२] "अङ्गिरोभिरागहि०"[३] इत्यनुवाक्ये । "परेयिवांसं प्रवतोमहोरनु०"[४] इति याज्या । अत्र देवता विकल्पे सति "वैवस्वतायेनु मध्यमा याज्या"[५] इत्याश्वलायन वचनात्, यमो वैवस्वतो देवताचेत् - "अङ्गिरो भिरागहि०" इति याज्या मन्त्रः । प्रथमोक्ते - "इमं यमप्रस्तरमाहिसीद०" "परेयिवांसं प्रवतोमहोरनु०" इत्यनुवाक्ये भवतः ।

स्विष्टकृद्यागः -
-------------

स्विष्टकृद्यागे "अग्निः स्विष्टकृत् कव्यवाहनः"[६] इति विशेषवचनात् प्रकृतौ "योऽग्निः स्विष्टकृत्" तत् स्थाने कार्यकरोऽग्निः कव्यवाहनः तेन अत्र स्विष्टकृत् शब्दो न प्रयोक्तव्यः ।

---

(१) ऋ० सं० १०।१५।१४ ।
(२) ऋ० सं० १०।१४।४ ।
(३) ऋ० सं० १०।१४।५ ।
(४) ऋ० सं० १०।१४।१ ।
(५) आ० श्रौ० २।१९ ।
(६) आ० श्रौ० २।१९ ।

"येतातृषुर्देवत्राजेहमाना:०"[1] "त्वदग्नेकाव्यात्वन्मनोषा:०"[2]

इत्यनुवाक्ये । "सप्रत्नथा सहसा जायमान:०"[3] इति याज्या । स्विष्टकृति-

याज्या मन्त्रादौ निगदं न ब्रूयात् । उपर्युक्तासु अनुवाक्यासु ऋक्षु द्वयो:

अनुवाक्ययो: ऋचोर्मध्ये अनुवाक्या कार्यस्य एकत्वात् मध्ये प्रणवो न भवति ।

स्विष्टकृद्यागानन्तरं होतृब्रह्मणो: प्राकृतोपस्थं सव्यं च कृत्वा पवान्जनादि

कर्म कुर्यात् ।

हविषां प्रचार: -

---

हविषां प्रचारे होताब्रह्मा च प्राचीनावीति नौ भूत्वा कर्मकुरुत: ।

विशेष: -

---

अत्र प्रधानयागे विशेषविचार: आश्वलायनेन सूत्रे उपस्थापित: ।

"प्रकृत्यात ऊर्ध्वं वषट्कार क्रियायां चोर्ध्वमाज्यभागाभ्याम्"[4] यदि अध्वर्यव:

आज्य भागाभ्यां ऊर्ध्वं प्रकृतिवत् वषट्कार क्रियां कुर्वन्ति तदा - "अन्यन्मन्त्र-

लोपात्" इति वचनानुसारेण वषट्कारक्रियापक्षे एकैका अनुवाक्या प्राप्यते[5] ।

---

(१) ऋ० सं० १०।१५।६ ।

(२) ऋ० सं० ४।११।३ ।

(३) ऋ० सं० १।९६।१ ।

(४) आ० श्रौ० २।१९।२८-२९ ।

(५) एकैका चानुवाक्या, आ० श्रौ० २।१९।३० ।

तत्र "मध्यमाकृण्मुद्धरेदिति" । वषट्कार क्रियापदौ स्विष्टकृति संयाज्ये पृथगेवमक्त:[१] ।

"योऽग्नि: कव्यवाहन:०"[२] इति पुरोनुवाक्या ।

"त्वमग्नईडितोजातवेद:०"[३] इति याज्या ।

इडोपाह्वानविधि: -
------------------

इडोपाह्वाने प्रकृतिवत् इडानिगदमुक्त्वा - अवान्तर इडां होता प्राणमक्षणविधिना मक्षयित्वा तं भागं बर्हिषि अनुप्रहरेयु:[४] । अत्र इडामक्षणं मक्षणान्तेमार्जो नैव भवति[५] ।

अनुयाज्याग: -
-------------

अनुयाज्यागे बर्हिर्देवौ द्वावेव अनुयाजौ भवत:[६] । सूक्तवाक: शंयुवाकश्च प्रकृतिवत् भवति । एतदन्तापित्र्येष्टि: ।

---

(१) यो अग्नि: कव्यवाहनस्त्वमग्न ईडितो जातवेद इति संयाज्ये, आ० श्रौ० २।१९।३१ ।

(२) ऋ० सं० १०।१६।११ ।

(३) ऋ० सं० १०।१५।१२ ।

(४) आ० श्रौ० २।१९।३२ ।

(५) नेडायां मक्षमक्षणम् । नमार्जनम् । आ० श्रौ० २।१९।१२-१३ ।

(६) आ० श्रौ० २।१९।१२ ।

उपस्थानम् -

समाप्तायां क्रियायां दक्षिणावृत् भूत्वा - 'अयाडिष्टाजनयन्०' इति सूत्रोक्तमन्त्रेण दक्षिणाग्निमुपतिष्ठते[1] ।

अनतिप्रणीतपक्ष: -

अनतिप्रणीतपक्षे अनावृत्त्योपस्थानं भवति । तथा स्थितस्यैवाभिमुख संभवात् । उभयोरपि पक्षयोरावृत्त्य गार्हपत्याऽऽहवनीयावुपतिष्ठेत्[2] ।

उपस्थानीयाऋच्[3] -

'सुसंदृशन्त्वेति' आहवनीयम् । 'अग्निं तंमन्ये०' इति गार्हपत्यम् । गार्हपत्यं प्रादक्षिण्येन 'माप्रगामेति' सूक्तं 'अग्ने त्वं नो०' इति सूक्तं च जपन्त: अभित: गच्छन्ति[4] ।

---

(१) संस्थितायां प्राग्वाऽऽनुयाजाभ्यां दक्षिणावृतो दक्षिणाग्निमुपतिष्ठन्ते, आ० श्रौ० २।१६।३४ ।

(२) अनावृत्त्याऽनति प्रणीतस्यायाम्, आ० श्रौ० २।१६।३४-३५ ।

(३) आहवनीयं सुसंदृशं त्वेति पंक्त्या । गार्हपत्यमग्निं त मन्य इति । अथैनमाभ्रमायन्ति मा प्रगा माऽग्ने त्वं न इति जपन्त: । पूर्वेण-गार्हपत्यं०, आ० श्रौ० २।१६।३७-४० ।

(४) सुसंदृशं० ऋ० सं० १०।१५८।५ । अग्निं तं मन्ये० ऋ० सं० ५।६।१ । माप्रगाम० ऋ० सं० १०।५७।१-६ । अग्नेस्त्वं नो० ऋ० सं० ५।२४।१-

प्राकृतं गार्हपत्यं गत्वा एते सूक्ते समापयन्ति । अनुयाज्यागत: सर्वे सव्यावृता: भवन्ति ।

त्र्यम्बकेष्टि: -

त्र्यम्बकानां कर्मविशेष: । "तत्राध्वर्यव: कर्माधीयते" इत्याश्वलायन सूत्रानुसारेण अस्मिन् कर्मणि अध्वर्युणा अपेक्षितं यत् तदस्मदीयमपि कर्तव्यम् । अस्मिन् सूत्रे अध्वर्यवाधीनत्वात् "त्र्यम्बका कर्मविशेषस्य स्वरूपं दिङ्मात्रं प्रदर्शितम्[1] ।

आदित्येष्टि: -

इयमिष्टि: प्रकृतिवदनुष्ठेया । प्रधानदेवता अदिति: । पुष्टिमन्तौ आज्यभागौ । स्विष्टकृति विराजौ संयाज्ये भवत: । यद्यपि सूत्रे "आदित्यया चरन्ति[2]" एतत् वाक्यं विहितं परमवधेयमत्र अदितिरत्र देवता, न आदित्य: ।

आज्यभागस्य याज्यानुवाक्ये -

"अग्निनारयिमश्नवत्[3]" इति पुरोनुवाक्या ।

---

(१) सव्यावृतस्त्र्यम्बकान् व्रजन्ति, आ० श्रौ० २।१८।४०-४१ ।
(२) आ० श्रौ० २।१८।४२-४३ । पुष्टिमन्तौ याज्येविराजौ ।
(३) ऋ० सं० १।१।३ ।

उपस्थानम् -

समाप्तायां क्रियायां दक्षिणावृत् भूत्वा - "अयाविष्टाजनयन्०" इति सूक्तेकमन्त्रेण दक्षिणाग्निमुपतिष्ठते[1]।

अनतिप्रणीतपक्षः -

अनतिप्रणीतपक्षे अनावृत्त्योपस्थानं भवति। तथा स्थितस्यैवाभिमुख संभवात्। उभयोरपि पक्षयोरावृत्य गार्हपत्याऽऽहवनीयावुपतिष्ठेत्[2]।

उपस्थानीयाऋक्[3] -

"सुसंदृशन्त्वेति" आहवनीयम्। "अग्निं तंमन्ये०" इति गार्हपत्यम्। गार्हपत्यं प्रादक्षिण्येन "माप्रगामेति" सूक्तं "अग्ने त्वं नो०" इति सूक्तं च जपन्तः अभितः गच्छन्ति[4]।

---

(१) संस्थितायां प्राग्वाऽऽनुयाजाभ्यां दक्षिणावृतो दक्षिणाग्निमुपतिष्ठन्ते, आ० श्रौ० २।१६।३४ ।
(२) अनावृत्त्याऽनति प्रणीतपक्षायाम्, आ० श्रौ० २।१६।३४-३६ ।
(३) आहवनीयं सुसंदृशं त्वेति पंक्त्या। गार्हपत्यमग्निं त मन्य इति। अर्धेनमाभसमायन्ति मा प्रगा माऽग्ने त्वं न इति जपन्तः। पूर्वेण-गार्हपत्यं०, आ० श्रौ० २।१६।३७-४० ।
(४) सुसंदृशं० ऋ० सं० १०।१५८।५ । अग्निं तं मन्ये० ऋ० सं० ५।६।१ । माप्रगाम० ऋ० सं० १०।५७।१-६ । अग्नेत्वं नो० ऋ० सं० ५।२४।१-४ ।

प्राकृतं गार्हपत्यं गत्वा एते सूक्ते समापयन्ति । अनुयाजयागः सर्वे सव्यावृताः भवन्ति ।

त्र्यम्बकेष्टिः -

त्र्यम्बकानां कर्मविशेषः । "तत्राध्वर्युः कर्माणि धीयेते" इत्याश्वलायन सूत्रानुसारेण अस्मिन् कर्मणि अध्वर्युणा अपेक्षितं यत् तदस्मदीयमपि कर्तव्यम् । अस्मिन् सूत्रे अध्वर्युवाधीनत्वात् "त्र्यम्बका कर्मविशेषस्य स्वरूपं दिङ्मात्रं प्रदर्शितम्"[1] ।

आदित्येष्टिः -

इयमिष्टिः प्रकृतिवदनुष्ठेया । प्रधानदेवता अदितिः । पुष्टिमन्तौ आज्यभागौ । स्विष्टकृति विराजौ संयाज्ये भवतः । यद्यपि सूत्रे "आदित्यया चरन्ति"[2] एतत् वाक्यं विहितं परमवधेयमत्र अदितिरत्र देवता, न आदित्यः ।

आज्यभागस्य याज्यानुवाक्ये -

"अग्निनारयिमश्नवत्॰"[3] इति पुरोनुवाक्या ।

---

(१) सव्यावृतस्त्र्यम्बकान् ग्रन्ति, आ॰ श्रौ॰ २।१६।४०-४१ ।

(२) आ॰ श्रौ॰ २।१८।४२-४३ । पुष्टिमन्तौ याज्येविराजौ ।

(३) ऋ॰ सं॰ १।१।३ ।

"यस्मानो अमीवहा०"[1] इति याज्या ।

प्रधानस्य -

"उतत्वामदितेमहि०"[2] इत्यनुवाक्या
"महीमूषुमातरं सुव्रतानां०" इति सूत्रोक्ता याज्या ।

स्विष्टकृति -

"प्रेद्धो अग्ने०"[3] इत्यनुवाक्या ।
"इमो अग्ने०"[4] इति याज्या ।

बौधायनमतेन याज्यानुवाक्ये[5] -

अनीकवतेष्टि: - "भद्रन्ते अग्ने सहसिन्०" इति पुरोनुवाक्या ।
"सेनानीकेन०" इति याज्या ।

सान्तपनेष्टि: - "सान्तपना इदं हवि:०" इति पुरोनुवाक्या ।
"यो नो मर्त्तो वसवो०" इति याज्या ।

---

(१) ऋ० सं० १।९१।१२ ।
(२) ऋ० सं० ८।६७।१० ।
(३) ऋ० सं० ७।१।३ ।
(४) ऋ० सं० ७।१।१८ ।
(५) सर्वे मंत्रा:, तै० सं० ४।३।१३ ।

गृहमेधीया -

"गृहमेधास आगत०" इति पुरोनुवाक्या ।

"प्रबुध्नियाईरतेवो०" इति याज्या ।

स्विष्टकृति[1] - "पूर्णादर्विपरापत०" इति पुरोनुवाक्या ।

"देहि मे ददामिते०" इति याज्या ।

क्रीडेनेष्टि: - आज्यभागयो: -

"उपमेति युवति:०" इति पुरोनुवाक्या ।

"इमो अग्ने०" इति याज्या ।

प्रधानदेवतस्य - "क्रीडं व: शर्धों मारुतम्०" इति पुरोनुवाक्या ।

"अत्यासोनये मरुत:०" इति याज्या ।

स्विष्टकृति - "प्रेषामज्मेषु विथुरेव०" इति पुरोनुवाक्या ।

"उपह्वरेषुयदचिध्वम्०" इति याज्या ।

वृत्रहन्तुरिन्द्रस्य - "इन्द्रं वो विश्वतस्परि०" इति पुरोनुवाक्या ।

"इन्द्रं नरो नेमधिता०" इति याज्या ।

विश्वकर्मण: - "विश्व कर्मन् हविषा०" इति पुरोनुवाक्या ।

"विश्व कर्मन् हविषावर्धनेन०" इति याज्या ।

---

(१) तै० सं० १।८।४ ।

पित्र्येष्ट्यां याज्यानुवाक्ये[१] - आज्यभागयोः -

"अग्निः - "उशन्तस्त्वा हवामहे०" इति पुरोनुवाक्या ।
"सोमः - "त्वं सोमप्रचिकितो०" इति पुरोनुवाक्या ।

प्रधानस्य याज्यानुवाक्ये -

बौधायनमतेन अत्र प्रकृतिवत् याज्यानुवाक्ये भवतः । पितृन् सोमवतः -

"त्वयाहिनः पितरः सोमपूर्वे०" इति पुरोनुवाक्या ।
"त्वं सोम पितृभिः संविदानः०" इति याज्या ।

पितृन् बर्हिषदः - "आहं पितृन्०" इति पुरोनुवाक्या ।
"उपहूताः पितरः सोम्यासः०" इति याज्या ।

अग्निष्वात्ताः पितरः - "उपहूताः पितरः०" इति पुरोनुवाक्या ।
"बर्हिषदः पितरः०" इति याज्या ।

यमस्य - "मातलोकव्यैर्यमो०" इति पुरोनुवाक्या ।
"इमं यमप्रस्तरमाहिसीद०" इति याज्या ।

पदो यमो वंवस्वतः - "अंगिरोभिरागहि०" इति पुरोनुवाक्या ।
"अंगिरसोमः०" इति याज्या ।

---

(१) सर्वे मन्त्राः तै० सं० २।६।१२ ।

वषट्कारश्रायधी स्विष्टकृति -

"यदग्ने कव्यवाहन०" इति पुरोनुवाक्या ।

"त्वमग्न ईडितोजातवेद०" इति याज्या ।

आश्वलायन सूत्रानुसारेण चातुर्मास्य यागे साकमेघनामकं तृतीयपर्वं समाप्तम् ।

बौधायनोक्तं साकमेधपर्व -

अत्र साकमेधाख्यस्य कर्मणः प्रधानत्वात् तत्र ये अपेक्षिताः अंगभूता संभाराः, ते क्रमतो वर्ण्यन्ते ।

संभाराः[१] -

त्रीणिशल्लीं, लोहितायसस्य च क्षुरं चतुष्यानि पुरोडाश-

---

(०) अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति - - - - - - - - - - - - - - - - - - - - - - - - - - - प्रतिपुरुषमेक-
कपालान्निर्वपत्येकमतिरिक्तं, तै० सं० १।८।४-६ ।
यदग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति० - - - - - - - - - - - - - - - - - - - - - - - - - - - - आदित्यं चरुं
पुनरेत्य निर्वपति०, तै० ब्रा० १।६।६-२० ।

(१) स उपकल्पयते त्रेणीं शल्लीं लोहितायसस्य चक्षुरं चतुष्यानि
पुरोडाशकपालानि चतुश्चरुस्थालीस्तावन्तिमेक्षणानि -
पृषदाज्यायदधि, बौ० श्रौ० ५।१०।

कपालानि, चतुश्चरुस्थालीस्तावन्ति मेक्षणानि, पृषदाज्याय दधि, इति संभारा: । काल: - अस्य कर्मण: काल: आश्वलायनवदेव उक्त: ।

अनीकवतीष्टि:[1] -

---

प्रधानसङ्कल्प: साकमेध हविर्भिर्यक्ष्ये इति । सङ्कल्पं कृत्वा तस्मिन् अङ्गभूता प्रथमा इष्टि: अनीकवत्याख्या, इति कृत्वा तदर्थं पुन: अनीकवन्तमष्टाकपालेन पुरोडाशेन यक्ष्ये इति देवतोद्देशेन संकल्पं कुर्यात् । सूर्योदयात्पूर्वमेव हविर्निर्वापात्पूर्वपर्यन्तं सर्वं कर्म प्रकृतिवत् सम्पाद्य, सम्मर्शेन आदित्योदयं आकांक्षेत । उदिते सूर्ये निर्वापकर्मत: ब्राह्मणतर्पणान्ता इयमिष्टि: कर्तव्या । अस्या इष्टे: तन्त्रं पौर्णमासतन्त्र वदेव भवति ।

सान्तपनेष्टि:[2] -

---

इयमिष्टि: मध्यान्हसवने कुर्यात् । प्रधानदेवता - मरुत: सान्तपन: इति । प्रधानद्रव्यम् - व्रीहिमयश्चरु: । पञ्चप्रयाजा: । प्राकृता-वग्नीषोमावाज्यभागौ । इयमिष्टि: ब्राह्मणतर्पणान्ता एव भवति ।

---

(१) अथ पौर्णमास्या उपवसथेऽग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता । सा प्रसिद्धेष्टि: संतिष्ठते । बौ० श्रौ० ५।१० ।

(२) अथ मध्यंदिने मरुद्भ्य: सांतपनेभ्यश्चरुं निर्वपति सा प्रसिद्धेष्टि: संतिष्ठते, बौ० श्रौ० ५।१० ।

गृहमेधीयेष्टि: -

अत्र प्राकृतावाज्यभागौ[1] । प्रधानदेवता - मरुतोगृहमेधिन: इति । द्रव्यम् - पयसिश्रितं चरु:[2] । अस्यां - इध्माबर्हिषो: संभरणं नास्ति ।

ब्रह्मत्वे प्रणीता प्रणयने च विशेष: -

अप् स्थाने पयसि ऊह:, ब्रह्मन् पय: प्रणेष्यामीति ।

दोहनम्[3] -

इष्टे: प्रारंभात्पूर्वं मरुद्भ्यो गृहमेधिभ्यो देवताकृते दुग्ध-प्राप्त्यर्थं वत्सापाकरणादि सायं दोहकर्म कुर्यात् । तत् समन्त्रकं अमन्त्रकं वा कुर्यादिति विषये विविधानां आचार्याणां मतानि[4] परामृश्य स्वमतं बौधायनेनोक्तम् - "पवित्रवता पात्रेणमन्त्रवन्तमिति निगदित: तेन समन्त्रका इयमिष्टि: । इयमिष्टिरुपांशुरनुष्ठेयेति बौधायन: । अस्यामिष्टौ प्राशित्र-हरण-यजमान-भागाग-चतुर्धाकरणानि न सन्ति । योक्त्र विमोचनान्तं कर्म-

---

(१) अथाग्नये सोमायेत्याज्य भागाभ्यां चरति, बौ० श्रौ० ५।१० ।

(२) सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुं श्रपयित्वा०" बौ० श्रौ० ५।१० ।

(३) अथास्यैतदहर्मरुद्भ्यो गृहमेधिभ्यो वत्सा अपाकृता भवन्ति, बौ० श्रौ० ५।१० ।

(४) तूष्णीक इति शालीकि: ।

कृत्वा पौर्णदर्व्यर्थं क्षामकाषमवशेष्य[1] गृहमेधीयशेषं अश्नीयात्[2]। ब्रह्मिष्टः इडान्ता भवति[3]। गृहमेधीयं शेषं चरुं सर्वे भक्षयेयुः[4]।

पूर्णादर्विहोमः -

पूर्णादर्विहोमार्थं पुनः रात्रौ दोहनम्। दोहने विशेषः - ततो वत्सान् मातृभिः संवासयंति। "सवात्यौ रैवैतस्यां रात्रौ वत्सं बध्नन्ति।"[5] सवात्यौ नाम जीववत्सा मृतवत्सा च एकेन वत्सेन दुह्येते इति उच्यते। अध्वर्युः अपररात्रे उत्थाय नित्यवत्सायाः पयसाऽग्निहोत्रमपकृष्य जुहोति[6]। नित्यवत्सा इत्यनेन जीववत्सा इत्युच्यते। ततः गार्हपत्यं परिस्तीर्य उत्तरतस्तृणेषु स्रुगाकृतिं वैकङ्कतीं दर्वीं स्रुवमाज्यस्थालीं दर्भांश्च आसाद्य, प्रोक्ष्य, आज्यं संस्कृत्य, दर्वीं स्रुवञ्च निष्टप्य, सम्मृज्य, दर्व्यामुपस्तीर्य, तस्यां एतं सर्वं एव क्षामकाषमवदधाति[7]। द्विरभिघार्य[8], ततः अध्वर्युः "पूर्णादर्वीति"[9] पुरोनु-

---

(१) पूर्णदर्व्याय क्षामकाषं परिशिनष्टि, बौ० श्रौ० ५।१० ।

(२) प्रतिवेशं स्त्रीकुमारेभ्यः पचन्त्याशिता भवन्ति, बौ० श्रौ० ५।१० ।

(३) इडान्तो गृहमेधीयः संतिष्ठते, बौ० श्रौ० ५।१० ।

(४) आशिता भवन्ति, बौ० श्रौ० ५।१० ।

(५) बौ० श्रौ० ५।१० ।

(६) अथाध्वर्युरपररात्र आप्लुत्य नित्यवत्सायै पयसाग्निहोत्रं जुहोति, ५।१० ।

(७) अथैतां दर्वीं निर्णिज्योपस्तीर्य तस्यामेतं सर्वं एव क्षामकाषमवदधाति, बौ० श्रौ० ५।१० ।

(८) द्विरभिघारयति, बौ० श्रौ० ५।१० ।

(९) बौ० श्रौ० ५।१० । तै० सं० १।८।४ ।

वाक्यां पठति । पुरोनुवाक्या पाठानन्तरं "देहिमे ददामिते०"[1] इति याज्या मन्त्रपाठः । अत्र विशेषः - अत्र याज्यापाठे स्वाहाकारान्तो मन्त्रः, आहुतिप्रक्षेप समकाल एव "कृषभ रहि" प्रेषेदरे कृषभस्य शब्दकृते आहुति प्रक्षेप्या[2] । अस्मिन् होमे यजमानस्यान्वारब्धः आवश्यकः । अतः यजमानेन अन्वारब्धे इति अध्वर्युः गार्हपत्ये आहुतिं जुहोति[3] । अयं होमः पूर्णदर्विहोमः इति याज्ञिकानां समाख्या । दर्विहोमसमाप्तौ व्रीहैनेष्टिः प्रारभ्यते ।

क्रीडिनेष्टिः -
-------------

उषसा सूर्येण सहैव क्रीडिनेष्टेरनुष्ठानं भवति[4] । इयमिष्टिः पौर्णमासतन्त्रवदेव भवति ।

द्रव्यं देवता[5] च -
-------------

मरुद्भ्यः क्रीडिभ्यः सप्तकपालः पुरोडाशः । सूर्योदये काले यथा निर्वापो भवति यागो वा तथा कुर्यात् ।

---

(१) बौ० श्रौ० ५।१० । तै० सं० १।८।४ ।

(२) कृषभरहीत्यृषभस्यरवे जुहुयात्, बौ० श्रौ० ५।१० ।

(३) गार्हपत्येजुहोत्यन्वारब्धे यजमाने स्वाहेति, बौ० श्रौ० ५।१० ।

(४) साकं सूर्येणोद्यता, बौ० श्रौ० ५।१० ।

(५) मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालं निर्वपते, बौ० श्रौ० ५।१०

महाहविष्केष्टि: -

क्रीडिनेष्टि समनन्तरमेव महाहविर्भिर्यक्ष्ये इति सङ्कल्पयति यजमान: । इयमिष्टि: वैश्वदेवपर्वण: विकाररूपा अत: वैश्वदेव पर्वणि ये सामान्यधर्मा: ते सर्वे अत्र अनुगता भवन्ति । नवप्रयाजा: । नवानूयाजा: ।

देवताद्रव्यंन्च[1] -

(१) आग्नेयोऽष्टाकपाल: पुरोडाश: ।

(२) सौम्यश्चरु: ।

(३) सावित्रोद्वादशकपाल: पुरोडाश:

(४) सारस्वतश्चरु: ।

(५) पौष्णश्चरु: ।

(६) ऐन्द्राग्न एकादशकपाल: ।

(७) ऐन्द्रश्चरु: ।

(८) वैश्वकर्मण एककपाल: । इत्यष्टौ प्रधानदेवता: ।

बर्हि: संभरणे विशेष: - बर्हि: संभरणे पन्चमुष्टयो विहिता: ।

---

(१) निर्वपत्याग्नेय मष्टाकपालमिति पन्चसंचरणयैन्द्राग्नमेकादशकपाल-मैन्द्रं चरुं वैश्वकर्मणमेक कपालमिति ।

बौ० श्रौ० ५।१२ ।

सम्प्रैषेविशेष: -

सम्प्रैषे पूर्वं परिग्राहं परिगृह्णाति, ततः उत्तरवेद्यां वरुणप्रघासवत् उत्तरपरिग्राहं परिगृह्णाति[1]।

अत्र उपांशुप्रकरणे "सावित्रश्चातुर्मास्येषु" इति आश्वलायनवचनात्[2], एककपालानां सर्वेषामपि तत् प्रकरणे उपांशुत्वस्योक्तत्वाच्च सावित्र वैश्व-कर्माणः उपांशु भवतः। एककपालयागानन्तरं "सहश्चस्वाहेत्यादि पन्च-वाज्याहुतयः अध्वर्युराहवनीये ददाति। अत्र वाजिनयागस्याभावः। तेन वाजिनवर्जं[3] एतत् कर्म कुर्यात्। उत्तरपरिग्रहानन्तरं अध्वर्यु सम्प्रैषे स्रुचश्च सम्मार्ष्टि, तूष्णीं पृषदाज्यग्रहणीं पत्नीं सन्नह्य आज्येन च दध्ना च उदेतीति विशेषः[4]। इष्टिः ब्राह्मणतर्पणान्ता भवति[5]। अत्र क्रतुविसर्जन-मन्त्रोच्चारणं न भवति। यजमानः क्रतुं न विसृजते[6]।

---

(१) पूर्वं परिग्रहं परिगृह्णाति, अग्निवत्युत्तरं परिगृह्य०, बौ०श्रौ० ५।१० ।

(२) आ० श्रौ० २।१५।८ ।

(३) अन्यत्रवाजिनात्, बौ० श्रौ० ५।१० ।

(४) यो यूपयित्वा तिर्यन्वं स्फ्यं स्तब्ध्वा सम्प्रैषमाह प्रोक्षणी-रासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च सम्मृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीं संनह्याज्येन च दध्ना चोदेहीति ।
बौ० श्रौ० ५।१० ।

(५) अथपूर्णपात्रविष्णुक्रमैश्चरित्वा, बौ० श्रौ० ५।१० ।

(६) न विसृजते क्रतुम्, बौ० श्रौ० ५।१० ।

महापितृयज्ञ: -

---

महापितृयज्ञे कर्मण उपक्रम: 'बर्हिर्षिंगुणा कुर्यात्' [१] । इति वाक्येन भवति । परिस्तरणमन्त्रे - 'देवानां पितृणां परिषूतमसि देवपितृबर्हिर्भ्यां-ऽन्वङ्गमातिर्यक् पर्कीराध्यासम्' अनेन मन्त्रेण गार्हपत्यं परिस्तृणाति ।

विशिष्टसंभारा: [२] -

---

व्रीहय:, यवा:, षट्कपालानि, अभिवान्यायेदुग्धमर्वपात्रम्, द्वे मेक्षपात्रे, इषुशलाकां, त्रीन् पर्णसिवान् समूलं बर्हि:, वर्षीयां समिधम्, इध्मातपरिस्थणं, कशिपूपबर्हणे, आञ्जनाभ्यञ्जने, दशासूत्रं, स्फ्यं, उदकुंभौ, एतान् विशेष संभारान् संभाधेत् । पश्चात् यज्ञोपवीतं कृत्वा, उत्तरेण गार्हपत्यमुपवेश्य शूर्पादान प्रभृति कर्मान्तं कर्म कुर्यात् ।

हविषां निर्वाप: -

---

प्रथमतो व्रीहिनिर्वाप: [३] - 'देवस्यत्वेति' मन्त्रेण सोमाय

---

(१) बर्हिर्षिंगुणा कुर्यात्०, बौ० श्रौ० ५।११ ।

(२) उपकल्पयते व्रीहींश्च - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -
यज्ञायुधानीति, बौ० श्रौ० ५।११ ।

(३) पवित्रवत्याअग्निहोत्रहवण्या निर्वपति,। देवस्यस्यत्वा सवितु: प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां सोमाय पितृमतेजुष्टन्निर्वपामीति चतुरोमुष्टीन्व्रीहीणां निर्वपति, बौ० श्रौ० ५।११ ।

पितृमतेजुष्टन्निर्वपामि इति व्रीहिनिर्वापं कुर्यात् ।

द्वितीयीयवनिर्वापः[1] -

यवनिर्वापे 'पितृभ्यो बर्हिषद्भ्यो जुष्टन्निर्वपामि' इति मन्त्रेण यवनिर्वापं कुर्यात् । तृतीयेऽपि यवनिर्वापं[2] 'पितृभ्योऽग्निष्वात्तेभ्यो जुष्टं निर्वपामीति मन्त्रेण कुर्यात् । बौधायनः निर्वापसमन्त्रकं कर्मेच्छति ।

हविषामधिश्रयणम्[3] -

गार्हपत्यस्य दक्षिणार्धे षट्कपालानि उपदधाति । यवभर्जनार्थं गार्हपत्ये एककपालमवस्थाप्य भर्जयन्ति । भर्जने - बहुरूपाधानाः कृत्वा, तेषामर्धभागः धानासंज्ञकाः, शेषभागः पिष्टरूपः स तु संज्ञकः । तं पिष्टभागमेकीकृत्य षट्कपाले पुरोडाशार्थं स्थापयति । तदुत्तरतः नूतनपात्रमधिश्रित्य, तत्र आज्यं आनीयधानाः आवपति । अध्वर्युः अभिवान्यायै अर्धपात्रदुग्धं याचति । तत्र दुग्धे सक्तूनोप्य, एकया इक्षुशलाकया उपमन्थति । एतावदेव हविषामधिश्रयणं कुर्यात् ।

---

(१) एतामेव प्रतिपदं कृत्वा पितृभ्यो० चतुरीयवानाम्, बौ० श्रौ० ५।११ ।

(२) एतामेव - - - - - - - - - - - - - - - - - - - - - - - -
चतुर एव यवानाम्, बौ० श्रौ० ५।११ ।

(३) अभ्युप्य दक्षिणार्धे - - - - - - - - - - - - - - - - - - - -
इक्षुशलाकयोप मन्थति, बौ० श्रौ० ५।११ ।

(४) दक्षिणत एष सम स्थण्डिलः कृतो भवति तदेतां चतुरश्रां वेदिमालिखत्यैव न खनति । बौ० श्रौ० ५।११ ।

महापितृयज्ञार्थं वेदिकरणम्[1] -

यागशालादेशादुपनिष्क्रम्य, अन्वाहार्यपचनाद्दक्षिणे पूर्वे अवान्तर-देशे वा समचतुरस्रं स्थण्डिलं कुर्यात् ।

स्तम्बयजुर्हरणम्[2] -

अग्नेः पुरीषोऽसि "अपहतोऽररुः पृथिव्यै देवयजन्यै" । "अपहतो ररुः पृथिव्या अदेवयजनः" इति मंत्र द्वयेन स्तम्बयजुर्हरणं कुर्यात् ।

पूर्वपरिग्रहप्रैषः[3] -

पूर्वपरिग्रहप्रैषे तां भूमिमुद्धन्ति, उद्धतात् आग्नीध्रः त्रिर्हरति ।

उत्तरपरिग्रहप्रैषः[4] -

उत्तरपरिग्रहप्रैषे स्रुक् सम्मार्जनादि कर्म कुर्यात् ।

---

(१) दक्षिणत एव समस्थण्डिलः कृतो भवति तदेतां चतुरस्रां वेदिमालिखत्येव नखनति, बौ० श्रौ० ५।११ ।

(२) स्तम्बयजुर्हरति, बौ० श्रौ० ५।११ ।

(३) पूर्वं परिग्राहं परिगृह्णातिकरणं जपत्युद्धन्त्युद्धतातादाग्नीध्रस्त्रि-र्हरति, बौ० श्रौ० ५।१२ ।

(४) अथोत्तरं परिग्राहं ------ सम्मृड्ढि, बौ० श्रौ० ५।१२ ।

आज्यग्रहणम् -

आज्यग्रहणे पञ्चवारं[1] गृहीतानि षट्गृहीतानि इति बौधायनः पश्चात् इध्मः प्रोक्षणम्[2]। वेदिप्रोक्षणं[3], प्रस्तरग्रहणं[4] अमन्त्रकमेव कुर्यात् ।

बर्हिरासादनम्[5] -

प्राचीनावीति-भूत्वा "ऊर्णम्रद० देवेभ्यः पितृभ्यः" इति मन्त्रेण प्रथममुष्टिदर्भमूलानि द्वितीयमुष्टिदर्भाग्रैः अथ च तृतीयमपि मुष्टिदर्भाग्रैः प्रच्छादयन् बर्हिः परिस्तृणाति । पुनः यज्ञोपवीतिभूत्वा त्रिःप्रदक्षिणं परीत्य प्रस्तरपाणि अध्वर्युः द्वौ परिधौ परिदधाति[6]। प्रथममन्त्रेण मध्यमं परिधिं, द्वितीयमन्त्रेण दक्षिणपरिधिं परिदधाति । अतः उत्तरपरिधिरभावः । अत्र पितृकर्मणि क्रियमाणे दक्षिणश्चोत्तरमुपनिदध्यादिति बौधायनः ।

---

(१) पञ्चगृहीतानि षट्गृहीतानि वा ।
बौ० श्रौ० ५।१२ ।

(२) इध्मं प्रोक्षति ।

(३) वेदिं प्रोक्षति ।

(४) समूलं प्रस्तरं गृह्णाति तूष्णीम्, बौ० श्रौ० ५।१२ ।

(५) अथ प्राचीनावीति कृत्वा त्रिरपसलैः परिस्तृणन् पर्येति - संतरमेवाग्रेऽथ वितरामथवितराम् । बौ० श्रौ० ५।१२ ।

(६) अथ यज्ञोपवीतं कृत्वा - - - - - - - - - - - - - - - -
मध्यमं चैव दक्षिणं च, बौ० श्रौ० ५।१२ ।

ऊर्ध्वे समिधो आदधाति[1] । अत्र समिदाधानं यजमानाग्न्योः योगार्थमेव ।
ततः अग्नेः पश्चात् विधृत्योः समूलं प्रस्तरं न्यस्यति ।प्रस्तरे जुहूम्, इतरे बर्हिषि सादयेत्[2] ।

शृतानां हविषामुद्वासनक्रमः[3] -

शृतानां हविषामुद्वासनक्रमे दक्षिणतः पुरोडाशमुत्तरतोधानाः, तदुत्तरेकरम्भम्, कशिपूपबर्हणे आञ्जनाभ्यञ्जने, दर्शा, स्फ्यं, तदुत्तरतः उदकुंभौ स्थापयति । एतस्मिन्नेव काले प्रतिप्रस्थाता त्र्यम्बकपुरोडाशार्थं निर्वापं करोति ।

सामिधेनीपाठः -

सामिधेनीप्रैषे "अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहि"[4] बर्हिवर्ज चत्वारः प्रयाजाः[5] । अत्र आज्यभागयोर्विशिष्टसंज्ञा न दृश्यते । आज्यभागौ कुर्यात् ।

---

(१) ऊर्ध्वे समिधावादधाति, बौ० श्रौ० ५।१२ ।
(२) विधृत्योः समूलं प्रस्तरं न्यस्यति तूष्णीं प्रस्तरे जुहूं बर्हिषीतरे, बौ० श्रौ० ५।१२ ।
(३) दक्षिणतः पुरोडाशमासादयत्युत्तरतो - - उदकुंभौ, बौ०श्रौ० ५।१२ ।
(४) बौ० श्रौ० ५।१३ ।
(५) अपबर्हिषश्चतुरः प्रयाजानिष्ट्वा, बौ० श्रौ० ५।१३ ।

हविरासादनम् -

सर्वे ऋत्विजो यजमानश्च प्राचीनावीतिं कृत्वा विपरिक्रमणं कुर्युः।[1] "विपरिहरन्ति हवींषि"[2] हविषामुद्वासनमासादनं च कुर्यात्। उत्तरस्यां दिशि द्वारकल्पनां[3] कृत्वा, अध्वर्युः परिकर्मिणमाह्वयति। आग्नीध्रः आगत्य प्राचीनावीति भूत्वा, जलपूर्णमेककुम्भमादाय महापितृयज्ञवेदिं सन्ततया धारया त्रिः परिसिञ्चन् पर्येति[4]। कुम्भं निधाय पुनर्वेदिं त्रिः प्रदक्षिणं पर्येति[5]।

प्रधानयागः -

अध्वर्युः वेदिमत्याक्रम्योत्तरतो दक्षिणाभिमुखस्तिष्ठन् आश्रावयति[6]।

आश्रावणस्वरूपम्[6,7] -

"ओ स्वा ३ धा" इत्याश्रावणम्। "अस्तुस्वा ३ धा" इति

---

(१) प्राचीनावीतानि कुर्वते विपरिक्रामन्त्येत ऋत्विजः, बौ०श्रौ० ५।१३।

(२) बौ० श्रौ० ५।१३।

(३) तस्योदीचीं द्वारं कुर्वन्ति, बौ० श्रौ० ५।१३।

(४) स यो बलवां स्तमाहानेनोदकुम्भेन संततया धारया त्रिरव्यसंः परिषिञ्चन् परीहीति, बौ० श्रौ० ५।१३।

(५) निधायकुम्भं यथेतं त्रिः पुनः प्रतिपर्येति, बौ० श्रौ० ५।१३।

(६) उदङ्ङतिक्रामति, बौ० श्रौ० ५।१४।

(७) ओस्वधेत्याश्रावयति, बौ० श्रौ० ५।१४।

प्रत्याश्रावणमिति[1] आगूरुच्चारणम्[2] - आगूरुच्चारणे "ये स्वधा, ये स्वधामहे वा । वषट्कारः[3] - वषट्कारस्थाने "स्वधानमः" इति ।

अवदानाभिधारणम् -

---

पूर्वार्धात्पुरोडाशस्यावदनाम्[4] । पूर्वार्धादेव धानानामवधारणं, तथैव करंभस्य[5] । एतेषां त्रयाणां हविषां अवदानग्रहणे सकृदेवावदानमिति । अध्वर्युः ओंस्वधा इति वदति । आग्नीध्रः अस्तु स्वधेत्युच्चैः ददाति । अध्वर्युः होतारं प्रेषयति - "सोमं पितृमन्तं स्वधा कुरु" होता - ये स्वधामहे सोमं पितृमन्तं स्वधानमः इति कथयति[6] । एवमेव पितॄन् बर्हिषदः स्वधाकुरु । एवमेव पितृनग्निष्वात्ताः स्वधा कुरु । स्विष्टकृति - अग्निंकव्यवाहनं स्विष्टकृतं स्वधा कुरु[7] एवं प्रधानयागं पूर्णतां नीत्वाऽध्वर्युः मर्जनमेक्षणमिषु-शलाकां च, आग्नावनुप्रहरति[8] । ततः संप्रावहोमः[9], दक्षिणतः स्वस्थाने -

---

(१) अस्तु स्वधेति प्रत्याश्रावयति, बौ० श्रौ० ५।१४ ।

(२) ये स्वधेत्यागूर्य स्वधामह इतिवा । बौ० श्रौ० ५।१४ ।

(३) स्वधानम इति वषट् करोति, बौ० श्रौ० ५।१४ ।

(४) पूर्वार्धात्पुरोडाशस्यावद्यति, बौ० श्रौ० ५।१४ ।

(५) पूर्वार्धाद्धानानां पूर्वार्धात्करम्भस्याभिधारयति प्रत्यनाक्ति,बौ०श्रौ० ५।१४

(६) बौ० श्रौ० ५।१४ ।

(७) बौ० श्रौ० ५।१४ ।

(८) अंतन्मेक्षणं शलाकामित्याग्ना वनु प्रहरति, बौ० श्रौ० ५।१४ ।

(९) अथैने संप्रावेणाभि जुहोति, बौ० श्रौ० ५।१४ ।

प्रत्याक्रम्य संपक्षालन निनयनादि स्रुक् सादनान्तं कर्म अध्वर्युः करोति । ततः सर्वे यज्ञोपवीतानि कुरुते[1] । पुनः पूर्ववत् सर्वे विपरिक्रामन्ति[2] ।

इडोपाह्वानम् -
-------------

इडोपाह्वाने चतुर्धाकरणस्याभावः[3] । उपहूतायां इडायां सर्त्विजः यजमानस्य इडाभागमाजिघ्रन्ति । तं इडाभागमाजिघ्र्य सर्वे बर्हिषि प्रदापयन्ति[4] ।

पिण्डदानम् -
-----------

सर्वे ऋत्विजः प्राचीनावीति नो भूत्वा यजमानः हविः शेषं पुरोडाशं धानाः करंभं च पात्र्यां निधाय, एकीकृत्य त्रीन् पिण्डान् करोति । ततः वेद्यां दक्षिणश्रोणौ दक्षिणांशोत्तरां सेषु स्थानं अप्रादक्षिण्येन उद्धृत्य पर्णसिवान्निधाय "मार्जयन्तां पितरः । मार्जयन्तां पितामहाः । मार्जयन्तां - प्रपितामहाः ।" इति मन्त्रेणाद्भिर्मार्जयति । तेषु क्रमेण - मन्त्र

---------------------------------------------

(१) अथ दक्षिणतो -------------------
यज्ञोपवीतानि कुर्वत, बौ० श्रौ० ५।१४ ।

(२) विपरिक्रामन्त्येत ऋत्विजः, बौ० श्रौ० ५।१४ ।

(३) आवधाति षडवत्तं, बौ० श्रौ० ५।१४ ।

(४) निघ्रेण भक्षयित्वा बर्हिषि संन्यस्यन्ति, बौ० श्रौ० ५।१५ ।

पठित्वैकैकं पिण्डंददाति । प्रथमतः दक्षिणश्रोणौ - एतत्ते तत असौ ये चत्वा-
मनु इति मन्त्रेण पिण्डं ददाति । द्वितीयं पिण्डं गृहीत्वा दक्षिणांशो
"एतत्ते पितामहः असौ ये चत्वामनु इति पिण्डं निदधाति । तथैव उत्तरांसौ
तृतीयं पिण्डं गृहीत्वा "एतत्ते प्रपितामहः असौ ये चत्वामनु इति तृतीयं
पिण्डं निदधाति[1] ।

पिण्डोपचाराः -

आञ्जनाभ्यञ्जनयोः ददाति[2] । पिण्डलेपं उत्तरस्यां श्रोण्यां
"अत्र पितरो यथाभागमन्दध्वमिति" मन्त्रेण निमार्ष्टि । सर्वे गार्हपत्या-
हवनीययोरन्तरेणोदन्चौ निष्क्रम्य, यज्ञोपवीतानि कृत्वा आहवनीयमुप-
तिष्ठन्ते । ततः गार्हपत्यश्च । पुनः सर्वे प्राचीनावीति नो भूत्वा अन्वा-
हार्यपचने "अक्षन् पितरोऽमीमदन्त०" इति मन्त्रेणाभि प्रपद्यन्ते । पश्चात्
"परेत पितरः०" इति मन्त्रेणोपतिष्ठन्ते । पूर्ववदाग्नीध्रः पूर्वस्थापितकुम्भजलेन
सन्ततया धारया त्रिः परिषिञ्चन्ति । दशां त्रेधा विभज्य वासस्थाने ददाति ।
अन्ते नमस्कारोपचारान् यजमानः षड्भिर्मन्त्रैः कुरुते । "वीरं मे पितरोदत्त"

---

(१) तै० सं० १।८।४-६ ।
तिसृषु स्रक्तिषु पर्णसिवेषु त्रीन्पिण्डान् ददात्येतत्ते
तता सौ० - - - - - - - - - - - - - - - - - - - - उत्तरे से ।
बौ०श्रौ० ५।१५ ।
(२) आख्यातं पिण्डानादानम् । आख्यातमाञ्जनाभ्यञ्जनयोः,
श्रौ० को० १, पृ० ५५१ ।

इति मन्त्रेण सुवीरं पुत्रं याचते[1]।

पितृणामुत्थापनविधिः -

यजमानः 'उत्तिष्ठतपितरः' इति मन्त्रैः पितृणामुत्थापनं करोति। उत्थापनानन्तरं यजमानः - 'मनोन्वाहुवामहे०' इति तिसृभि-र्ऋग्भिः पितृननुगतं मन आह्वयते। इति कृत्वा पर्णसैः सह पिण्डान् अग्नावनु प्रहरति। परिश्रयणमपनीय यज्ञोपवीतानि कुर्वन्ति[2]।

अनूयाजयागः -

अत्र द्वावेवानुयाजौ। ततः उत्त्विति यावत्, शंयुवाकः, प्रणीता निनयनादि कर्म कुर्यात्। अत्र व्रतविसर्गाभावः प्राचीनावीती भूत्वा, पूर्वस्थापित कशिप्वादीनामुद्वासनम्। पुनः यज्ञोपवीती भूत्वा गार्हपत्य-मुपतिष्ठते[3]। एतदन्तं महापितृयज्ञः।

---

(१) उत्तरस्यां श्रेण्यां लेपं० - - - - - - - - - - - - - - -
सद्भिर्नमस्कारैर्विंश्याविसमुपतिष्ठतेऽथवीरं याचते, बौ०श्रौ० ५।१५
पिण्डोपचारस्य सर्वे मंत्राः, १।८।५ ।

(२) अथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते - - - - - - - - - -
- - - - - - - - - - - - - - - - - - - - - - - - - - - - -
यज्ञोपवीतानि कुर्वते, बौ० श्रौ० ५।१५। मनोन्वाहुवामहे० तै० सं० १।८।५।

(३) बौ० श्रौ० ५।१५।

त्र्यम्बकेष्टिः[1] -

अध्वर्युः यावत् महापितृयज्ञकर्माणि विरमति तावत् कालाभ्यन्तरे प्रतिप्रस्थाता गार्हपत्ये त्र्यम्बकदेवताकं पुरोडाशं श्रपयित्वा, अनभिघारितान् कपालान्युद्वास्य तं पुरोडाशं शरावे प्रक्षिप्य, कपालान्युद्वासयति । एतत् त्र्यम्बकसंज्ञकं कर्म अमन्त्रकं इति । केश्चित् समन्त्रकं मवोच्यते । अध्वर्युः गार्हपत्य-मागत्यनीललोहिते सूत्रे पलाशपर्णानां त्र्याणां अन्तिमं पर्णं ग्रामद्वारसमीपस्थ द्विजगृहात्, अन्वाहार्यपचनाद्वा एकमुल्मुकं दर्भानुदपात्रं च आदाय सर्वे गार्हपत्याय-मुपतिष्ठन्ते । कर्मणः समन्त्रकपक्षे "रुद्रायाम्बिकायैजुष्टन्निर्वपामि । द्वितीयं कायं जुष्टन्निर्वपामि । इति निर्वापं कृत्वा, "कायानुब्रूहि" इत्यनुब्रूयात् । कंज इति विशेषः । ततः उदङ्०मुखादुदन्चो निष्क्रम्य, तां दिशं गत्वा यत्र चतुष्पथं प्राप्य, तत्रैवोपविश्य, भूमिं प्रोक्षणविधिनोपलिप्य, गृहीतमुल्मुकं तत्र समाधाय, प्रज्वाल्यच बर्हिः परिस्तीर्य, अन्तिमे पलाशपर्णे सर्वेषां त्र्यम्बकाणां हवि-षामुत्तरार्धात् सकृत् समवदाय "एक एव रुद्रो न द्वितीयाय तस्थे०" इति मन्त्रेण तिष्ठन् जुहोति । अत्रावदाने उपस्तरणाभिघारणेनस्तः । पश्चात् शेषान् पुरोडाशान् गृहीत्वा तृणनिर्मितशिक्ये प्रक्षिप्य, पूर्वगृहीतनीललोहिताभ्यां सूत्राभ्यां विविधं बद्ध्वा, तत्र प्रदेशे एव अघाच्छिन्ने वृक्षे उत वृक्षस्य शुष्क-शाखायां तं शिक्यं बध्नाति । सर्वे तं प्रोक्षयन्तः । "एष ते रुद्रभागस्त्वं

---

(१) यावदेवात्राध्वर्युश्चेष्टति - - - - अथैनान्यजमान सान्नलावापततेति । त्र्यम्बकेष्टेः सम्मिलितमन्त्रभागः, तै० सं० १।८।५ ।

जुषस्व' इति मन्त्रेणोपस्थानं कुर्वन्ति । ततः आत्मनः अवलम्बितशिखयो-र्भृङ्गयोर्मध्ये उदपात्रस्थितजलेन दीर्घधारां पातयित्वा, परास्य, अनवेक्ष-माणाः सर्वे गृहं प्रत्यागच्छन्ति । आगत्य हस्तौ पादौ प्रक्षाल्य यागवेदिं प्रविशन्ति एतदन्ताऽत्र्यम्बकेष्टिः ।

कामनापरत्वविचारः -
-------------------

त्र्यम्बककर्मणि पलाशपर्णत्रयेषु अन्तिमं पर्णं यं द्वेष्टि, तस्य संचरे पशूनां न्यस्यति, यद्युं नद्वेष्टि तत्र द्वेष्याख्यवटे न्यस्यति । त्र्यम्ब-काणां हविषां व्युत्प्रयच्छति । द्वौ भागौ यजमानाय । चतुष्पथस्थित-मग्निं त्रिः प्रदक्षिणं पर्यन्ति यजमान तत् पुत्रादयः । प्रदक्षिणावर्तिनि दक्षिणानूरून् उपाघ्नानाः सन्तः 'त्र्यम्बकं यजामहे०' इति मन्त्रं पठित्वा, सकृत् परीत्य अग्नेरुत्तरतस्तिष्ठन्ति । किञ्चित् भूमिमुत्खिदन्ति । 'भगायत्वे' ति लिम्पन्ते । एवमेव द्वितीयं प्रदक्षिणं पर्यन्ति । एवमेव तृतीयमपि । त्रिरेवाम्यतिषजन् परीत्य त्रिरुत् खिदेत् भगायत्वेति प्रतिमन्त्रमिति ।

अथ च स एषा यजमानपत्नी पतिकामा चेत् तर्हि त्रिरपसलैः पर्येति । सव्यमूरुमुपघ्नानाः सन्तः 'त्र्यम्बकं यजामहे०' इति मन्त्रान्ते इतोमुक्षीयमापतेः एवं मन्त्रं पठित्वापरीत्योत्तरतः तिष्ठति । उत् खिदति, भगायत्वेति लिम्पते । एवमेव द्वितीयतृतीयवारमपि भवति ।

अथ एनान् पुत्रादिकान् सर्वान् यजमानायाञ्जलौ तं हविः 'प्रजयात्वा संसृजामि' इति मंत्रेणावपति । पुनः तान् यजमानः पत्न्यञ्जला-

वावपति तेनैव मन्त्रेण । पुनः पत्नी दुहितृभगकामा चेत् "भोनत्वा संसृजा-
मोत्येवं रूपं मन्त्रं पठित्वा आवपति ।

आदित्येष्टिः[1] -
---

महाहविः प्रणीतेषु स्थित्वा "आदित्येष्ट्याहं यक्ष्ये" इति
सङ्कल्प्य अन्वाधानादिकं कुर्यात् । अत्र पञ्चप्रयाजाः । त्रयोऽनूयाजाः ।
सप्तदशसामिधेन्यः । अदितिदेवताकः व्रीहिमयश्चरुः इति प्रधानदेवता
द्रव्यं च भवति । तिस्रो गावो दक्षिणा । व्रतविसर्जनान्ता इयमिष्टि-
रनुष्ठेया । कर्मान्ते पूर्ववत् यजमानस्य वपनविधिः प्रतिपादितः ।
बौधायनोक्तसाकमेधपर्व इति ।

बौधायनमतेन शुनासीरीयपर्व - कालः -
---

चातुर्मास्य यागे अन्तिमं पर्व शुनासीरीय पर्वेति । साकमेधपर्वणः
अनुष्ठानानन्तरं यः आपूर्यमाणपक्षः तस्मिन् शुनासीरीय पर्व कुर्यात्[2] ।

---

(१) हस्तपादान् प्रक्षाल्यतेनैव यथेतमेत्यादित्यं चरुं पुनरेत्य निर्वपतीयं वा अदिति - - - - - - - - - - - - - - - - - - - - - -
- - - - - - - - - - - - - - सा प्रसिद्धेष्टिः संतिष्ठते ।
आदित्यं चरु० पुनरेत्यनिर्वपति, तै० ब्रा० २।६।१० ।

(२) अथातश्चतुर्षु मासेषु शुनासीरीय हविर्निर्वक्ष्यमाणो भवति, बौ० श्रौ० ५।१८ ।

संभारा: -

---

त्रीण्यरत्नीं, लोहितायसस्य च क्षुरं, पञ्चदशानि - पुरोडाशकपालानि, पञ्चचरुस्थाली, तावन्ति मेक्षणानिपृषदाज्याय दधि । इति एते संभारा: बौधायनेन विशेष रूपेण कल्पिता:[1] ।

प्रातर्दोहनम् -

---

प्रातर्दोहार्थमनुदिते सूर्ये वत्सापाकरणं कुर्यात् । पश्चात् दोहनविधिना दोहनं सम्पादयेत् । अत्र दोहनं वायुदेवताकं भवति । एतत् पर्वणरनुष्ठानं पौर्णमासतन्त्रेण भवति[2] । वेदी दार्शपौर्णमासकी एव । यजमान: शुनासीरीय हविर्भिर्यक्ष्ये इति सङ्कल्पं कुर्यात् । शुनासीरीये अग्नीषोमावाज्यभागौ भवति ।

देवताद्रव्यञ्च -

---

(१) आग्नेयोऽष्टाकपाल: पुरोडाश: ।

(२) सौम्यश्चरु: ।

---

(१) स उपकल्पयते त्रेणीं शलली - - - - - - - - - - - -
पृषदाज्यायदधि, बौ० श्रौ० ५-१८ ।

(२) अथास्यैतां रात्रीं वायवेवत्सा अपाकृता भवन्ति प्रातर्वायव्यं पयो दोक्ष्यति०, बौ० श्रौ० ५।१८ ।

(३) सावित्रो द्वादशकपाल: पुरोडाश: ।

(४) सारस्वतश्चरु: ।

(५) पौष्णश्चरु:[१] ।

(६) ऐन्द्राग्नो द्वादशकपाल: पुरोडाश: ।

(७) वैश्वदेवश्चरु: ।

(८) इन्द्रशुनासीरीय द्वादशकपाल: पुरोडाश: ।

(९) वायव्यं पय: ।

(१०) सौर्य एककपाल: पुरोडाश: ।

एता: दशप्रधानदेवता: तासां द्रव्याणि च ।

कर्मणि विशेष: सूच्यते -

---

अध्वर्यु: पौर्णमासेष्टिवत् सर्वं इष्टिकर्म करोति । अध्वर्यु: तण्डुल-प्रक्षालन निनयनान्ते प्रातर्दोहनमारभेत् । तत्र मन्त्रे विशेष: - इह वो वायू रमयतुगाव: । प्रणो ब्रूहि वायवे० इति मन्त्रेण ।

---

(१) ऐन्द्राग्नं द्वादशकपालं । वैश्वदेवं चरुं । इन्द्रायशुनासीराय पुरोडाशं द्वादशकपालम् । वायव्यं पय: । सौर्यमेककपालम् । तै० सं० १।८।७ । एतत् ब्राह्मणान्येव पञ्चहवींषि -- - - - - - - - - - - - - -
सौर्य एककपालो भवति, तै० ब्रा० १।७।१ । निर्वपत्याग्नेयमष्टा-कपालमिति पञ्चसंचराण्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय-शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पय: सौर्यमेककपाल-मिति, बौ० श्रौ० ५।१८ ।

ततः कपालान्युपधाय, चरुस्थालीमधिश्रित्य, वायवे पयस्थाली-मुपधाय, तस्यां प्रातर्दोह्यमानीय श्रपयेत् । अस्मिन् अन्तिमे शुनासीरीये पर्वणि वाजिनाभावः[1] । प्रयाजानुयाजाः वैश्वदेवपर्ववत्भवति । देवतात्यागे यजमानः "वायोरहं देवयज्यया रत्नभाग्भूयासं०" । "सूर्यस्याऽहं देवयज्यया सुदृशीकी-भूयासम् । उज्जिति वाचनं वैश्वदेव पर्ववत् भवति । शुना सीरीयपर्वणि द्वादशगावो दक्षिणा भवति[2] । पश्चात् "स्वस्तिमाशास्ते" इति पाठानन्तरं विष्णुक्रमैश्चरित्वा - यजमानः व्रतं विसृजते[3] । इति शुनासीरीयपर्व ।

आश्वलायनमतेन शुनासीरीयं पर्व - कालः[4] -

---

चातुर्मास्य यागे अन्तिमं पर्व शुनासीरीयेति । साकमेधकालमारभ्य या पञ्चमी पौर्णमासी तस्यां पौर्णमास्यां शुनासीरीयेष्टिः कार्या । शुना-सीरीयेति कर्मनाम । अत्र कर्मणि कालापकर्षोऽपि सूत्रकारेणोक्तः । "अर्वाग्य-पीप पक्तिवा[5] इति सूत्रानुसारेण पञ्चम्याः पौर्णमास्या अर्वागपि यत्र काले कर्तुं संभवति तत्र इयमिष्टिरनुष्ठेया । वैश्वदेवपर्ववत् अनुष्ठान विधानम् ।

---

(१) अन्यत्राजिनात्, बौ० श्रौ० ५।१८ ।

(२) द्वादशगवं सीरं दक्षिणा, तै० सं० १।८।७ ।

द्वादशगवं सीरं दक्षिणासमृद्ध्यै० ।। तै० ब्रा० १।७।१ ।

(३) अथ पूर्णपात्र विष्णुक्रमैश्चरित्वा विसृजतेव्रतम्, बौ० श्रौ० ५।१८ ।

(४) पञ्चम्यां पौर्णमास्यां शुनासीरीयया, आ० श्रौ० २।२० ।

(५) आ० श्रौ० २।२० ।

अत्र वाजिनयागाभावः ।

प्रधानदेवताः[1] -

(१) अग्निः । (२) सोमः । (३) सविता । (४) सरस्वती । (५) पूषा । (६) इन्द्राग्नी । (७) विश्वेदेवाः । (८) देवतासु सूर्यः अष्टमः अन्तिमो वा । (९) वायुर्नियुत्वान् (पक्षे वायुर्वा । (१०) शुनासीरौ (पक्षे - इन्द्रः, अपरपक्षे शुनासीरः । (११) इन्द्रः (पक्षे - शुनः) । इति प्रधान देवताः ।

याज्यानुवाक्ये[2] -

वैश्वदेवपर्वणि या देवतागताः तासां याज्यानुवाक्याः तत्रैवोक्ताः । वरुणप्रघासपर्वणि इन्द्राग्न्योः, विश्वेषां देवानां च उक्ते याज्यानुवाक्ये -

वायुर्नियुत्वान् -

नियुत्वान् गुण विशिष्टस्य वायोः -

(१) हविषां तु स्थाने ऽश्वप्रभृतीनां - - - - - - - - - - -
सूर्य उक्तः, आ० श्रौ० २।२० ।

(२) आवायो भूष शुचिपा - - - - - - - - - - - - - - - -
याज्यानुवाक्याः, आ० श्रौ० २।२० ।

"आवायो भूष शुचिपा उप नः०"[1] इत्यनुवाक्या ।

"प्रयाभ्यियांसि दाश्वां समच्छ०"[2] इति याज्या ।

वायुपत्नी: -

"सत्वं नो देवमनसा०"[3] इत्यनुवाक्या ।

"ईशानाय प्रहुतिं यस्त आनट्"[4] इति याज्या ।

शुनासीरौ -

"इमां वाचं जुषेथां०"[5] इत्यनुवाक्या ।

"शुनं नः फालाविकृषन्तुभूमिं०"[6] इति याज्या ।

इन्द्रपत्नी -

"इन्द्रं वयं शुनासीरं०"[7] इति सूत्रोक्तानुवाक्या ।

---

(१) ऋ० सं० ७।६२।१ ।

(२) ऋ० सं० ७।६२।३ ।

(३) ऋ० सं० ८-२६।२५ ।

(४) ऋ० सं० ७।६०।२ ।

(५) ऋ० सं० ।

(६) ऋ० सं० ४।५७।८ ।

(७) आ० श्रौ० २।२० ।

"आश्वयन्तीगव्यन्ती०"[1] इति याज्या ।

शुनासीरपदौ -
------------

"शुनं हुवेममघवानमिन्द्रं०"[2] इत्यनुवाक्या ।

"अश्वायन्ती गव्यन्ती वाजयन्तीं०"[3] इति याज्या ।

सूर्यः -
------

"तरणिर्विश्वदर्शत:०"[4] इत्यनुवाक्या ।

"चित्रं देवानामुदगादनीकं०"[5] इति याज्या ।

बौधायनमतेन याज्यानुवाक्ये -

तैत्तिरीयशाखागता: सर्व देवतानां याज्यापुरोनुवाक्या वैश्वदेव-पर्वहोत्रे द्रष्टव्या:, इन्द्राग्न्योर्विश्वेषां देवानां च साकमेधपर्वहोत्रे । शिष्टानां देवतानां याज्यापुरोनुवाक्या आपस्तम्बहोत्र एवमादिष्टाः -

---

(१) ऋ० सं० १०।१६०।५ ।

(२) ऋ० सं० ३।३०।२२ ।

(३) ऋ० सं० १०।१६०।५ ।

(४) ऋ० सं० १।५०।४ ।

(५) ऋ० सं० १।११५।१ ।

वायुः[1] -

"वायोश्शतं हरीणां०" इति पुरोनुवाक्या ।

"प्रयाभियोऽसि०" इति याज्या ।

इन्द्रस्य शुनासीरस्य[2] -

"इन्द्राय शुनासीराय०" इति पुरोनुवाक्या ।

"प्रहव्यानिघृतवन्त्यस्मै०" इति याज्या ।

सूर्यः[3] -

"उदुत्यं जातवेदसं०" इति पुरोनुवाक्या ।

"चित्रं देवानां०" इति याज्या ।

स्विष्टकृति[4] -

"अग्निं स्तोमेनबोधय" इति पुरोनुवाक्या ।

"सहव्यवाळमर्त्यः०" इति याज्या ।

---

(१) वायोश्शतं हरीणां०, तै० सं० २।२।१२,२७।२८ ।
(२) तै० ब्रा० २।५।८ । (३) तै० सं० १।४।४३ ।
(४) तै० सं० ४।१।११ ।

शेषं कर्म वैश्वदेव पर्ववत् समापयेत्[1]। चातुर्मास्य यागानन्तरं एतौ अङ्गभूतौ पशुसोमौ निरूढज्योतिष्टोम प्रकृतिकौ उपदिष्टौ। 'सोमेन यजेत'[2] इति मुख्यः पक्षः, अशक्तौ निरूढपशुबन्ध विधानेन 'पशुना यजेत' इति सूत्रकार-स्याशयः इति। आश्वलायनः।



---

(१) समाना वैश्वदेव्या, आ० श्रौ० २।२०।

(२) आ० श्रौ० २।२०।

# अग्निष्टोम विहारः

२५

महावेदिः

२२

22

26

११) औदुंबर्य वटः
१२) होतृ धिष्णीयः
१३) प्रशास्तृ धिष्णीयः
१५) पोतृ धिष्णीयः
१६) नेष्टृ धिष्णीयः
१४) ब्राह्मणाच्छंसि धिष्णीयः
१८) आग्नीध्रीय धिष्णीयः
१९) मार्जालीय धिष्णीयः
२०) उपरवा (४)
२१) खरः
२२) उत्तर वेदिः
२३) उत्तर नाभिः
२४) यूपा वटः
२५) चात्वालः
२६) उत्करः
२७) शामित्रम्
२८) अच्छावाक धिष्णीयः

हविर्धानम्

२२

आग्नीध्रीय

मार्जालीय

← संचरः →

२६ १६ १५ १४ १२ १३

१२

← संचरः →

६ प्राग्वंशः

१) गार्हपत्यः
२) अन्वाहार्य पचनः
३) आहवनीयः
४) वेदिः
५) विशयः
६) प्रक्षालनीय खरः
७) उद्वासनीय खरः
८) उत्करः
९) आच्छिणृ खरः
१०) पत्नी शालाः

३

४

५

२

१

स्केल १ इंच :- ४० अंगुलानि

१०

सोमप्रकरणम्

अग्निष्टोम:

अस्मिन् अध्याये सप्तसंस्थासु प्रथमोयाग: अग्निष्टोम स एव प्रकृतिभूत: सप्तसोम संस्थासु आद्य: । पञ्चदिन साध्योऽयं याग: । तत्र सर्वेषामेकाहीन-सत्राणां प्रकृतिभूत: अग्निष्टोम संस्थो ज्योतिष्टोम:, तस्य स्वरूपं उपस्थाप्यते । आहिताग्नि: यागारंभात् पूर्वेद्यु: नांदीश्राद्धमुदकशान्तिं प्रतिसरबन्धं च कुर्यात् । अपरेद्यु: प्रकृतिभूतेष्ट्यादौ यथास्नान, पचनपाचन, मंत्राचमन-मंत्रप्रोक्षणादि । कर्म यथा विधि सम्पाद्य सर्वेषां ब्रह्मनिष्ठ श्रोत्रियाणा मनुज्ञां गृहीत्वा स्वस्ति पुण्याह वाचनादि कुर्यात् । अत्र स्मार्त स्वस्तिवाचनं संकल्पयिष्यमाण कर्मणो निर्विघ्न परिसमाप्त्यै गणपतिपूजनपूर्वकं सर्वेभ्य: वेदविद्भ्य: आशीर्वादलाभाय स्वस्ति पुण्याह वाचनं भवति । एतत् पुण्याह वाचनं रूढि बलात् सर्वै: प्रधान-संकल्पात् पूर्वं सम्यगनुष्ठीयते समाद्रियते च ।

प्रधान संकल्पप्रकार:

यजमान: स्वसंचरेणापरेण गार्हपत्यं गत्वा दर्भेष्वासीन: दर्भान् धारयमाण: सपत्नीक: "य: पुरस्ता" दि मन्त्रान् जपित्वा देशकालौ संकीर्त्य अग्नीषोमीयेन पशुना द्वादशस्तोत्रेण, द्वादशशास्त्रेण सप्रवर्ग्येण रथंतर साम्ना द्वादशशत गवां दक्षिणेन ज्योतिष्टोमेनाग्निष्टोमसंस्थेन चतु:स्तोमेन स्वर्गकाम: सोमेन यक्ष्ये । अस्य संकल्पस्योच्चारणं उपांशु स्वरेण त्रिवारं, उच्चस्वरेण

त्रिवारं एवं रीत्या नइवारमुच्चारण कुर्यात् । इत्थं संकल्पस्य स्वरूपमिति[१] ।

अत्र विशेषस्तूच्यते

यजमानः विच्छिन्न सोमपीथश्चेत् तत् संधानार्थं ऐन्द्राग्नं पशुं अथ च दौब्राह्मण्यदोषपरिहारार्थं आश्विनदेवताकस्य पशुः अग्नीषोमीयेन पशुना सह समान तन्त्रेण अनुष्ठानं कुर्यात् । पूर्वोक्त संकल्पे अस्य ऊहो भवति । "तन्म-कृष्यता०" मित्यादि मन्त्रपाठः । एते प्रायश्चित्तीयान् पशून् निरूढ पशुबन्धतन्त्रेण कुर्यात् । पशुतन्त्रं निरूढ पशुबन्ध अध्याये विस्तरेण पूर्वमेव प्रदर्शितम् ।

ऋत्विग् वरणम्

यजमानः प्रथमं सोमप्रवाक संज्ञकस्य ऋत्विजो वरणं कुर्यात् । स एव सोमप्रवाकः अनुक्रमेण आमन्त्रितानां ऋत्विजां प्रार्थनां कुर्यात्[२] ।

सोमप्रवाकस्य प्रार्थना स्वरूपम्

आश्वलायनगृह्यसूत्रस्य प्रथमाध्याये त्रयोविंशति चतुर्विंशति खण्डयोः सविस्तरमुक्तमिति । तस्य किञ्चित् स्वरूपमत्र वक्ष्यते - सोमप्रवाकः यजमानस्य नाम गृहीत्वा अमुकशर्मणः सोमो भविष्यति, तत्र भवतः हौत्रं कर्तव्यमिति ।

---

(१) द्रष्टव्यम् - बौ० श्रौ० २।१ ।

(२) बौ० श्रौ० २।२-४ ।

सोमप्रवाकेण उक्ते होता सोमप्रवाकं पृच्छति - को यज्ञ: ? क ऋत्विज: ? का दक्षिणेति ? । सोमप्रवाकमुत्तरयति - ज्योतिष्टोमाग्निष्टोम संस्थाको याग: । अध्वर्य्वादय: सदस्यान्ता: सप्तदशसंख्याका ऋत्विज: । द्वादशशतं गावो दक्षिणेति ।

ऋत्विजामाचार:

न मांसमश्नीयु: । नस्त्रियमुपेयु: । आक्रतोरपवर्गात् । एतान् आचारान् सर्वै: ऋत्विग्भि: पालनीया: ऋत्विजां वरणं मधुपर्कश्चेति आधानाध्याये वर्णितम् । एवं प्रकारेण ऋत्विग् वरणादीन् सम्पाद्य यजमान: दीक्षणी-येष्ट्यर्थं गार्हपत्यस्य पश्चात् उपविश्य दीक्षणीयेष्ट्याहं यक्ष्ये इति संकल्पं करोति[1] ।

दीक्षाप्रकार:

अग्निष्टोमे प्रथमादीक्षा अप्सु दीक्षेति । द्वितीया नवनीतदीक्षा । तृतीया कृष्णाजिनदीक्षा एवंतिस्रो दीक्षा:[2] ।

अप्सुदीक्षा

अत्र यजमानस्य केशवपनम् । अध्वर्यु: वस्त्रोपवस्त्रे, द्वाविंशति दर्भ-पिञ्जुलानि च संगृह्य - 'एहि यजमान' इति प्रैषं ददाति । यागमण्डपे पूर्वद्वारेण यजमानेन सह तीर्थदेशं गत्वा यजमानं प्राङ्मुखं उपवेशयति । दक्षिण गोदानार्थं

---

(१) तस्यै तद् व्रतम्, नानृतं वदति - बौ० श्रौ० २।२० ।

(२) एका तिस्रो वा दीक्षा: । बा० श्रौ० अ० ४, ख २, सू० १७ ।

अद्भिः "आप उन्दन्तु जीवसे०" इति मन्त्रेण उनत्ति । दर्भपिञ्जूलं द्वेधा कृत्वा एकभागं दक्षिणे गोदाने ऊर्ध्वाग्रं "ओषधेत्रायस्वैनं" इति मन्त्रेण निदधाति । तस्योपरि "स्वधिते मैनं हिंसीः" इति मन्त्रेण स्वधितिं तिर्यन्वं निदधाति[1]।

"देवश्रूरेतानि प्रवपे" इति मन्त्रेण स्वधितिना केशान् वपति । उक्तं केशस्थानं "स्वस्त्युत्तराण्यशीय" इति मन्त्रेण यजमानः अभिमृशति । एवमेव प्रकारेण समन्त्रकं उत्तरे गोदाने कर्मकृत्वा, अध्वर्युः नापिताय क्षुरं प्रयच्छन् "नापितोऽस्य केशश्मश्रुं मे निकृन्तनं प्रकुरुतात्" इति प्रैषं ददाति । ततः पत्नी दीक्षार्थं प्रतिप्रस्थाता दक्षिणमुपपक्षाणादि सर्वं कर्म तूष्णीं कृत्वा नापिताय क्षुरं प्रयच्छन् "नापितोऽस्य पक्षं मे निकृन्तनं मे प्रकुरुतात्" इति प्रैषं ददाति । उभयोः नखनिकृन्तनं सव्यस्याग्रे कनिष्ठिकातः कुर्यात् । वपननखनिकृन्तनान्ते अध्वर्युः यजमानं "आपो स्मान् मातरः

---

(१) आप उन्दन्तु जीवसे० - - - - - तनुवं मे पाहि । तै० सं० १।२।१
केशश्मश्रुवपते । नखानि निकृन्तते० । तै० सं० ६।१-२ आपउन्दन्तु जीवसे
दीर्घायुत्वाय वर्चसे - - - - - - अहतं वासः परिधत्ते बौ० श्रौ०
६।२ । पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति । अद्भिरभि-
षिञ्चन्ति० । ऐ० ब्रा० १।३ ।
आपउदन्तु जीवसे० - - - - - - - तनुवं मे पाहि तै० सं० १।२।१
केशश्मश्रुवपते नखानि निकृन्तते० तै० सं० ६।१।२ आप-उन्दन्तु जीवसे
दीर्घायुत्वाय वर्चसे - - - - - - - - - - - - - - अहतंवासः
परिधत्ते । बौ० श्रौ० ६।२ ।
पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति । अद्भिरभिषिञ्चन्ति० ।
ऐ० ब्रा० १।३ ।

शुन्धन्तु०" इति मन्त्रेण अभिषिञ्चति प्रप्लावयति च । प्रतिप्रस्थाता पत्नीं अद्भिः तूष्णीमाप्लावयति । स्नानान्ते वस्त्रेण उभयोः प्रक्षिणापयति । ततः पवित्रेण सहितं स्नानाङ्गमाचमनं कर्मप्रवेशार्थं द्वितीयं स्मार्तमाचमनं कारयति । प्रतिप्रस्थाता पत्नीमपि तूष्णीमाचमनं कारयति । ततः प्रदक्षिणं अहतवस्त्रपरिधानं "अहतं वासः परिधत्ते" । इति मन्त्रेण । इति अप्सुदीक्षा ।

नवनीतदीक्षा

---

यजमानः हस्ते नवनीतं गृहीत्वा तेन अग्रे मुखं प्रतिलोमं "महीनां पयोऽसि०" इति मन्त्रेण आशिरः अभ्यङ्क्ते[1] । अध्वर्युः यजमानस्य अनुलोमं पृष्ठाङ्गानि अभ्यंक्ते । प्रति प्रस्थातापि अनन्तरं पत्न्याः सांके अभ्यंक्ते च[2] । ततः अध्वर्युः यजमानस्य नेत्रयोः शेरषिं कंटकेण सव्येन पाणिना अञ्जनेन त्रिवारं दक्षिणमञ्जनक्ति । "वृत्रस्य कनीनिकासि" इति मन्त्रेण सकृत् तूष्णीं द्विवारम्। सव्यमध्यञ्जनं द्विवारमेवा प्रतिप्रस्थाता तूष्णीं पत्नीमपि अनक्ति । ततः यजमानं पत्नीं च, मुख, नाभि, गुल्कस्थानादि पवित्रकरणम् । सप्तभि-दर्भपिञ्जुलैः "चित्पतिस्त्वा पुनातु०" इति मन्त्रेण मुखं पावयति । द्वितीयसप्त-

---

(१) अथास्यैतन्नवनीतं विचितशराव - - - - अनुलोमम् पादाभ्या मन्योऽस्य पृष्ठमभ्यनक्ति० । बौ० श्रौ० ६।२ । महीनां पयोऽसि० - - - तस्यैत-पवित्रत्वे० । तै० सं० १।२।१ नवनीतेनाभ्यंक्तेऽनुलोमं यजुषा० तै० सं० ६, प्र० १। अनु० १ । नवनीतेनाभ्यज्यन्ति० एकविंशत्यादर्भपिञ्जुलैः पावयन्ति, ऐ० ब्रा० १।३ ।

(२) यावदेवात्राध्वर्युरवेष्टति तावदेष प्रतिप्रस्थाता पत्न्यै दक्षिणामुपपद्य-मङ्गभिरुनक्ति तूष्णीं । बौ० श्रौ० ६।३ ।

मिर्दर्भं पिन्जुलैः "वाक्पतिस्त्वापुनातु" इति मन्त्रेण नाभिं, तृतीय सप्तभि-
र्दर्भपिन्जुलैः "देवस्त्वासवितापुनातु" इति मन्त्रेण गुल्फौ पावयति । ततः
तानि दर्भाणि प्रोक्ष्य उदङ्० निरस्य, अध्वर्युः "तस्य ते पवित्र पते:" इति
मन्त्रं यजमानं वाचयति । इति नवनीतदीक्षा ।

शालाप्रवेशः -
------------

अध्वर्युः आत्मनः सव्यं पाणिं यजमानेन ग्राहयित्वा शालामानयति ।
पूर्वद्वारेण प्रवेशयति । वेदुत्करावन्तरेण प्रवेश्य अग्रेणाहवनीयं नीत्वा दक्षिणतः
उदङ्०मुखं कृत्वा यजमानं स्वासनेउपवेशयित्वा आहवनीयं "त्वं दीक्षाणामधि-
पतिरसि० । १ । इहमासन्तं पाहि[1] । २ ।। इत्युभाभ्यां मन्त्राभ्यां ईक्षयति ।
अस्मिन्नेव काले प्रतिप्रस्थाता पत्नीं अपरेण द्वारेण प्रवेश्य उत्तरेण गार्हपत्यं,
प्राचीमुदानयन् "प्रैतु ब्रह्मणस्पत्नी०[2]" इति मन्त्रं वाचयति । मन्त्रवाचनानन्तरं
वेदुत्करावन्तरेण गत्वा, पत्नी जघनेन गार्हपत्यमासनात् तृणं निरस्योपविशति[3] ।

---

(१) अथैनं सव्ये पाणावभिपात्य - - - - - - - - इमासन्तं पाहीत्यात्मा-
नम्, बौ० श्रौ० ६।२ ।

(२) आवोदेवासईमहे - - - - - - - - - इहमासन्तं पाहि ।तै०सं०१।२।१ ।

(२) अथैनामानीयापरयाद्वाराशालां प्रपाद्य - - - - प्रैतुब्रह्मणस्पति० ।
- बौ० श्रौ० ६।३ ।

( प्रैतुब्रह्मणस्पत्नीवेदिः - तै० सं० ३।५।६ ।

(३) अथ जघनेन गार्हपत्यमुपसीदति ।
- बौ० श्रौ० ६।३ ।

दीक्षणीयेष्टिः -
---

दीक्षणीयानुष्ठानं दिवैव कर्तव्यम् । इयमिष्टिः पौर्णमास-
तन्त्रेण आज्येष्ठान्तां[1] भवति ।

देवता - अग्नाविष्णू प्रधान देवते ।
हविः - आग्नावैष्णवैकादशकपालः पुरोडाशः ।

प्रधानदेवतानुष्ठानं उपांशु तन्त्रेण भवति सप्तदशसामिधेन्यः[2] वार्त्रघ्नावाज्यभागौ[3] ।

प्रधानस्य याज्यापुरोनुवाक्ये -
---

अग्निर्मुखं प्रथमो देवतानां० । इति पुरोनुवाक्या ।
अग्निश्च विष्णोतप उत्तमं० । इति याज्या[4] ।

इडोपाह्वाने सूक्तवाके च यजमानस्य निनामदेशो न भवति ।

आगूस्वरूपम् -
---

[*]उपहूतो यं यजमानः इत्यस्मात् उपरिष्टात् तस्मिन्नुपहूतः इत्यस्मात्
पुरस्तात् यः पदसमुदायः, आशिष इत्युच्यते । तत् स्थाने यः पदसमुदायः

---

(१) अथ पृष्ठ्यां स्तोत्वापिः प्रणीयाग्नावैष्णवमेकादशकपालं -- दीक्षणीया
मिष्टिं निर्वपति । बौ० श्रौ० ६।३ । अग्नाविष्णू, आ०श्रौ० ४।१।२ ।
(२) सप्तदश सामिधेनीरनुब्रूयात् । ऐ० ब्रा० १।१ ।
(३) वार्त्रघ्नावेव कुर्यात् - ऐ० ब्रा० १।४-६ ।
(४) अग्निर्मुखं प्रथमो देवतानाम् - - - - याज्यानुवाक्येभवतः अग्निर्मुखं
प्रथमो देवतानां० - - - - यजमानाय यच्छमिति । आ०श्रौ० ४।२।३

इदानीं पठ्यते असौ आगूरित्युच्यते । सूक्तवाके "आशास्ते यं यजमानः" इत्यस्मादुपरिष्टात् "आशास्ते यदनेन हविषा इत्यस्मात्पुरस्तात् यः पदसमुदायः आशिष इत्युच्यते । तत् स्थाने यः पदसमुदायः इदानीं पठ्यते सा च आगूः । "अस्य यज्ञस्यागुरुदृचमशीय" इत्युभयत्र आगूः । अस्यायमर्थः - अस्य प्रारब्धस्य यज्ञस्य समाप्तिं प्राप्नुयामिति तस्मिन्नुपहूतं इतीष्टायाम् । आशास्ते इति सूक्तवाके ।[1]

दीक्षाहोमः -

---

आज्येडान्ते उलूखलेमुसल[2] इत्येव हुत्वाप्राङेत्याध्वर्युरेव मन्त्रेण ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यवनीय यजमानान्वारब्धः स्रुवेण "आकूत्यै प्रयुजेऽग्नयेस्वाहा[3] ।। १ ।। मेधायै मनसेऽग्नये स्वाहा ।। २ ।। दीक्षायै तपसेऽग्नये स्वाहा ।। ३ ।। सरस्वत्यै पूष्णेऽग्नये स्वाहा ।। ४ ।।" समन्त्रकं चतस्रो दीक्षाहुतीः जुहोति । पुनः स्रुच्यां चतुर्गृहीतं "आपोदेवीर्बृहती०" इति मन्त्रेण जुहोति । पुनः चतुर्गृहीतेन "विश्वेदेवस्य नेतुः" इति मन्त्रेण जुहोति । ततः प्रणीतानिनयनादि दीक्षणीयाशेष समापनम् । इति दीक्षणीयेष्टिः ।

---

(१) इदमादीव्यार्या सूक्तवाके चागूराशीः स्थाने । उपहूतोऽयं यजमानोऽस्य० आशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उह च मशीयेत्याशास्ते, बौ० श्रौ० अ० ४, ख० २, सू० ७-६ ।

(२) अथाध्वर्युः प्रदक्षिणमावृत्य - - - - - दीक्षाहुतीर्जुहोति
बौ० श्रौ० ६।३ ।

(३) आकूत्यैप्रयुजेऽग्नयेस्वाहा - - - - - - अन्तर्वेदिनिनयति
तै० सं० १।२।२ । बौ० श्रौ० ६।४ ।

कृष्णाजिन दीक्षा -

अग्रेणाहवनीयं पर्याहृत्य अध्वर्युः साङ्गं शृङ्ग विषणादि सहितं कृष्णाजिनं, वासः, मेखलां, औदुम्बरं दण्डं, उष्णीषं च यजमानाय प्रयच्छति[१]। प्रतिप्रस्थातापत्न्यैकुम्भकुरीरं वासः, योक्त्रं, शंकुं च प्रयच्छति। ततः तं कृष्णाजिनं - अध्वर्युः यजमाना यतने प्राचीनग्रीवमुत्तरलोमं स्तृणाति[२]। यजमानः प्राङ्मुखः दक्षिणाङ्गुष्ठाङ्गुलीभिः "ऋक् सामनोशिल्पेस्थः" इति मन्त्रेण शुक्लकृष्णभागे सम्पृशति। दक्षिणं जान्वाच्य "इमां धियं०" इति मंत्रेणाभि सर्पति[३]। ततः "ऊर्गस्यां गिरसि०[४]" इति मन्त्रेण कटिप्रदेशे प्रदक्षिणं मेखलां पर्यस्यति। निष्टर्क्यं ग्रन्थिं करोति। सहैव प्रतिप्रस्थातायोक्त्रेण पत्नीं "आशासानासौमनसं०" इति मन्त्रेण संनह्यति। अध्वर्युः यजमानाय "विष्णोः शर्मासि शर्म यजमानस्य शर्म-मेयच्छ" इति मन्त्रेण उष्णीषं प्रयच्छति। तस्मिन् उष्णीष वस्त्रान्तराल छिद्रेषु पश्यन्तं यजमानं "नक्षत्राणां मातीकाशः पाहि:" इति मन्त्रं वाचयति। ततः यजमानं प्रदक्षिणमुष्णीषेण शिरो वेष्टयति श्रियाते शिरो वेष्टयामी ति

---

(१) अग्रेणाहवनीयं पर्याहृत्य - - - - - - -शङ्कुं च। बौ० श्रौ० ६।४।

(२) अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति, बौ० श्रौ० ६।५।

(३) तस्य शुक्लकृष्णेसंमृशति - - - - - नावं रुहेमेति। बौ० श्रौ० ६।५।
ऋक् सामनोशिल्पेस्थः। इमां धियं०। तै० सं० का० १।२।२।

(४) ऊर्गस्याङ्गिरस्यूर्णम्रदा० - - - - - - अत्रमुष्टी करोति वाचं यच्छति बौ० श्रौ० ६।५।
ऊर्गस्याङ्गिरस्य० - - - - - वातादा रम्भो तै० सं० १।२।२।

मन्त्रेण । सहैव प्रतिप्रस्थाता पत्न्यै कुंभकुरीरमध्यूहति । अध्वर्युः "इन्द्रस्य योनिरसि०" इति मन्त्रेण यजमानं कृष्णविषाणां प्रयच्छति । यजमानः "मामा हिंसीः०" इति मन्त्रेण गृह्णाति विषाणां वस्त्रान्ते बध्वा, तया अन्तर्वेदि लोष्ठं "कृषित्वा सुसस्यायै०" इति मन्त्रेणोद्धन्ति । ततः दक्षिणं शिरोदेशं "सुपिप्पलाभ्यस्त्वौषधीभ्यः" इति मन्त्रेण कण्डूयते । प्रतिप्रस्थाता-पत्न्यावसनान्ते शंकुं बध्वा आदिशति - एतेन कण्डूयस्वेति । ततः यजमानाय आस्य सम्मितं ऊर्ध्वाग्रं औदुम्बरं दण्डं "सुपस्था देवो वनस्पतिः" ० इति मन्त्रेणाध्वर्युः प्रयच्छति । "ऊर्ध्वो मा पाह्योदृचः ०" इति मन्त्रेण यजमानः प्रतिगृह्णाति । अध्वर्युः यजमानं "स्वाहा यज्ञं मनसा स्वाहा०" इति मन्त्रं वाचयति । ततः यजमानः मुष्टी[१] कृत्वा वाचं यच्छति आ नक्षत्रो दयात् । इति कृष्णाजिन दीक्षा ।

दीक्षावतो यजमानस्य उद्घोषः -

---

अध्वर्युः आहवनीयस्याग्रे तिष्ठन् त्रिवारं उपांशु स्वरेण आह - अदीक्षिष्टायं ब्राह्मणः असौ इति यजमानस्य नाम गोत्र निर्देशं कृत्वा, अमुष्य-पुत्रः, अमुष्यपौत्रः, अमुष्यपौत्रः, अमुष्यनप्ता, तं "इन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यश्च सोमपेभ्यः प्रब्रूमः ।" ततः अध्वर्युः मण्डपात् बहिर्निष्क्रम्य, त्रिरुच्चैः उद्घोषणं करोति "दीक्षितोयं ब्राह्मणः" इति । अनन्तरं प्रतिप्रस्थात्रादयः ऋत्विजः आहुः - दीक्षितोयं

---

(१) मुष्टी कुरुते० । ऐ० ब्रा० १।३ ।

ब्राह्मणः[1] ।

दीक्षितयजमानस्य अनुशासनं संशास्ति[2] तस्य स्वरूपम्[3] -

दीक्षितोऽसि दीक्षितवादं वद सत्यमेववद मानृतं मास्मयिष्ठा मा कण्डूयथा मापावृथा यदिस्मयासा अपि गृह्यस्मयासे यदि कंडूयासे कृष्णविषाणया कंडूयसेऽर्धदिवाचं विसृजेर्वैष्णवीमृचमनुब्रवतान्मात्वान्यत्र दीक्षितविमितात् सूर्योऽभ्युदियान्माभि निम्रुक्तायानि देवतानामानि यथास्यातं तान्याचक्षाण उपरिष्टाद्विचक्षणं धेहि चनसि तवतीं विचक्षणवतीं वाचं वद कृष्णाजिनान्याध्यवहोल्था दंडाच्च । दीक्षाव्रतादि क्रमे विविधानि प्रायश्चित्तानि मन्त्रपाठरूपाणि कथितानि सन्ति ततः यजमानः स्वायतने कृष्णाजिनमास्तीर्य अग्न्यभिमुखः शेते । मध्यरात्रे अध्वर्युः यजमानं प्रबोध्य "त्वमग्नेव्रतपाअसि०"[4] इति मन्त्रं वाचयति । ततो यजमानः "देवीं धियं मनामहे०" इति मन्त्रेण जपः

---

(१) अथाह दीक्षिष्टायं ब्राह्मणोऽसावित्थं - - - - देवमनुष्येभ्यः प्राहेति ब्राह्मणम् । बौ० श्रौ० ६।५ ।
अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह० त्रिरुच्चैः ।
तै० सं० ६।१।४ ।

(२) अथैनं संशास्ति । बौ० श्रौ० ६।५ ।

(३) दीक्षितोऽसि दीक्षितवादं - - - - - भूर्भुवः सुवर्व्रतं कृणुतव्रतं कृणुतेति त्रिर्वाचं विसृजते । बौ० श्रौ० ६।६ । तस्माद् व्रूनापोनैरास्से च नरति० तस्माद्दीक्षितं नान्यत्र - - - कृष्णाजिनमुत्तरं भवति । ऐ०ब्रा० २।३ । दीक्षितेन सत्यमेव वदितव्यम्० विचक्षणवतीं वाचं वदेत० ।। ऐ०ब्रा०१।

(४) त्वमग्नेव्रतपाअसि० । देवीं धियं मनामहे, तै०सं० १।२।३, बौ०श्रौ० ६।

आचामति । पश्चात् "शिवा: पीता०" इति मन्त्रं जपति । तत: प्रतिप्रस्थाता दत्तं व्रतं (पय:) पत्न्यपरिश्रित्य तूष्णीं व्रतयित्वा निर्णिज्यपात्रे प्रयच्छत: । तत: अध्वर्यु: अपररात्रे प्रेष्यति ।

प्रैषा: --

(१) त्रिस्तनव्रतं दोह्यति[१] । (२) अग्नीन् ज्योतिष्मत: कुरुता । (३) व्रत्यवाचं यच्छ । (४) पत्नि । वाचं यच्छ ।

पश्चात् व्रतदुग्धं दोहयित्वा अग्निहोत्रविधिं वेष्टयित्वा शिष्यै आतपति । तत: यजमान: उदित आदित्ये श्रोणशालां तिष्ठन् "भूर्भुव: सुव:" इति व्रतं कृणुत इति त्रिवारं वदति । इति यजमान नियमा: ॥

प्रायणीयेष्टि: -

अध्वर्यु: "एहि यजमान"[२] इति प्रैषं ददाति । प्रैषानन्तरं यजमान: पूर्वद्वारेण शालां प्रपाद्य स्व स्थाने नियमेन उपविश्य, "प्रायणीयेष्ट्याहं यक्ष्ये" इति सङ्कल्पं करोति । प्रायणीयेष्ट्यां पञ्चदशसामिधेन्य: भवन्ति ।

देवता -

१- पथ्यास्वस्ति: । २- अग्नि: । ३- सोम: । ४- सविता ।

---

(१) बौ० श्रौ० ६।७ ।

(२) अथाह हि यजमान ------ प्रायणीयां इष्टिं निर्वपति । बौ० श्रौ० ६।१० ।

५- अदितिश्च प्रधानदेवता: । चतुर्थ आज्य हविष: । आदित्यै चरु: । पञ्चप्रयाजा: वार्त्रघ्नावाज्यभागौ । प्रधानदेवता उपांशु तन्त्रेण यष्टव्या:[१] ।

प्रायणीयेष्ट्यां पञ्चप्रधानदेवतानां याज्या पुरोनुवाक्या इमा: कथिता:[२] -

१- पथ्यास्वस्ति: - "स्वस्तिन: पथ्या०" इति पुरोनुवाक्या ।
"स्वस्तिरिद्धि प्रपथे०" इति याज्या[३] ।

२- अग्नि: - "अग्नेनय सुपथा राये अस्मान्[४]०" इति पुरोनुवाक्या
"आदेवानामपिपन्थामगन्म[५]०" इति याज्या ।

३- सोम: - "त्वं सोम प्रचिकितोमनीषा[६]०" इति पुरोनुवाक्या ।
"यातेधामानि दिविया पृथिव्यां[७]" इति याज्या ।

(१) पञ्च देवता यजति० - - - - तै० सं० ६।१।५ । आदित्यश्चरु: प्रायणीयोभवत्यादित्य उदयनीय: ० - पथ्यां यजति० अग्निं यजति० सोमं यजति० सवितारं यजति० उत्तमादितिं यजति० पञ्चदेवता यजति । ऐ० ब्रा० १।७-११ पथ्या स्वस्तिरग्नि: सोम: सवितादिति: । आ० श्रौ० ४, ३, सू० २ ।

(२) स्वस्तिन: पथ्यासुधन्वसु - - - - देवग्निर्योनिनुष्यतोनिपातीत्येते । ऐ० ब्रा० १।७-११, स्वस्तिन: पथ्या सुधन्वस्वितद्वे अग्नेनयसुपथारायो अस्माना देवनामपि पन्थामगन्म त्वं सोमप्रचिकितोमनीषा० आ०श्रौ० अ० ४, खं० ३, सू० २ ।

(३) स्वस्तिन: पथ्या० । स्वस्तिरिद्धि० । ऋ०सं० १०।६३, १५-१६ ।

(४) अग्नेनयसुपथा० । ऋ० सं० १।१८९।१ ।

(५) आदेवाना० ।ऋ०सं० १।९१।४ । (६) त्वं सोमप्रचिकितो० ऋ०सं०१।९१।१

(७) यातेधामानि० ऋ० सं० १।९१।४ ।

४- सविता - "आविश्वदेवं सत्पतिं०" [१] इति पुरोनुवाक्या ।

'य इमा विश्वा'[२] "~~महीमूषुमातरं०~~" [२] इति याज्या ।

५- स्विष्टकृद्भागे - "सेदग्निरग्नीं" [३] इति पुरोनुवाक्या ।

"सेदग्नियोविनुष्यतो०" इति याज्या ।

६- अदितिः - "सुत्रामाणं पृथिवीं०" [४] इति पुरोनुवाक्या ।

"महीमूषुमातरं०" [५] इति याज्या ।

अध्वर्युः अत्र स्मार्तवत् आज्यं संस्कृत्य आहवनीये "कविर्यज्ञस्यवितनोति०" इति मन्त्रेण स्रुवाहुतिं जुहोति [६] । ततः शालात् बहिः निष्क्रम्य, सोमक्रयार्थं सोमविक्रयिणं "सोमविक्रयीन् । सोमंशोध्य यथा सम्प्रैषं [७] ते कुर्वन्ति [८] । अथ पृष्ट्या दानादि चरुकल्पेन पयस्यादित्यं चरुं श्रपयित्वा "सूर्यं ते चक्षुः । २- वातं प्राणः । ३- द्यां पृष्ठम् । ४- अन्तरिक्षमात्मा । ५- अङ्गैर्यज्ञम् । ६- पृथिवीं शरीरैः । इति षड्ढोत्रा अन्तर्वेद्यां सद्यः प्रयाजशेषेण पञ्चकृत्वा, ध्रुवामभिघार्य

---

(१) आ विश्वदेवं० । ऋ० सं० ५।८२।७ ।

(२) य इमा विश्वा० ऋ० सं० ५।८२।९ ।

(३) सेदग्निरग्नीं० ऋ० सं० ७।११।१४-१५ ।

(४) सुत्रामाणं० ऋ० सं० १०।६३।१० ।

(५) महीमूषुमातरं, आ० श्रौ० २।३ ।

(६) आज्यं विलाप्योत्पूयाहवनीये स्रुवाहुतिं जुहोति कविर्यज्ञस्य०, बौ० श्रौ० ६।१० ।

(७)- कविर्यज्ञस्य वितनोति पन्था० तै०सं० ३।५।५ ।

(७) बौ० श्रौ० ६।१०, तै० सं० ६।१।६ ।

(८) अदितं चरुं श्रपयित्वा - - - - अदितिमिष्ट्वा मारुतीमृचमन्वाह मारुतोयवक्षोदिन इति । बौ० श्रौ० ६।१०-११ ।

चरुप्रभृतौ, आज्यभागाविष्ट्वा, ध्रुवाज्यात् चतुर्गृहीतैः प्रदक्षिणं प्रागादिषु पथ्यास्वस्त्यादीन् उपांशु इष्ट्वा, अदब्ध्यनुमंत्रिते, चरूणामध्ये अदिति-मिष्ट्वा - अन्वादेवानुमन्त्रिते "मरुतोयद्वोदिवः" इति मन्त्रेणमारुतीमन्वाह ।

अथस्विष्टकृतः -

---

उपस्तीर्य, चतुर्ध्रुवाज्यात्, सकृत् चरोः उत्तरार्धादवदाय, द्विरभि-घार्य, मेक्षणं स्रुचोरधोनीत्वाऽग्नीध्रप्रयच्छन्नाह - "अतिवाल्यतादेवमानुषीः" इत्युक्त्वा, अत्याक्रम्य, आश्राव्य, स्विष्टकृतं प्रेष्य, आग्नीध्रेण मेक्षणेऽग्निं प्राङ्नीत्वा, अभ्युक्ष्य, उत्तरतः सादिते स्रुक् संक्षालनादि कृत्वा, प्राशित्रमवदाय, इडामुपस्तीर्य, ध्रुवाज्यात् अष्टकृत्वा द्विश्चरोरवदायाभिघारयति । हवि-रुच्छिष्टमुद्धास्याह - "अनुच्छिष्टोकुर्वन्" एतं चरुं व्युद्धृत्य प्राश्नीत ।[१] अथैतान् चरुस्थालीं सदाभकाणामेतान् मेक्षणमेतं वेदमेतत् बर्हिश्चतुष्टयमुदय-नीयाय निदध्यात् । परिकर्मिणः चरुं, व्युद्धृत्य, प्राश्य, स्रुक् विमोकान्तं यथाल्पादि स्थापयन्ति । अध्वर्युः "बलन् प्रस्थास्यामि" इत्यादि स्रुग् विमो-कान्ता प्रायणीया सन्तिष्ठते । आश्वलायनश्रौतसूत्रानुसारेण शंयुवाकान्ता प्रायणीया भवति ।

---

(१) अथोपस्तीर्योत्तरार्धाच्च - - - - - - - - - - - - अतिवाल्यता-देवमानुषी० - - - - - - - - - - - - अनुच्छिष्टोकुर्वन्० - - - - - - - - - - - - - - - संटवन्तः प्रायणीयः सन्तिष्ठते । बौ० श्रौ० ७।११-१२ ।

सोमक्रयः -

अध्वर्युः प्रणीतास्तूष्णीं निनीय, तूष्णीं ध्रुवामाप्याय्य ततः चतुर्गृहीतं आज्यं गृहीत्वा, सूत्रेण हिरण्यं निष्टर्क्यं बध्वा, तत् दर्भमूले प्रग्रथ्य, जुहूवामवदधाति । अन्वारब्धेयजमाने "इयं ते शुक्रतनूः" अथ च "शूरसिवृताग्नसा०" इति मन्त्रद्वयेन आहुतिद्वयं जुहोति । पुनः चतुर्गृहीतं गृहीत्वा, स्फ्यं, उदपात्रं, बर्हिः, हिरण्यं चादाय, "एहि यजमान" इत्युक्ते पदरणो हस्तया पत्न्यानुगतेन यजमानेन सहपूर्वयाद्वारोपनिष्क्रम्य, श्रोणशालां तिष्ठन् चतुर्गृहीतं जुहूवाज्यं "शुक्रमस्यमृतमसीति" मन्त्रेण यजमानमवेक्षयति । ततः हिरण्येनव्यवधाय "सूर्यस्य चक्षुरारुहेति" इति मन्त्रेण आदित्यमवेक्षयति । "चिदसिमनासिधीरसि०" इति मन्त्रेण सोमक्रयणीं (गौं) अनुमन्त्रयते । अध्वर्युः यजमानं प्रेष्यति । "दक्षिणस्येमस्य सप्तमं पदं गोपयस्वम्" इति । तस्याः उदङ्नीयमानायाः सोमक्रयण्याः पुरोदक्षिणपादस्य षट्पदान्यनुक्रामति[१] ।

---

(१) अत्रैतत्पूर्णपात्रमन्तर्वेदि निनयति० - - - - - - - - - - इयंतेशुक्रतनूः यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि० सूर्यस्य चक्षुरारुह० तामनुमन्त्रयते चिदसिमनासि० तस्य षट् पदान्यनुनिष्क्रामति ।

- बौ० श्रौ० ६।१२

इयं ते शुक्रतनूरिदं० । शुक्रमस्यमृतमसि । चिदसिमनासि० ।

- तै० सं० १।२।४ ।

राजानं क्रीणन्ति । आ० श्रौ० ३०४, सं० ४ सू० ८ ।

तत्र प्रतिपदानुक्रमणे मन्त्राः -

१- वस्व्यसि । २- रुद्रासि । ३- अदितिरसि । ४- आदित्यासि ।
५- शुक्रासि । ६- चन्द्रासि । सप्तमं हस्तेन "बृहस्पतिष्ट्वासुम्नेे" इति मंत्रेण गृह्णाति[१]। हस्तस्थितं हिरण्यं पदेनिधाय "पृथिव्यास्त्वामूर्धन्निति" मंत्रेण जुहोति । हिरण्यमपनीय "परिलिखितं रक्षः" इति मन्त्रेण स्फ्येन पदं त्रिः परिलिख्य, त्रिवारं स्फ्येनोप संगृह्य "अस्मेरायः" इति मन्त्रेण पदरण्यां संवपति । "त्वेरायः" इति मन्त्रेण यजमानाय प्रयच्छति । "तो तेरायः" इति मन्त्रेण यजमानपत्न्यापि प्रयच्छति । "स देवि देव्योर्वश्यापश्यस्व" इति मन्त्रेण सक्सोमक्रयण्यां पत्नीं समीक्षयति । "त्वष्टीमतीते सपेय" इति मन्त्रेण यजमानं ईक्षते । यजमानः "माहं रायस्पोषेण०" इति मन्त्रेण सोमक्रयणीमीक्षते । हिरण्यं प्रक्षाल्य, मध्यमाङ्गुलीं बध्वा पददेशे उदकमुपनिनीयउपरवदेशं गत्वा पृच्छति - सोमविक्रयीन्क्रुद्धस्ते सोमाः[२]? विक्रेता - शुद्धः इति प्रतिवचनं ददाति ।

---

(१) वस्व्यसिरुद्रास्यदितिरस्यादित्यासि० - - - - पदमाभिगृह्णाति बृहस्पतिष्ट्वासुम्ने० - - - - जुहोतिपृथिव्यास्त्वा० - - - - परिलिखति परिलिखितं रक्षः ० - - - - - - - - - - - - यजमानः सोमक्रयणीमीक्षतेमाहं रायस्पोषेण ० - - - - - - - निपद दधाति
- बौ० श्रौ० ६।१३ ।

वस्व्यसि० बृहस्पतिष्ट्वासुम्ने० पृथिव्यास्त्वा० - - - - रायस्पोषेण विपोषम् । तै० सं० १।२।५ ।

(२) अथ पृच्छति सोम विक्रयिन्क्रुद्धस्तेसोमा इति०, पृणते गायत्री भाग इति० । बौ० श्रौ० ६।१४ ।

ततः यजमानः "एष ते गायत्रो भाग" इति मन्त्रेण सोमं राजानमुपतिष्ठते ।
ततः अध्वर्युः "अं शुनाते अंशुः पृच्यतां"[1] इति मन्त्रेण स हिरण्येन पाणिना सोमं राजानमभिमृशति । ततः अध्वर्युः "अभित्यं देवं सवितारं" इति मन्त्रेण पञ्च मुष्टीर्मिंमीते[2] ।

पञ्चमुष्टिग्रहणस्वरूपम् -

प्रदेशिनीचोपकनिष्ठिकाच, प्रदेशिनी चैवकनिष्ठिकाच । समध्यमाचैव विमानकाले अङ्गुष्ठयुजाः पुनरुक्तसंज्ञाः । कनिष्ठया मध्यमया कनिष्ठया तथैव च । प्रदेशिन्या महानाम्न्या पञ्चमुष्टीः पुनः कुरु एवं प्रकारेण गृहीत्वा शिष्टं सोमं "प्रजाभ्यस्त्वे" ति मन्त्रेण मिते प्रक्षिपति । "प्राणायत्वा" इति मन्त्रेण उष्णीषेण प्रदक्षिणं सोमं बध्नाति । "व्यानायत्वा" इति मन्त्रेण (शालाप्रवेश) अन्तावुपगूहति[3] । "प्रजास्त्वमनुप्राणिहि" इति मन्त्रेण अङ्गुल्याचकाशं कृत्वा यजमानमवेक्षयति[4] । यजमानः पृच्छति - सोमविक्रयान्

---

(१) हिरण्यवता पाणिना राजानं अभिमृशत्यं शुनाते अंशुः । बौ० श्रौ० ६।१४ अंशुनातेअंशुः तै० सं० १।२।६ ।

(२) अथ नमतिच्छन्दसचाभिमीते० - - - सर्वास्वङ्गुष्ठमुपनिगृह्णात्यभित्यं देवं सवितारं० बौ० श्रौ० ६।१४, अभित्यं देवं सवितारं तै०सं० १।२।६ ।

(३) पञ्च कृत्वो यजुषा पञ्चकृत्वस्तूष्णीं - - - - अथाति शिष्टं राजानं प्रजाभ्यस्त्वेत्युपसमूहति । बौ० श्रौ० ६।१४ । प्रजाभ्यस्त्वा० तै० सं० १।२।६ ।

(४) समुच्छ्रित्यवसनस्यान्तान् प्रदक्षिणं० - - - - - - यजमानमवेक्षयति प्रजास्त्वमनुप्राणिहि० । बौ० श्रौ० ६।१४, प्राणायत्वा । व्यानायत्वा । प्रजास्त्वमनु० । तै० सं० १।२।६ ।

क्रय्यस्ते सोम: ? स आह - क्रय्य:[1] । तत: अध्वर्यु: सोमविक्रयिणं पृच्छति - मूजक्त: ? स आह - मूजवतंेह्यि । तत: अध्वर्यु: सोमक्रयण्यासोमं पणते । गवाते क्रीणानि । स आह - क्रीत: सोम:, वयांसि व्याचक्ष्व । अध्वर्यु: उत्तरं ददाति - रवाते सोमक्रयणी चन्द्रं ते च छागाते - वस्त्रन्ते । तत: हिरण्यं दर्शयित्वा "सोमं ते क्रीणाम्यूर्जस्वन्तं०[2]" इति मन्त्रं पठित्वा यजमानाय पृच्छति । "तपसस्तनूरसि[3]" इति मन्त्रेण प्रतीच्या अजया पणते । तत: "अस्मे ते बन्धु:" इति मन्त्रेण यजमानमीक्षते । "मयि ते राय: श्रयन्तां०" इति मन्त्रेण आत्मानमीक्षते । अजां प्रदक्षिणमावृत्य, अभ्युक्ष्य, उदीचीं कौत्साय दत्वा, कौत्सात् राजानमादत्ते[4] । इति सोमक्रय: ।

---

(१) अथोपत्थाय पृच्छति सोमविक्रयान्० - - - - - - - छागातेवस्त्र त इति, बौ० श्रौ० ६।१४ ।
अरुणान्तां वत्सतरी माजन्ति सोमक्रयणीम् । तयोसोमं राजानं क्रीणन्ति, ऐ० ब्रा० १।२७ ।

(२) सोमं ते क्रीणाम्यूर्जस्वन्तं० - - - - - - - - - यजमानाय प्रयच्छति, बौ० श्रौ० ६।१५ ।
सोमंते क्रीणाम्यूर्जस्वन्तं० तै० सं० १।२।७ ।

(३) अथैनं प्रतीचीनं ग्रीवया अजया पणते तपसस्तनूसि० अस्मेते बन्धुरिति - - - - - - - - - - मयि ते राय: श्रयन्तामित्यात्मानम् ।
- बौ० श्रौ० ६।१५ ।
तपसस्तनूसि० । अस्मे ते बन्धु: । मयि ते राय: श्रयन्तां०
- तै० सं० १।२।७ ।

(४) अथैनां प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्य० - - - - - - - - कौत्साद्राजानमादत्ते, बौ० श्रौ० ६।१५ ।

क्रीतं राजानं यथोक्तदेशे स्थापनम् -

---

ब्रह्मा गृहीतं सोमं "इन्द्रस्योरुमाविश दक्षिणं" इति मन्त्रेण यजमानस्य दक्षिणोरौ स्थापयति । अध्वर्युः कृष्णविषाणया "वयः सुपर्णा उपसेदुः" इति मन्त्रेण अस्योष्णीषमपनयति । यजमानः अद्भिः अभ्युक्ष्य, दक्षिणोरौ स्थापितं सोमं परिकर्मिणे दत्वा, मैत्रावरुणाय "त्वां गावो वृणते राज्याय०" इति मन्त्रेण दण्डं दद्यात्, मैत्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामि । अध्वर्युः शुक्लोर्णास्तुकां यजमाने ददाति । कृष्णां "इदमहं सर्पाणां दन्दशूकानां ग्रीवामुपग्रथ्नामि । इति मन्त्रेण ग्रथ्नाति । तयाविषाणया सोमक्रयिणं - "सोमविक्रयिणितमः"

[1] [2] [3] [4] [5] [6]

---

(१) यजमानस्योरौ दक्षिण आसादयन्तीन्द्रस्योरुमाविश०, बौ०श्रौ० ६।१५, इन्द्रस्योरुमाविश० तै० सं० १।२।७ ।

(२) वयः सुपर्णा उपसेदु० तै० ब्रा० २।५।८।३ ।

(३) अथैनं प्रत्यपोर्णुते यजमानोऽद्भिरभ्युक्ष्य० - - - - बौ०श्रौ० ६।१५ ।

(४) क्रीते सोमे मैत्रावरुणायदण्डं प्रयच्छति० । तै०सं० ६।१।४ ।

(५) अथ यजमानं शुक्लयोर्णास्तुकयाभ्यस्यति० - - - - अथैतां कृष्णामुपमुपग्रथ्नाति इदमहं सर्पाणां० । बौ० श्रौ० सू० ६।१५, इदमहं सर्पाणां० नः तै० सं० ६।१।१० ।

(६) तया सोमविक्रयिणं विध्यति सोमविक्रयिणितम इति० - - - - - - अथ सोमक्रयणाननुदिशतिस्वानभ्रानं धारे० - - - - - - - - - - - अथैनमादायोपोत्तिष्ठत्युदायुषास्वायुषो० तदभिप्रेत्युर्वन्तरिक्षमन्विहीति० कृष्णाजिनमास्तृणात्यदित्याः सदोसि - अदित्याः सद आसीदेति ।

इति मन्त्रेण ध्रुवोर्विध्यति । "स्वान भ्राजांघारे०" इति मन्त्रेण अनुदिशति ।
ततः यजमानः "उदायुषास्वायुषः" इति मन्त्रेण राजानमादाय उत्तिष्ठति ।
"उर्वन्तरिक्षमन्विहि" इति मन्त्रेण शिरसिनिदधाति ततः अध्वर्युः नीडे
"आदित्याः सदोसि" इति मन्त्रेण कृष्णाजिनं आस्तृणाति । यजमानः
आदित्याः सद आसीद" इति मन्त्रेण कृष्णाजिने राजानं स्थापयति ।
अध्वर्युयजमानौ राजानं "अस्तभ्नाद्या०"[1] इति मन्त्रेण उपतिष्ठेते । दक्षिणामुखं
शकटं परिवर्त्य राजानं स्थापयित्वा परिवहन्ति । परिवहनसमये अध्वर्युयजमानौ
प्रतीचीं गच्छतः स्वस्त्ययनमन्त्रं पठतः । ततः अध्वर्युः व्रीहीन्, अरणिं,
राजासन्दीं, सोमं च - "नमो मित्रस्य वरुणस्य चक्षसे०" इति मन्त्रेण प्रति-
मन्त्रयते । अध्वर्युः शालायाः पुरस्तात् उदगग्रस्य अनसोग्रं - स्थूणायां "वरुणस्य
स्कंभनमसि" (सर्ज) इति मन्त्रेण स्थापयति । "वरुणस्य स्कंभसर्जनमसि" दक्षिण-
स्यानुडुहश्म्यामपकर्षति । "उन्मुक्तोवरुणस्य पाशः" इति मन्त्रेण योक्त्रं
मुञ्चति ।

अत्र आतिथ्येष्टेः सङ्कल्पः -

---

यजमानः स्वासने उपविश्य आतिथ्येष्ट्याहं यक्ष्ये इति संकल्प्य,
इष्टिसाधनं कुर्यात् । अत्र अग्नीषोमावाज्यभागौ । वैष्णवो नव कपालः

---

(१) अयं न मुपतिष्ठते अस्तभाद्० वा० श्रौ० ६।२५-२६, स्वान-
भ्राजघारे० इत्यारभ्य मन्त्रविभागः अस्ति ।

- तै० सं० १।२।७-६ ।

पुरोडाशः[1]। स्यमिष्टः स्कान्ता[2] सन्तिष्ठते। अध्वर्युः बलिदानादि अश्ववालः प्रस्तरः, पन्चविधं बर्हिः, ऐक्षवौ विधृतौ, कार्ष्मर्यमयाः परिधयः[3]। यौक्लेष्म प्रक्षस्वनान्यन्वाहार्यस्थालीपर्यं पात्राण्यासाद्य, अन्वारब्धायां पत्न्यां अनुमन्त्रणं ब्रीहीणां, पन्चमुष्टीन्निर्वपति।

अत्र निर्वापमन्त्राः -
-----------------

अग्नेरातिथ्यमसि विष्णवेत्वाजुष्टन्निर्वपामि ॥ १ ॥ सोमस्यातिथ्यमसि ॥ २ ॥ अतिथेरातिथ्यमसि ॥ ३ ॥ अग्नये त्वा रायस्पोषदाव्ने ॥ ४ ॥ श्येनायत्वा सोमभृते इति पन्चमम्। इदं देवानामित्यादि तण्डुलप्रक्षालनान्तं कृत्वा, अध्वर्युः उत्तरस्य अनडुहः शम्यां "वरुणस्य स्कम्भसर्जनमसि" इति मन्त्रेण शम्यामपकर्षति। "उन्मुक्तो वरुणस्य पाशः" इति मन्त्रेण योक्त्रं मुन्चति। ततः चत्वारोब्राह्मणाः राजासन्दीमादायशालां प्रविशन्ति। यजमानः "यातेधामानि हविषा यजन्ति" इति मन्त्रेण राजान-

-----------------------------------

(१) श्मयन्त्येतमातिथ्यं वैष्णवं नवकपालम्। बौ० श्रौ० ६।१७, नवकपालो भवति० वैष्णवो भवति०। ऐ० ब्रा० १।१४-१७।

(२) स्कान्तमातिथ्यः संतिष्ठते। बौ० श्रौ० ६।१८, अथातिथ्येडान्ता - आ० श्रौ० ४।५।१।

(३) यदाश्ववालः प्रस्तरोभवत्यैक्षवीतिरश्चौ० यत् कार्ष्मर्यमयाः परिधयो भवन्ति, तै० सं० ६।२।१।

(४) अग्नेरातिथ्यमसि सोमस्यातिथ्यमसि० - - - - - - - - - - - - श्येनायत्वा सोमभृते विष्णवेत्वाजुष्टं निर्वपामोति पन्चकृत्वोयजुषा - बौ० श्रौ० ६।१७। अग्नेरातिथ्यमसि - - - - - - - सोमभृतेविष्णवेत्वा, तै० सं० १।२।१०।

मादवेशालां प्रपादयति च । आसन्दीं सोमं चान्तरेण वेद्युत्करौ नीत्वा
अग्रेणाहवनीयं पर्याणीय दक्षिणत आसन्द्यां अध्वर्युः - "आदित्याः
सदोसि" इति मन्त्रेण कृष्णाजिन मास्तृणाति । "आदित्याः सद आसीद"
इति मन्त्रेण यजमानास्तृते कृष्णाजिने राजानं स्थापयति । "वरुणोसि
धृतव्रतोवारुणमसि" इति मन्त्रेणोपतिष्ठते । ततः अध्वर्युः कृष्णाजिनांता-
नेकीकृत्य रज्वावेरे "शंयोर्देवानां सख्यात् इति मन्त्रेण ग्रथ्नाति । आसन्द्या-
मरपादयोर्मध्ये राजपादौ प्रक्षाल्यामीति ध्यायन् हस्ताभ्यां जलं सिन्चति
"मा देवानामपसन्छित्स्महि" इति मन्त्रेण । यजमानः "तत्वायामि" इति
मन्त्रेणोपतिष्ठते[1] । ततः अध्वर्युः मधुपकार्थं उद्घोषं करोति । उद्घोषणा[2]
- मा राजानं माहवनीयं चान्तरेण कश्चन संचारीन् मैनं सायुधो मासदण्डो
मा सच्छत्रो माशोष्णीषो मासावस्याधोऽनुप्रपादात् इति ।

सोमराज्ञेमधुपर्कः -

---

यजमानः मधुपर्केण पूजयति । मधुपर्कप्रयोगः सायन्तः पूर्वमेव उक्तत्वात्

---

(१) एतयैवावृतोत्तर मनउवाहं विमुन्चति० अथैते ब्राह्मणाश्चत्वारः
आसन्दी मादये० राजानमादये यातेधामानि० अथैनमुपतिष्ठते
वरुणोसि० - - - - - अथैनं वारुण्यर्चापरिचरति तत्त्वायामिन
ब्रह्मणा वन्दमान इति । बौ० श्रौ० ६।१७ ।
याते धामानि० । आदित्याः सदोसि आदित्याः सद आसीद ।
वरुणोसि० । शंयोर्देवानां० । मा देवानामपछ० । तै०सं० १।२।१० ।
(२) अथैनं संशास्ति - - - - - - अथास्मै मधुपर्कं च गां च प्राहुस्तामध्वर्यु-
र्विशास्ति । बौ० श्रौ० ६।१७ ।

अत्र न वर्ण्यते । ततः राजानं मधुपर्कं कृत्वा अध्वर्युः मदन्तीरध्यधिश्रित्य, चतुर्गृहीतान्याज्यानि - शृतमातिथ्य मित्युक्त्वा "पृथिवीहोता०" इत्यादि मन्त्रैः - अन्तर्वेद्याऽऽसाद्य संभारान् व्याचष्टे । "अग्निर्यजुर्भिः ०" "सविता-स्तोमैः" ० इत्यादि मंत्रान् पठित्वा, उत्करे कृष्णाजिनं आस्तीर्य, तत्र अधि-मन्थनशकलं निधाय "अग्नेर्जनित्रं०" इत्यादि मंत्रान् पठित्वा अग्निमन्थनं करोति । अग्निमन्थन विधिः पूर्वमेवकथितः । ततः होत्रे "अग्नयेसमिध्यमाना-यानुब्रू हि" इति प्रयाजार्थं प्रैषं कृत्वा समिधं परिशिनष्टि चतुर्थे प्रयाजे सर्वं औपभृथमाज्यमानीय प्रयाज शेषेणध्रुवां, पुरोडाशं च अभिधार्य, आज्यभागाभ्यां चरति[1] । अत्र अतिथिमन्तावाज्यभागौ । तस्य याज्यानुवाक्ये[2] - "समिधाग्निं दुवस्यत०[3]" इति पुरोनुवाक्या । "आप्यायस्व समेतुते[4]० इति याज्या । विष्णु-दैवता नित्याउपांशुवक्तव्या । प्रधानस्य याज्यानुवाक्ये - "इदं विष्णुः०[5]"

---

(१) तेन सह मदन्तीरधिश्रित्य० प्रसिद्धं चतुर्गृहीतानि वा पन्च० पुरोडाश-मुपस्तीर्णाभिधारितमुद्वास्य चतुर्होत्रामातिथ्य मासादयति० अग्नये-समिध्यमानायानुब्रूहि० प्रयाजानिष्ट्वा दद्ध०ड०त्याक्रम्य, संप्रावेण-ध्रुवामभिधार्य पुरोडाशमभिधारयतिनोपभृतम्० अथाग्नयेसोमायेत्याज्य-भागाभ्यां चरति० स्विष्टकृता चरति । बौ० श्रौ० ६।१८ ।

(२) समिधाग्निं दुवस्यत, आप्यायस्वसमेतुत इत्याज्यभागयोः पुरोनुवाक्ये-भवत - - - - - प्रप्रायमग्निभरतस्य शृण्व इति स्विष्टकृतः संयाज्ये भवत आतिथ्यवत्यौरूपसमृद्धे० स्कान्तं भवति ऐ० ब्रा० १।१४-१७ । अतिथिमन्तौ समिधाग्निं दुवस्यताऽऽप्यायस्वसमेतुत इति, आ०श्रौ० अ० ४ खं० ५ सू०३ ।

(३) ऋ० सं० ८।४४।१ । (४) ऋ० सं० १।९१।१६ ।

(५) ऋ० सं० १।२२।१७ ।

इति पुरोनुवाक्या । [1]तदस्य प्रियमभिपाथो अस्या[1] इति याज्या । स्विष्टकृति - [2]होतारं चित्ररथमध्वरस्य[2] त्यनुवाक्या । [3]प्रायमग्निभरतस्य शृण्वे[3] इति याज्या । स्विष्टकृतान्ते आज्य च इडां कुर्यात् । इयमातिथ्येष्टि: इडान्ता सन्तिष्ठते ।

तानूनप्त्र संज्ञकस्याज्यस्य संस्कार: -
------------------------------

तानूनप्त्रसंज्ञकमाज्यं तस्य समन्त्रकमभिमर्शनं कृत्विज: परस्परसख्यभावार्थं द्वेषादिराहित्यार्थं च कुर्वन्ति । अध्वर्यु: प्रणीतानिनीय, तूष्णीं ध्रुवामाप्याय्य, वेधाङ्कं सन्निधाय: ध्रुवाज्यं पन्चकृत्वो गृह्णाति[4] ।

आज्यग्रहणमन्त्रा:[5] -
---------------

१- आपतयेत्वा गृह्णामि । २- परिपतयेत्वागृ० । ३- तनूनप्त्रेत्वा गृ० । ४- शाक्वरायत्वा गृ० । ५- शक्मन्नोजिष्ठाय त्वागृ० । एतत् गृहीत-

-------------------------------------

(१) कृ० सं० १।९५।५ । (२) कृ० सं० १०।११।६ ।

(३) कृ० सं० ७।८।४ ।

(४) अङ्क्तत्पूर्णपात्रमन्तर्वेदिनिनयति - - - - - तानूनप्त्रं निगृह्णाति

बौ० श्रौ० ६।१८ ।

यत् तानूनप्त्रं समवद्यति० पन्चकृत्वोऽवद्यति - - - - - - - -

- तै० सं० ६।२।२ ।

(५) आपतयेत्वा गृह्णामि - - - - - - - - - - - - - - - - - त्वा गृह्णामीति, बौ० श्रौ० ६।१९, आपतयेत्वा गृह्णामि०, तै० सं० १।२।१० ।

माज्यं तानूनप्त्र संज्ञकं भवति । यजमानान्ता ऋत्विजः[1] "अनाधृष्टमस्यनाधृष्यं"मिति मन्त्रं जपन् हिरण्यं हस्ते धृत्वा वरण क्रमेण सर्वे ऋत्विजः यजमानश्च आज्योपस्पर्शनं करोति । ततः यजमानः प्रथमादि क्रमेण अध्वर्य्वादीनुपहूय निरवजिघ्रति । "प्रजापतौ त्वा मनसि जुहोमि"[2] इति मन्त्रेण अंभसु अद्भिः संपृच्य शालोत्तरे निनयति इति तानूनप्त्रम् ।

सोमाप्यायनम् -

---

ततः अध्वर्युः आह - आग्नीध्रं प्रैषं ददाति । प्रैषः - अग्नी-मदन्त्यापाः । इति । आग्नीध्रः - मदन्तो देवीरमृता ऋतावृधः" इति मन्त्रपाठं करोति । अध्वर्युः आह - "ताभिराद्रव" इति । ततः यजमानान्ताः प्रथमादि क्रमेण मदन्तीः उपस्पृश्य, उपोत्थाय, राजानं विस्रस्य, तत्र हिरण्य-मवधाय "अंशु रंशुस्ते०" इति मन्त्रेण राजानं आप्याययन्ति । यजमानं "आप्याययस्तान् सन्त्या इति मन्त्रं वाचयति । इति सोमाप्यायनम्[3] ।

---

(१) स यावन्तऋत्विजस्य एनत्समवमृशन्त्यनाधृष्टमस्यनाधृष्यं० यजमानमति-वाचयत्यनुमेदीक्षां० उपहवमिष्ट्वा यजमान एव निरवजिघ्रति प्रजा-पतौत्वा० - - - उत्तरतः सिन्चति । बौ०श्रौ० ६।१६, अनाधृष्ट० । अनु मे दीक्षां० । तै० सं० १।२।१० ।
[illegible] संस्थितायामाज्यं तानूनप्त्रं करिष्यन्तोऽभिमृशन्त्यनाधृष्टमस्यनाधृष्यं० आ०श्रौ० अ० ४, खं० ५ सू० ४ ।
(२) निरवजिघ्रेत् प्रजापतौत्वा मनसि जुहोमि तै० सं० ३।१।२ ।

--------अग्रिमपृष्ठेऽपि

अथनिह्नवः -

---

सर्वे ऋत्विजः अपस्पृष्ट यथायतनं उपविश्य अध्वर्युरेव वाजवतीभ्यां स्रुचौ व्यूह्य, परिधीन् समज्य यथायतनं स्रुचौ सादयित्वा विधृतीभ्यां सह प्रस्तरं गृहीत्वा प्रति शृणंस्त्रेधानक्ति । प्रस्तराय नाश्रावयति । न बर्हिरनुप्रहरति । प्रस्तरं दक्षिणार्धे वेद्यै निधाय, दक्षिणोत्तरिणौ निह्नवते । निह्नवमन्त्रं स्वां स्वां शाखामनुसृत्य पठेयुः ।[१]

प्रस्तराञ्जनविधिः -

---

प्रस्तरे बर्हिः यावन्मात्रं बद्ध्वा तेष्वेव परिधिषु एकादश समित् शकलान् उपसंगृह्य, तदुभयं आहवनीये - अतिवाल्य, अद्भिः अभ्युक्ष्य, उत्तरतः सादयति । अत्र प्रस्तरादि क्रिं सुगुप्ते स्थाने स्थापयेत् यत्नेन अग्नीषोमीय पर्यन्तं तस्य प्रयोजनत्वात् । इति प्रस्तराञ्जनविधिः[२] ।

---

पूर्वपृष्ठस्याग्रे ----

(३) अथाह अग्नीन्मदन्त्यापाइ इति - - - यजमानमतिवाचयति आप्यायप० बौ० श्रौ० ६।१६ । अंशुरंशुस्ते० । आप्यायय० । तै० सं० १।२।११ । स्पृष्ट्वोदकं राजानमाप्याययन्ति । इदमादिमदन्तोरर्ध्वं उपसत्सु । अंशुरंशुष्टे० । आ० श्रौ० ४, ५, सू० ५-७ ।

(१) स्पृष्ट्वोदकं निन्हवन्ते प्रस्तरे०, आ० श्रौ० ५, ५, सू० ८ । अथाप-उपस्पृश्य यथायतनमुपविशन्ति - - - - - तं दक्षिणार्धे वेद्यं निधाय तस्मिन् दक्षिणोत्तरिणौ निह्नुवते । बौ० श्रौ० ६।१६ ।

(२) परिधिषु शकला उपसंगृह्णाति - - - - - उत्तरतः सादयति । - बौ० श्रौ० ६।१६ ।

अवान्तरदीक्षाविधिः -

अध्वर्युः अवान्तरदीक्षां ग्रहाण - इत्युक्ते सति यजमानः "अग्नेव्रतपते त्वं व्रतानां व्रतपतिरसि" इति मन्त्रेण अग्निमुपतिष्ठते । ततः अध्वर्युः यजमानं संशास्ति । सन्तरां मेखलां समायच्छस्व । सन्तरामुष्टी कुरुष्व । तप्तव्रत एधि मदन्तीभिमार्जयस्व । उत्पूर्वं व्रतनं सृज । "याते अग्ने रुद्रियास्तनूः - स्तयानः पाहि तस्यास्ते स्वाहा इत्येतेन अतोधि-व्रतया इत्यवान्तरदीक्षा[1] ।

अथप्रवर्ग्यः - प्रवर्ग्यकरणे अकरणे च विचारः :-

"न प्रथमयज्ञे प्रवर्ग्यः"[2] । ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यः तस्माद्यदि प्रवर्ग्यवान् भवति, प्रवर्ग्याहिः क्रतुस्यात्[3] । स यदि एतत् आतिथ्येन प्रचरति, अथ प्रवर्ग्येण चरिष्यन् पुरोपसदः[4] । अग्निष्टोमे प्रवृणक्ति[5] । कामं तु यो नूचानः श्रोत्रियस्यात् तस्य प्रवृञ्ज्यात्[6] ।

---

(१) अथ यजमानमवान्तर दीक्षामुपनयत्यग्ने व्रतपते० - - - - - अथैनं० संशास्ति संतरां मेखलां समायच्छस्व - - अतोऽधिव्रतयेति ।

- बौ० श्रौ० ६।१६

अग्नेव्रतपतेत्वं० । याते अग्ने रुद्रियास्तनूः० । तै० सं० १।२।११ ।

(२) आ० श्रौ० सू० २६।७।५३ ।

(३) शतपथ ब्रा० ३।४।४।१ ।

(४) शतपथ ब्रा० १४।१।३।१ । (५) आपस्तम्बश्रौ० १५।१२।१० ।

(६) गोपथ ब्रा० २।२।६ ।, कौषितकीब्रा० ८।३ ।, आपस्तम्बश्रौ०११।२।१०

तेन अग्निष्टोम प्रथमप्रयोगे अनूचानस्य नित्यं प्रयोगः । प्रवर्ग्यवतैव योजयेत् नाऽप्रवर्ग्येण । एतैः वचनैः श्रोत्रियस्य प्रथमे अग्निष्टोमे प्रवर्ग्योपसदः प्राप्तिर्भवति ।

प्रवर्ग्यसंभारः -

(१) मदन्तीपात्रं, (२) सम्राडासन्दीं, (३) स्थूणाम्, (४) गोदोहनीं, (५) छागायैशङ्कुं, (६) महावीरधारणार्थं शफसंज्ञकं काष्ठसाधनम्, (७) उपयमनं स्रुवं, (८) रौहिणहवन्यौ, (९) द्वे धृष्टी, (१०) त्रीणिधवित्राणि, (११) षट् औदुम्बरशकलानि, (१२) त्रयोदशवैकङ्कतीसमिधः, (१३) वैकङ्कतपरिधयः, (१४) वैकङ्कतीं प्रचरणीं, (१५) कार्ष्मर्यमयाः परिधयः, (१६) सुवर्णरुक्मौ, (१७) राजतौरुक्मौ, (१८) द्वे वर्मदुघे, (१९) धेनुं, (२०) छागां, (२१) द्वौ कुशमयौ वेदौ (२२) अपरिवासितं एकं मौञ्जं, (२३) मौञ्जं रज्जुदाम, (२४) मुञ्जप्रलवान्, (२५) रौहिणपिष्टानि, (२६) सिकताः, (२७) शरावाः, (२८) पात्री, (२९) पवित्रच्छेदनानि, (३०) पवित्रे, (३१) उपवेशः, (३२) अग्निहोत्रहवणीं, (३३) शूर्पं, (३४) महावीरपात्रं, (३५) आज्यस्थालीं, (३६) प्रभूतमाज्यमिति प्रवर्ग्यसंभारकः[१] ।

---

(१) श्वो राज्ञः क्रय इत्युपकल्पयत औदुम्बरीं सम्राडासन्दीमौदुम्बरीं स्थूणां --------खरेभ्यः सिकता इति । बौ० श्रौ० ९।५ ।

प्रवर्ग्यप्रचारः[1] - प्रथम-पौर्वाह्णिक-प्रवर्ग्यप्रचारः -

तत्र अध्वर्युः ब्रह्मप्रतिप्रस्थाता अग्नीधयजमाना मदन्तीजलं स्पृष्ट्वा "नमोवाचे०"[2] इति शान्तिं पठन्ति । ततः अध्वर्युः[3] प्रवर्ग्य-संभारानासाद्य, गार्हपत्याहवनीयौत्तरेण गत्वा, उद्वासनीयौखरौ कृत्वा, उत्तरेशालाखण्डे चतुरस्रं - उदङ्निम्नं दनवन्तमुच्छ्रिष्टखरं कृत्वा, प्रचरणीयं महावीरं शफाभ्यां परिगृह्य प्रवृञ्जनीये खरे सादयित्वा, मौञ्जेन वेदेनापिधाय, दक्षिणत आहवनीयस्य संम्राडासन्द्यां कृष्णाजिने प्रागुबिलौउपशयौ महावीरौ वेदाभ्यां परिगृह्य, अग्निं शिष्टां मृदं चासाद्य, स्थूणां शङ्कुं चादाय, जघनेन गार्हपत्यं परीत्य, दक्षिणया द्वारोपनिष्क्रम्य, होतुः संदर्शे स्थूणां निखत्य, मौञ्जेनदाम्ना घर्मदुहोवत्सं बध्वा, उत्तरतः शङ्कौ छागां बध्वा, प्रवर्ग्यकर्तॄन् ऋत्विजः आह्वानं कुर्यात् । आह्वानप्रकारः[4] - अध्वर्युः "पत्न्येहि । ब्रह्मन्नेहि । होतरेहि । प्रतिप्रस्थातरेहि । प्रस्तोतरेहि । अग्नी देहि । एवं प्रकारेण आह्वानं कृत्वा, द्वाराणि परिश्रित्य, पत्नीशाले पत्नीमुपवेश्य, परिश्रित्याग्नीन् परिस्तीर्य, गार्हपत्यस्य दक्षिणतो ब्रह्मयजमानौ उपवेश्य, सपवित्रायां प्रचरण्या मदन्तीः

---

(१) अथ प्रवर्ग्यस्या वृता प्रवर्ग्येण चरन्ति, बौ० श्रौ० ९।२० ।

(२) आतिथ्येन प्रचर्य पूर्वां शान्तिमुपयन्ति नमोवाच इति । बौ० श्रौ० ९।५ ।

(३) अथाग्रेण गार्हपत्यं तृणानि संस्तीर्य - - - - - - - - - - - - प्रत्युन्नति छगलम् - बौ० श्रौ० ९।५ ।

(४) ह्वयन्तिपत्नीं - - - - - - - - - - - - - - - - - दक्षिणत-उपविशतो ब्रह्मायजमानश्च, बौ० श्रौ० ९।५ ।

जलमानीय, उत्पूय, आददान: सन्नाह - ब्रह्मन्[1] प्रवर्ग्येण प्रचरिष्यामो होतर्धर्ममभिष्टुहि । अग्नीध्रौहिणौ पुरोडाशमभिश्रय । प्रतिप्रस्थाता - प्रवर्ग्यं विहर । प्रस्तोत: सामानिगाय । इति प्रवर्ग्यं कर्मार्थं प्रैषान् दत्त्वा, "ओं प्रचर" इति ब्रह्मणाऽनुज्ञाते प्रसूत: - प्रचरणीयं महावीरं "मखायत्वा[2]" यमायत्वेति मन्त्रेण प्रोक्षति । प्रतिप्रस्थाता प्रोक्षितं महावीरमन्यत्र स्थापयति[3] । अध्वर्यु: आहवनीये कार्ष्मर्यमयान् परिधीन् परिधाय, तत्र षट् औदुम्बरान् शकलान्, वैकङ्कतीं समिधं सादयित्वा, गार्हपत्ये त्रयोदश वैकङ्कतान् परिधीन्, सुवर्णरजतौ रुक्मौ, मुञ्जप्रलवान् रौहिणपिष्टानि च सादयति ।

रौहिणपुरोडाशप्रचार:[4] -

आग्नीध्र: जघनेन गार्हपत्यं धृष्टीभ्यां प्रतीचोऽङ्गारान्निरुह्य,

---

(१) अथाध्वर्यु: सपवित्रा: प्रोक्षणीरददान आह ब्रह्मन्प्रवर्ग्येण - प्रचरिष्यामो - - - - - - इन्द्रवत: प्रचरतेति । बौ० श्रौ० ६।५ । तै० आ० ४।४-७ । तं संभृत्याहतु: ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहि, ऐ० ब्रा० १।१८ ।

(२) अथाध्वर्यु: प्रचरणीयं महावीरं प्रोक्षति यमायत्वा० - - - - - तथैव प्रतिप्रस्थाता प्रवर्ग्यं विहरति । बौ० श्रौ० ६।५ । यमा यत्वा।मखायत्वा । तै० आ० ४।४-७ ।

(३) अथाहवनीये कार्ष्मर्यमयान्परिधीन् परिदधाति तदुपसादयति षडौदुम्बरान्छकलान् - - - रौहिणपिष्टानीति, बौ० श्रौ० ६।६ ।

(४) अथैन आग्नीध्रो जघनेन गार्हपत्यमुपविश्य - - - - - - रौहिणौ पुरोडाशौ श्रपयति, बौ० श्रौ० ६।६ ।

रौहिणकपाले उपधाय, मदन्तीभिरद्भिः पिष्टानि संयुज्य, द्वौ पिण्डौ कृत्वा, कपालयोरधिश्रित्य, स्थाल्यां आज्यं तिरः पवित्रमानीय, अधिश्रित्य, उभयं पर्यग्निकरणं कृत्वा, रौहिणौ पुरोडाशौ श्रपयति । प्रतिप्रस्थाता[1] मौञ्जवेदाग्रेण महावीरं ध्रुवं पिन्वन रौहिणहवन्यौ उपयमनं च संमृज्य, आज्यमुत्पूय, रौहिणौ पुरोडाशौ उपस्तीर्णाभिघारितौ उद्वास्य, रौहिणहवनीभ्यां परिगृह्य दक्षिणं परिधिसंधिमनुदक्षिणं, उत्तरं परिधिसंधिमन्वितरं प्रान्चौ पूर्वाह्णिके प्रत्यन्चौ अपराह्णिके वेद्यामासादयति । अध्वर्युः प्रवर्ग्यीयं महावीरं शफाभ्यां सव्ये गृहीत्वा, गार्हपत्ये जनवानं सततः "प्राणायस्वाहे[2]ति मन्त्रेण सप्ताज्याहुतीर्जुहोति । ततः चतस्रः आहुतीः "दक्षाय[3] । क्रतवे । ओजसे । बलायस्वाहेति" मन्त्रेण जुहोति । आज्येन महावीरं "देवस्त्वा सवितामध्वानक्तु०" इति मन्त्रेण अनक्ति । प्रतिप्रस्थाता संमार्ग्यः राजतरुक्मं गृहीत्वा, प्रवृञ्जनीये खरे "पृथिवी तपसस्त्रायस्व" इति मन्त्रेण उपगूहति । अध्वर्युः मुञ्जप्रलवान् "अर्चिरसि०" इति कतुर्मन्त्रैः प्रदक्षिणं

---

(१) तस्मिन्काले प्रति प्रस्थातामौञ्जेन वेदेन होमार्थानि पात्राणि संमृशति महावीरं ध्रुवंपिन्वने ------------------ प्रत्यन्चावापराह्णिके, बौ० श्रौ० ९।६ ।

(२) अथाध्वर्युः प्रवर्ग्यीयं महावीरं --------- सप्तप्राणाहुतीर्जुहोतिसरस्वत्यै० इति, बौ० श्रौ० ९।६ । प्राणायस्वाहा ---- सरस्वत्यैस्वाहा, तै० आ० ४।४-७ ।

(३) चतस्र उत्तरा यथोपपादं दक्षायस्वाहा --------- बलायस्वाहेति, बौ० श्रौ० ९।६ । दक्षायस्वाहा क्रतवेस्वाहा० ---- तै० आ० ४।४-७ ।

बादीपयति । मुञ्ज प्रलवान् प्रवृञ्जनीये करे संप्रकीर्य "संसीदस्व महां असीति" मन्त्रेण तत्र महावीरं साधयति।[1] अत्र होता प्रस्तोताच तीर्थेन प्रपद्य प्रवृञ्जनीय करस्य पश्चात् निरसनीपवेशने कृत्वा उपविशत: । होताप्रवर्ग्ये मन्त्रपाठान् करोति । प्रस्तोता प्रवर्ग्यं सामानि गायति ।

प्रवर्ग्यमन्त्रा:[2] -

ब्रह्मजज्ञानं प्रथमं०[3] । इयं पित्र्ये०[4] । महान्महीअस्त०[5] । अभित्यं देवं सवितार०[6] । संसीदस्वमहां असि०[7] । अन्वग्निरुषं०[8] । पतङ्गमक्तमसुरस्य० ।[9] यीन: सनुत्यो०[10] । भवानो अग्ने सुमना०[11] । कृणुष्वपाज: प्रसि०[12] । परित्वा

---

(१) अथैनमाज्येनानक्ति देवस्त्वासविता० --- प्रवृञ्जनीयेकरउपगूहति पृथिवींतप० । व्यतिषज्या दीपयति अर्चिरसि० ---- महावीरं संसादयति संसीदस्व, बौ०श्रौ० ९।६-७ देवस्त्वासविता० । पृथिवीं-तप० । अर्चिरसि० । संसीदस्व० । तै० आ० ४।५-७ ।

(२) ब्रह्मजज्ञानं प्रथमं पुरस्तादिति प्रतिपद्यते० इयं पित्र्ये राष्ट्र्येत्वग्रइति० महान्महीअस्तभायद्विजात इति० ----- पुभिरवसुभि: परिपात-मस्मानित्युत्तमयापरि दधाति । ऐ० ब्रा० १।१८-२१ । स्पृष्ट्वोदकं प्रवर्ग्येण चरिष्यत्सूत्तरेण स्वरपरिक्रम्य० । कृष्णकृष्णमनवानमुक्त्वा प्रणुत्यावस्थेत् । ब्रह्मजज्ञानं० ---- पटलम् । आ०श्रौ० ४, ६,१-३ ।

(३) ब्रह्मजज्ञानं०, आ० श्रौ० ४।६।३ । (४) इयं पित्र्ये० आ०श्रौ०४।६।३ ।

(५) महान्मही०, आ० श्रौ० ४।६।३ । (६) अभित्यं देवं,आ०श्रौ०४।६।३ ।

(७) ऋ०सं० १।३६।६ । (८) ऋ० सं० ५।४३।७ ।

(९) ऋ० सं० १०।१७७।१-२ । (१०) ऋ० सं० ६।५।४-५ ।

(११) ऋ० सं० ३।१८।१-२ । (१२) ऋ० सं० ४।४।१-५ ।

गिर्वणो०[1]। अधिद्वयोरदधा उक्थ्यं०[2]। कृं ते अन्यद्यजतं ते०[3]। अपश्यं गोपा-मनिपद्यमानं०[4]। प्रवद्बेद्रप्सस्य०[5]। अयं वेनश्चोदयत्०[6]। पवित्रं ते विततं०[7]। क्रियत्प-वित्रं धिष्ण्या०[8]। गणानां त्वा गणपतिं०[9]। प्रथश्चयश्च[10]। अपश्यं त्वा मनसा०[11]। कारायद्यीत्रा०[12]। आभात्यग्निरुषसा०[13]। ग्रावाणेव तदिदर्थं:[14]। इके द्यावा पृथिवी०[15]। अरुरवदुषस: पृश्नि०[16]। द्युभिरक्तुभि: परि०[17]। होतु: मन्त्रपाठसमये एव अध्वर्यु: "अञ्जन्ति यं प्रथयन्त०" इति मन्त्रेण तं महावीरं आज्येन पूरयति।[18]

---

(१) ऋ० सं० १।१०।१२ । (२) ऋ० सं० १।८३।३ ।

(३) ऋ० सं० ६।५८।१ । (४) ऋ० सं० १०।१७७।३ ।

(५) ऋ० सं० ६।७३ सू० । (६) ऋ० सं० १०।१२३।१ ।

(७) ऋ० सं० ६।८३।१-२ । (८) ऋ० सं० ।

(९) ऋ० सं० २।२३ सू० । (१०) ऋ० सं० १०।१८१।सूक्त ।

(११) ऋ० सं० १०।१८३सू० । (१२) ऋ० सं० १।१२०।१-९ ।

(१३) ऋ० सं० ५।७६ सू० । (१४) ऋ० सं० २।३७ सू० ।

(१५) ऋ० सं० १।११२।१-२४ । (१६) ऋ० सं० ६।८३।३ ।

(१७) ऋ० सं० १।११२।२५ ।

(१८) अथैन माज्येन पूरयत्यञ्जन्ति यं० अथास्य प्रादेशेन दिशो-
व्यास्थापयत्यनाधृष्टापुरस्तात्० अथैनामभिमृशति मनोरश्वासि०
अथवृष्टीष्यामुदीचीऽङ्गारानिरूहति तपोष्वग्ने० तैरेनं
प्रदक्षिणं परिचिनोति चितस्थ० अथैनं त्रयोदशभिर्वैकङ्कतै:
परिधिभि: परिपिन्ष्टोऽध्वर्युश्च प्रतिप्रस्थाता च मावसि०
सौ सौ वर्णेन रुक्मेन अपिदधाति दिवंतपस०,

- शां० श्रौ० ६।७ ।

अञ्जन्ति यं प्रथयन्तो० इत्यारभ्य दिवंतपसस्त्रायस्वेतिमन्त्रांश:

- तै० आ० ४।४-७ ।

अथ यजमाना: महावीरस्य प्रागापूर्ध्वान्तेषु देशेषु प्रदक्षिणं प्रादेशं करोति ।

तत्र मन्त्रा -

"अनाधृष्यापुरस्तादि" ति त्रि: । यजमान: "मनो०" मन्त्रेण भूमिमभिमृशति । "तपोष्वग्ने" ति मन्त्रेणाध्वर्यु: धृष्टीभ्यां उदीचोऽङ्गारान्निरूहति । तैरङ्गारै: "चित:स्थ परिचित०" इति मन्त्रेण प्रदक्षिणं परिचिनोति । दक्षिणतश्चोत्तरश्च "मा असि, प्रमा असि" मन्त्राभ्यां द्वौ वैकङ्कतौ परिधी परि दधाति । तत: प्रतिप्रस्थाता पश्चात्पुरस्तात् "प्रतिमा असि । संमा असि मन्त्राभ्यां द्वौ परिधी परिदधाति । एवं प्रकारेण समन्त्रकं द्वादशपरिधय: परिदधाति । तत: त्रयोदशं परिधिं दक्षिणत: ऊर्ध्वाग्रमुच्छ्रयति "अन्तरिक्षस्यान्तर्धिरसि" इति मन्त्रेण । सौवर्णरुक्मेण "दिवंतपसस्त्रायस्व०" इति मन्त्रेण महावीरमपिदधाति ।

घर्मोपस्थानम् -

घर्मोपस्थाने "आभिर्गीर्भिरि" ति तिसृभिर्मन्त्रै: उपस्थानं करोत्यध्वर्यु:[1] । ज्वलितैरुक्ममपकृष्य, पवित्राण्यादत्ते पवित्रादानमंत्रा:[2] - गायत्रमसि । त्रैष्टुम-

---

(१) अथैनमुपतिष्ठत आभिर्गीर्भि: - - - - - - - - - - - - - - - - प्रज्वलितैरुक्ममपकर्षति । आभिर्गीर्भि०३ । तै० आ० ४।४-७, बौ० श्रौ० ६।७ ।

-------अग्रिमपृष्ठेऽपि

मसि । जागतमसि । तैः पवित्रैः महावीरस्य पश्चात् प्राङ्ञान्वाच्य युगपत् "मधु मधु मधु" इति मन्त्रेण त्रिवारं ऊर्ध्वं धिनोति । ततः अध्वर्युः प्रतिप्रस्थात्रे द्वे पवित्रे प्रयच्छति । प्रणवे प्रणवे धून्वन्तो महावीरं त्रिः प्रदक्षिणी कृत्योत्तरतस्तिष्ठन्ति । अध्वर्युः पवित्राण्यादाय, आत्मनः अपरेण परिक्रान्ताय उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे पवित्रे प्रयच्छति । ततः प्रतिप्रस्थाता एकं पवित्रं अग्नीधे प्रयच्छति । प्रणवे प्रणवे धून्वन्तो महावीरं त्रिवारं प्रदक्षिणीकृत्योत्तरतस्तिष्ठन्ति । अध्वर्युः पवित्राण्यादाय, आत्मनः अपरेण- परिक्रान्ताय, उत्तरतस्तिष्ठते । प्रतिप्रस्थात्रे द्वे पवित्रंप्रयच्छति । ततः प्रतिप्रस्थाता एकं पवित्रमाग्नीध्रे प्रयच्छति । पश्चात् प्राङ्मुखोऽध्वर्युः उपविशति । पुरस्तात् प्रतिप्रस्थातोत्तरतः आग्नीध्रः प्रणवे प्रणवे धून्वन्तः ध्रुवेण महावीरं आज्येन आप्यायन्त्यध्वर्युः । प्रवर्ग्यमन्त्रपाठे होतायाभिवर्तिकां प्रसितामनुब्रूते इति मन्त्रपठनसमये उपसृत्य अध्वर्युयजमानौ महावीरमुपोत्थाय प्रेदात: "दशप्राचीर्दश-भासो" ति रौचितोवर्णलिङ्गमन्त्रान् पठन्ति । ततः होताप्रवर्ग्ये मन्त्रपाठे "अप्नस्वतीमति" ऋचुक्ते अध्वर्यवादयः पवित्राणि ऊर्ध्वं धारयन्ति[2] । ततः

---

पूर्वपृष्ठस्याग्रे-------

(१) अथ पवित्राण्यादत्ते गायत्रमसीत्यन्तरंत्रैष्टुभमसीत्यन्य तरणागतमसि० प्राङ्ञान्वाच्योर्ध्वं धुनोति मधुमध्वित्युत्तरतसिष्ठते प्रतिप्रस्थात्रे द्वे पवित्रे प्रयच्छति - - - - - - - - - - - - - - - - आप्यायन्तो महावीरं । बौ० श्रौ० ९।८ । गायत्रमसि । त्रैष्टुभमसि । जागतमसि । मधु मधु मधु, तै० आ० ४।४-७ ।

------अग्रिमपृष्ठेऽपि

"अरुचदुषस"[1] इत्युक्ते अध्वर्युः रुचितोधर्मः इति उच्चस्वरेण उक्त्वा, यथेतं त्रिरपसव्यं परीत्य, पवित्राणि निधाय "अपश्यं गोपामनिपद्यमानमित्यतः अशीमहित्वामामा हिंसीः" इत्यन्तो मन्त्रपाठान् कुर्वतः - अध्वर्य्वादयः घर्मोपस्थानं कुर्वन्ति ।

गार्हपत्योपस्थापनम्[2] -

घर्मोपस्थानस्य पश्चात् यजमानः - "त्वमग्नेगृहपतिर्विशामसीत्यारभ्य "इहैव रातयः सन्तु" इत्यन्तः मन्त्रपाठद्वारा गार्हपत्यमुपतिष्ठते । ततः प्रति-

---

पूर्वपृष्ठस्याग्रे --------

(१) होतुरभिजानाति याभिर्वर्तिकां० तदेन मुपोत्थायरोक्यतोऽध्वर्युश्च यजमानश्च दशप्राचोर्दशमासि० । बौ० श्रौ० ६।८, दशप्राचोर्दश-मासि० । तै० आ० ४।४-७ ।

(२) अथयत्र होतुरभिजानात्यप्स्वती - - - - - - - - - - - - - पवित्राण्युपोपच्छन्ते, बौ० श्रौ० ६।८ ।

(३) अथ यत्र होतुरभिजानात्यरुचदुषसः० रुचितोधर्म इत्युक्त्वा यथेतं त्रिः पुनः प्रतिपरियन्ति निधाय० - - - - - - - - - - - - - उपतिष्ठन्ते अपश्यं गोपामिति । बौ० श्रौ० ६।८, अपश्यं गोपा-मनिपद्यमानं - - - - - अशीमहीत्वामामाहिंसीः तै०आ० ४।४-७ ।

(४) अथ गार्हपत्यमुपतिष्ठते त्वमग्नेगृहपतिर्विशामसि०, बौ० श्रौ० ६।८ त्वमग्नेगृहपतिः - - - - - - - - - - - - - - - - - - - - इहैवरातयः सन्तु तै० आ० ४।४-७ ।

प्रस्थाता वेदं पत्नीं प्रदर्श्य "त्वमष्टोमतीति सर्पेय" इति मन्त्रं वाचयति ।[1]

रौहिणपुरोडाशहोम: -

ततः आहवनीये दक्षिणं रौहिणं पुरोडाशं "अहर्ज्योतिः केतुना-जुषतां०" इति मन्त्रेण जुहोति । अपराह्णिके प्रवर्ग्ये उत्तररौहिण पुरोडाशस्य होम: तत्र मंत्रः - रात्रिर्ज्योतिः केतुना जुषतामिति ।[2]

प्रथमपौर्वाह्णिककर्मयाग:[3] -

ततः अध्वर्युः "देवस्यत्वेति" रशनामादाय "आदित्यैरास्नासि"

---

(१) अन्तर्हितं प्रतिप्रस्थाता वेदे पत्नीं वाचयति त्वष्टोमतीति० - बौ० श्रौ० ६।८ ।

(१) त्वष्टोमतीति सर्पेय० । तै० आ० ४।७ ।

(२) एतस्मिन् काले प्रतिप्रस्थाता दक्षिणं रौहिणं जुहोति अहर्ज्योतिः केतुना जुषतां० - - - - - स्वाहेति । बौ० श्रौ० ६।८ ।

(३) अथ रशनामादत्ते देवस्यत्वासवितु अभिमन्त्रयते अदित्यै० दोहनं करोति पिन्वने इति घर्मदुघं त्रिरुपांशु देवानामभिराह्वयतीऽगुह्यदिता० त्रिरुच्चैर्दक्षिणायाद्वारोपनिष्क्रम्य० अथैनां रशनयामभिदधात्य-दित्या उष्णीषमसीतिवायुरस्यैऽइति घर्मदुघोवत्समभिमृशति० - - अतिशिष्टं कर्म दोहयेत् । बौ० श्रौ० ६।६ ।

देवस्यत्वा० । इडारहि० । अदित्याउष्णीषमसि ।
वायुरस्यैड: । पूषात्वोपावसृजतु । यस्तेस्तन: शशय० । अश्विभ्यां बृहस्पतिस्त्वोपसीदतु । दानवस्थपेरव: । अश्विभ्यां पिन्वस्व ।
- तै० आ० ४।८-१० ।

मन्त्रेणाभिमन्त्र्य, प्रतिप्रस्थाता कौपिन्वने च -- आदाय, जघनेन होतारं गच्छेत् । अध्वर्युः अन्तःशालां तिष्ठन् घर्मदुघां त्रिवारं उपांशु स्वरेण "इड एहि । अदित एहि । सरस्वत्येहि । इति मन्त्रैराह्वयते । दक्षिणयाद्वारो-पनिष्क्रम्य, त्रिरुच्चैः । गड्डण एहि । इति त्रिवारं पठित्वा आह्वयति । तां गां रशनया "अदित्या उष्णीषमसि" इति मन्त्रेण बध्नाति । "वायु-रस्येडः" इति मन्त्रेण वत्समभिमृशति । "पूषा त्वोपावसृजतु" इति मन्त्रेण वत्सं प्रमुञ्चति । "यस्तेस्तनः-शशयः" इति मन्त्रेण स्तनमभिमन्त्र्य "अघुर्मः इति प्रस्नुतायां वत्समपनयति । "बृहस्पतिस्त्वोपसीदतु" इति गां नियुज्य उपसीदति । "दानवः पेरवः" इति स्तनान् संमृशति । "आदशभिर्विवस्वत" इत्युक्ते पिन्वने दोहयति । मंत्रः "अश्विभ्यां पिन्वस्वेति" । अतिशिष्टं दुग्धं कौ दोहयेत् ।

छागा दोहनम्[1] -

प्रतिप्रस्थाता तूष्णीं पिन्वने अजां दोहयेत् । होता - "उत्तिष्ठ ब्रह्मणस्पते"[2] इत्युक्ते अध्वर्युः प्रतिप्रस्थात्रे पयसि प्रदाय, यथेतमेत्य "गायत्रोसि

---

(१) एतस्मिन् काले प्रस्थाता पिन्वनेछागां पिन्वयति तूष्णीं० यत्र होतु-रभिजानात्युत्तिष्ठब्रह्मणस्पत इति तत् प्रति प्रस्थात्रे पयसि संप्रदाय - - - - - - - - - अध्वर्युः पूर्वं गोपयो अवनयति स्वाहात्वा० बौ० श्रौ० ६।६ । गायत्रोसितिमन्त्रभागः, तै० आ० ४।६।१० ।

(२) आत्मन्वन्नभो दुह्यते घृतं पयः उत्तिष्ठ ब्रह्मणस्पते, अधुदात् पिप्युषी-मिषं० उपद्रव पयसा गोधुग् गोषम्, आसुते सिञ्चतश्रियम्, आनून-मश्विनोर्ऋषिः समुत्यैमहतीस्य इत्येकविंशतिरभिरूपाः० ऐ०ब्रा०१।२२ । उत्तिष्ठब्रह्मणस्पते० ऋ०सं० १।४०।१, । आ० श्रौ० ४।७।४ ।

त्रैष्टुभोऽसि । इति मन्त्रेण शफोपयमन मादत्ते । ततः "उपद्रवपयसा"[1] इति श्रुते-
वाक्रियमाणे पयसि "सहोजोभागेने"ति मन्त्रेण अभिमन्त्रयते । अध्वर्युः पुरस्तात्
प्रत्यङ्मुखोपविश्य उपयमनेन गोपयः - "स्वाहात्वावायुर्वस्य" इति मन्त्रेण
अवनयति । ततः प्रतिप्रस्थाता तूष्णीं छागापयः उभयशेषमेकीकृत्य, अध्वर्युः
तृतीयं अंशस्थं उपयमने प्रत्यवनीय, अङ्गारान् गार्हपत्ये प्रत्यूह्य, "द्यावा-
पृथिवीभ्यां०" इति मन्त्रेण धर्मं गृह्णाति[2] । सव्ये कृत्वा मौञ्जवेदेन अधस्ता-
दुपमृज्यत, उपयमनेन "अन्तरिक्षे णत्वो पयच्छामी"ति मन्त्रेण उपयच्छति ।
"देवानां त्वा पितृणा" इति आदायोत्तिष्ठति । "तेजोऽसि तेजोऽनुप्रेहि०"
इति मन्त्रेण प्राङ्हरति । गव्ये आसिच्यमाने "आसुतेसिन्चतश्रियं०"[4] इति
होता ब्रूयात् । आसेचन विपर्यासे क्रम विपर्यासः । उभयोरासिक्तयोः
"समुत्थे महतीरप०"[5] इति होताब्रूयात् । महावीर आदायोत्तिष्ठत्सु अध्वर्युषु

-----------------------------------

(१) उपद्रवपयसा०, आ० श्रौ० ४।७४ ।

(२) तस्मिन् काले प्रतिप्रस्थाता छागापयोऽवनयति तूष्णीमुभयं समानीयाध्वर्यु-स्तृतीयमवनयत्यत्र - - - - शफाभ्यां परिगृह्णाति द्यावापृथिवीभ्यां० बौ० श्रौ० ६।६-१० । द्यावापृथिवीभ्यां त्वा परिगृह्णामि तै० आ० ४।८-१० ।

(३) वेदेनाधरतादुपमृज्योपयमनेनोपयच्छत्यन्तरिक्षेणत्वा० अथैनमादायोपोत्तिष्ठति देवानां० प्राङ्हरति तेजोऽसि०, बौ० श्रौ० ६।१०, अन्तरिक्षेणत्वा० । देवानां त्वा पितृणां० । तेजोऽसि - - - - - दिवोमापाहि, तै० आ० ४।८-१० ।

(४) आसुते सिन्चतश्रियं०, ऋ० सं० ८।७२।३ ।

(५) समुत्थेमहतीरप०, आ० श्रौ० ४।७४, ऋ० सं० १।४०।३ ।

होता - "उदुष्य देव: सविता हिरण्यया"[1] इति मन्त्रं पठन् अनुतिष्ठेत्, अनुब्रजन् "प्रैतुब्रह्मणस्पति"[2]रिति होताब्रूयात् । तत: खरस्य पश्चात् प्राङ्०-मुखस्तिष्ठन् होता - "गंधर्व इत्था पदमस्य रक्षति०"[3] इत्यनया महावीर-खरमवेक्षते होता तं खरं परिक्रम्य, व्रजित्वा, श्रोणिदेशं प्राप्य - "नाकेसुपर्ण-मुपयत्पतन्तं०"[4] इत्येतामुक्त्वा कृत्स्नप्रणवोच्चारण समकाले अनिरस्यतृणमुप-विशेत्[5]। एतेन एतदपि ज्ञापितं भवति - अस्मिन् घर्माभिष्टवनमध्ये यत्र-यत्र क्रियान्तरं विहितं "अपश्यन्त्वेत्यादिकं उदुष्यदेव: सविताहिरण्ययेत्यनुतिष्ठे-त्यादिकं यजमानमीक्षेत" इत्यादिकं च तत् सर्वं मन्त्र समकालमेव कर्तव्यम् न पुनर्मन्त्रान्त इति । अनेन "मन्त्रान्ते क्रिया" इति वाक्यस्य निषेध: अत्र ।

---

(१) उदुष्य देव: सविता०, ऋ० सं० ६।७१।१, महावीरमादायोत्तिष्ठत्सु-दुष्यदेव: सविता०, आ० श्रौ० ४।७।४ ।

(२) प्रैतुब्रह्मणस्पति०, ऋ० सं० १।४०।३, अनुतिष्ठेत् प्रैतुब्रह्मणस्पति०, आ० श्रौ० ४।७।४ ।

(४) नाकेसुपर्णं मुपयत्पतन्तं०, ऋ० सं० १०।१२३।६ । नाके सुपर्ण-मुपयत्पतन्तमिति समाप्य, प्रणवेनोपविशेदनिरस्य तृणम् ।

(५) उदुष्यदेव: सविता हिरण्ययेत्यनुतिष्ठति । प्रैतुब्रह्मणस्पतिरित्यनुप्रैति । गंधर्व इत्थापदमस्य रक्षतीति खरमवेक्षते । नाकेसुपर्ण० उपविशति, ऐ० ब्रा० १।२२ ।

(३) गंधर्व इत्थापद०, ऋ० सं० ९।८३।४,गंधर्व इत्थापदमस्य रक्षतीति खर-मवेक्ष, आ० श्रौ० ४।७।४ ।

ततः अध्वर्युः गच्छन्नेव अनवानं वातलिङ्गकान् पञ्चमन्त्रान् पठेत् समुद्रायत्वा वातायस्वेति। ततः द्वे उत्तरे "दुवस्वते त्वा वाताये" ति अनवानमेव पठेत्। तथा यथोपपादं "अग्नये त्वा वसुमते स्वाहा" इत्यादिकान् षट् मन्त्रान् पठेत्[2]। ततः दक्षिणत आसीनं ब्रह्माणं "विश्वा आशा दक्षिणसत्" इति ब्रह्माणमीक्षते। ततः अध्वर्युः "विश्वान् देवानयाडि" ति होतारमीक्षते। ततः सव्येन अत्याक्रामन् - "स्वाहाकृतस्य घर्मस्येति" जपति। जपान्ते "अश्विना घर्मं पातं०" इति मन्त्रं यजमानं वाचयति[3]।

अथ घर्मयागः -

अध्वर्युः अतिक्रम्य, आश्राव्याह - घर्मस्य यजेति औ श्रावय।
आग्नीध्रः - अस्तु श्रौषट्। अध्वर्युः - घर्मस्य यजा होता - याज्यामाह,
अत्र हौत्याज्या मन्त्रौ एकः सूत्रोक्तमंत्रः, एकः संहिता गतः, अन्योर्मन्त्र्योः

---

(१) अथ वातनामानि व्याचष्टे समुद्रायत्वा वातायस्वाहेति मन्त्रानवानमेव द्वे उत्तरे। बौ० श्रौ० ६।१०।
समुद्रायत्वा वातायस्वाहा० - - - - - शिमिदेत्वा वातायस्वाहा
तै० आ० ४।८-१०।

(२) षडुत्तराणि यथोपपादमग्नयेत्वा - - - - - पितृमते स्वाहेति,
बौ० श्रौ० २।१०।
अग्नयेत्वा वसुमते स्वाहा - - - - - यमायत्वाङ्गिरस्वतेपितृमते-
स्वाहा, तै० आ० ४।८-१०।

(३) विश्वाआशा दक्षिणसदिति दक्षिणत आसीनं ब्रह्मणामीक्षते विश्वान् देवानयाडिहेति - - - - यजमानमभिवाचयत्यश्विनाघर्मः, बौ०श्रौ०६।१०
विश्वा आशादक्षिणसत्। विश्वान् देवानयाडिह। स्वाहाकृतस्य०।
आश्विनाघर्मं पातं०, तै० आ० ४।८-१०।

अनादिश्य अनवानं यजति होता आगूर्वषट्कारौ तु सकृदेव । अग्ने वीहीत्यनुवषट्कारः घर्मस्याग्ने वीहि३वौ ३ षट् ।[1]

याज्याकृतौ: -

तप्तो वां घर्मो नक्षति स्व होता प्रवामध्वर्युश्चरति प्रयस्वान् । मधोर्दुग्धस्याश्विना तनायावीतं पातं पयस उस्रियायाउभापिबतमश्विनोभानः शर्मयच्छतमविद्रियाभि:तिभिर्वौषट् । घर्मस्याग्नेवीहो वौ ३ षट् ।[2]

अपराह्णिके प्रवर्ग्ये याज्याविशेष: -

यदुस्रियास्वाहुतं घृतं पयोऽयं स वामश्विनाभाग आगतम्[3] । माध्वीधर्तारा विदथस्य सत्पातो तप्तं घर्मं पिबतं सौम्यं मध्वस्य पिबतमश्विना युवं सदस्य चारुणः । मध्वोरातस्य धिष्ण्या वौ३षट् । घर्मस्याग्ने वीहो वौ ३ षट् । इति अपराह्णिक प्रवर्ग्यस्य याज्या । अध्वर्युः याज्यान्ते वषट्कृते जुहोति - स्वाहेन्द्रायेति । अनुवषट् कृते जुहोति पुनः स्वाहेन्द्रा-

---

(१) अग्नेवीहीत्यनुवषट्कारो घर्मस्याग्ने वीहीति वा । आ०श्रौ० ४।७।४ ।

(२) तप्तो वां घर्मो नक्षति स्वहोता० - - - - - अनवानम्, आ०श्रौ० ४।७।४, उभापिबतमश्विना० ऋ० सं० १।४६।१५ ।

(३) यदुस्रिया स्वाहुतं घृतं पयोऽयं०, आ० श्रौ० ४।७।४, अस्य पिबतमश्विना० ऋ० सं० ८।५।१४, यः यदुस्रियास्वाहुतं घृतं पयः अस्य पिबतमश्विनेत्यपराह्णे यजति ।

वडिति । ततः यजमानं "घर्मंपातमश्विना०" इति मन्त्रं पठति।[1] प्रतिप्रस्थाता पिन्वनेन उपयमनादुपहत्य महावीरं पूरयित्वा, शफाभ्यां गृहीत्वा, अन्तः परिधि अभिपिपीयतः उपांशु स्वरेण "इषेपीपिहि। ऊर्जेपीपिहि०। इति मन्त्रैः अथ च "ज्यैष्ठ्याय पीपिहि" इति उच्चस्वरेण प्रागादिषु प्रदक्षिणं अध्वर्युखाभिमुखं उद्वासयति। अत्र यथा लिङ्गं त्यागः कुर्याद्यजमानः "त्विषे-त्वेति। ततः उपयमने महावीरस्थं पयः आनीय, उदङ्ङत्याक्रम्य तदन्तर्वेदि प्राक् बिलं सादयति।[2] एतत् कर्म समकाल एव होता - "स्वाहाकृतः शुचिर्देवेषु इत्यतः तंवेभित्था नमस्विन इत्यन्तः मन्त्रभागः अप्रेषित एव अभिष्टवनशेष-मन्त्रभागं ब्रूयात्।[2,3]

घर्मोत्तरतन्त्रम्[4] -

---

ततः प्रतिप्रस्थाता राजतं रुक्मं उद्वासनीये खरेऽपगूहति।[5] ततः

---

(१) उच्चैराश्राव्याह घर्मस्य यज इति। वषट्कृते जुहोति०। अनुवषट्कृते हुत्वा वाचयति घर्मंपातमश्विना०, बौ० श्रौ० ६।१०, घर्मं पातमश्विना० तै० आ० ४।८-१०।

(२) एतस्मिन् काले प्रतिप्रस्थाता० - - - प्राचीनबिलं सादयति० बौ०श्रौ० ६।१०, इषे पिपीहि इत्यादि मन्त्रविभागः, तै०आ० ४।८-१०।

(३) अप्रेषितो होताऽनुवषट्कृते। स्वाहाकृतः शुचिर्देवेषु घर्मो यो अश्विनो-श्चमसो देवपानः। सुभ्राद्दुर्भिर्मुदियर्तिविनोदृप्सः समुद्रमभ्यश्निवाति संवत्सरायम्यावृत्त्वोर्ध्व ऊर्जा इति है तं वेभित्थानमस्विन् इति आ० श्रौ० ४।७।४।

------अग्रिमपृष्ठेऽपि

अध्वर्युः "घर्मासिसुधर्मा मे०" इति मन्त्रेण तस्मिन् खरे महावीरं सादयति । ततः औदुम्बरशकलेन उपयमनादुपहृत्य आहवनीयस्य पूर्वार्द्धे "पूष्णेशरसे स्वाहा" इति मन्त्रेण धारयति । तदन्तः सिक्तदेशं मध्यमे परिधौ सादयित्वा, द्वितीयेन उपयमनादुपहृत्य, "ग्रावभ्यः स्वाहा" इति मन्त्रेण पूर्वार्द्धे पुनः धारयति । तथैव सादयित्वा, तृतीयेनोपहृत्य "प्रतिरेभ्यः स्वाहा" इति मन्त्रेण मध्ये प्रश्च्योतयति । चतुर्थेनोपहृत्य "द्यावापृथिवीभ्यां स्वाहा" इति मन्त्रेण परार्द्धे प्रश्च्योतयति । तदुपरिसिक्तदेशं भस्मान्ता उपगूह्य, पञ्चमेनोपहृत्य, प्राचीनावीति भूत्वा, "पितृभ्योघर्मपेभ्यः स्वाहा" इति मन्त्रेण दक्षिणार्धेधारयति । ततः अपउपस्पृश्य, तत् बहिः वान्विनं दक्षिणे-परिधौ सादयित्वा, उपवीति भूत्वा, षष्ठेन महावीरं पिन्वनं सलेपोपयमनेषु समज्य, "रुद्रायरुद्रहोत्रेस्वाहा" इति मन्त्रेण धारयति । पुनः अपस्पर्शं कृत्वा, तदुत्तरेणातीकाशेनान्वीक्षमाणो "पाप्मना सह निरर्थं गच्छेति" मन्त्रेण निरस्यति । पुनः अपस्पृष्ट्वा, पञ्चशकलानग्निभिः संस्पृश्य, आहवनीयेनु-प्रहरति ।

---

पूर्वपृष्ठस्याग्रे ------------

(१) घर्मासि सुधर्मा मेन्यस्मे ------------------
आहवनीयेनु प्रहरति, बौ० श्रौ० ६।११ ।

घर्मासिसुधर्मा मे इत्यारभ्य मन्त्रविभागः । तै० आ० ४।८-२० ।

(२) राजतंरुक्ममुद्वासनीये खरे मुपगूहति । बौ० श्रौ० ६।१० ।

उत्तररौहिणयागः[1] -

प्रतिप्रस्थाता-उत्तररौहिणपुरोडाशं स्रुचि गृहीत्वा "अहर्ज्योतिः केतुना जुषतामिति" रौहिणं पुरोडाशं जुहुयात् । यथालिङ्गं त्यागः ।

आपराह्णिकप्रवर्ग्यः -

उत्तररौहिणपुरोडाशहवने "रात्रिर्ज्योतिः केतुना जुषता०"[2] इति मन्त्रेण जुहुयात् । यथालिङ्गं त्यागेति अपराह्णिके प्रवर्ग्यविशेषः । ततः अध्वर्युः उत्पत्तिक्रमेण अग्नीन् परिषिञ्चति "सत्यं त्वर्तेन परिषिञ्चामीति मन्त्रेण । अपराह्णिके प्रवर्ग्ये तु "ऋतं त्वा सत्येन परिषिञ्चामि" इति मन्त्रेण अग्नीन् परिषिञ्चतीति विशेषः । उपयमनं गार्हपत्ये नीत्वा "अन्तरिति" मिति मन्त्रेण पर्यग्निं करोति । "सजूर्देवपतिर्यावाभि प्रातर्यावाणो०" इति मन्त्रेण सम्मृशति । अपराह्णिके प्रवर्ग्ये - सम्मर्शनमन्त्रे सजूर्देवः सायं

---

(१) एतस्मिन् काले प्रतिप्रस्थातोत्तरं रौहिणं जुहोत्यहर्ज्योतिः केतुना०, बौ० श्रौ० ६।११ । अहर्ज्योतिः केतुना० तै० आ० ४ ।

(२) रात्रिर्ज्योतिः केतुना सह० तै० आ० ४,१०
अथापराह्ण आपराह्णिकेन प्रवर्ग्येण । तस्य यद्विहितं विहितमेवास्य तत् । समानं कर्म दक्षिणस्य रौहिणस्य होमात् । अथ दक्षिणं रौहिणं जुहोति रात्रिर्ज्योतिः केतुना० । समानं कर्म आमिदा धानात् । बौ० श्रौ० ६।१२ ।

यावाभि: सायं यावानो०' इति विशेष: । 'नम ईशानाय प्रजा:०' इति मन्त्रेण जघनेन गार्हपत्यं उपसादनीय कूर्चं सादयति । तत: अध्वर्यु: - 'चित्ति: स्रुगदि' दशहोतारं व्याचष्टे । प्राङ्०द्धृत्य आहवनीयस्य पश्चादुपसादनीय कूर्चं सादयति । तत: वैकङ्०कतीसमिधं तूष्णीमाधाय - 'तया देवतयां गिरस्वत्०' इत्यभिमृशति । अध्वर्यु: अप: स्पृष्ट्वा 'भूस्वाहा' इति मन्त्रेण प्रथमामाहुतिमाहवनीये जुहोति । आपराह्णिके प्रवर्ग्ये अभिमर्शनमन्त्र: - 'अपोपरीमाह्नोरात्रिंमा०'[१] इति । तत: तूष्णीं समिधमाधाय 'अग्निर्ज्योति:०'[२] इति मन्त्रेण जुहोति । द्वितीयादि पूर्वाह्णिक प्रवर्ग्ये तु 'अपी परीरात्रिया-अहनेः०' इति मन्त्रं उक्त्वा, तूष्णीं समिधमाधाय 'सूर्योज्योतिर्ज्योति: सूर्य: स्वाहेति । इति प्रथमामाहुतिं जुहोति । अत्र यथालिङ्०गंम त्याग: । अध्वर्यु: उपयमनं सकृदतिवाल्य कूर्चं निधाय, दक्षिणावृदावृत्य, 'उपप्रेतसंगच्छध्वं०' इति मन्त्रेण गार्हपत्यमोदाते । समिध्येव - पूर्वाहुतिमतिक्रम्य, अभिक्रम्यां प्रत्यक् बिलया स्रुवा 'प्रजापतये स्वाहा' इति द्वितीयामाहुतिं जुहोति । तत: उपयमनं त्रिरतिवाल्य, कूर्चे निधाय, 'ओषधीभ्यस्त्वौषधीर्जिन्वेति' मन्त्रेण कूर्चं उत्तर: लेपमुन्मार्ष्टि । प्राचीनावीति भूत्वा, स्रुचो दक्षिणत: कूर्चे लेपं 'पितृभ्यस्त्वा पितृन् जिन्वेति' मन्त्रेण अवमार्ष्टि । अत्र यजमान: प्राचीनावीति भूत्वा पितृभ्य इदमिति त्यागं पठति । तत: उभौ यज्ञोपवीति भूत्वा 'वृष्टि-

---

(१) अपोपरी मान्हो रात्रिंमापाहि०, बौ०श्रौ० ६।१२, तै०आ० ४।१० ।

(२) तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोति अग्निर्ज्योतिर्ज्योति० समानंकर्मा सम्प्रेषणात् । बौ० श्रौ० ६।१२, तै० आ० ४,१० ।

रश्मिवृश्चमेणाध्मान० इति मन्त्रेण अपस्पृशति ।

चमसोपाह्वानम् -

---

होता - "पावकशोचे तव हि क्षयं परीति मन्त्रेण भक्षमाकांक्षेत्[1] ।
अध्वर्युः उपयमनं होत्रे प्रदाय, होता तं परिगृह्यहोत्रध्वर्युभ्रंश प्रतिप्रस्थात्रग्नीध-
नमाना: क्रमेण परस्परमुपहूय अवघ्राणेन भक्षयति । अत्र यजमानः होत्रादीनु-
पहूय, "हुतंहविर्मधुहविः०" इति मन्त्रेण भक्षयति, उत्तिष्ठारे आचामति ।
सर्वे ऋत्विजः अवघ्राणरूपेण भक्षणं कुर्युः, ततः सर्वे आचामन्ति । आग्नीध्रः[2]
उच्छिष्टखरे उपयमनपात्रीं प्रक्षाल्य, आहरति । तां पात्रीं अध्वर्युः आहवनीये
निष्टप्य, अद्भिः पूरयित्वा "सप्तऋषीन् प्रीणिहि" इति मन्त्रेण उदगु-
दिशति । अत्र यथालिङ्गं त्यागः ।

---

(१) पावकशोचे०, ऋ० सं० ३।२।६ ।
पावकशोचे तवहि क्षयं परीतिभक्षमाकाङ्क्षते । हुतं हविर्मधु० घर्मस्य
भक्षयति, ऐ० ब्रा० १, २२ ।
उक्ते पावकशोचे तवहि क्षयं परीत्युक्त्वा भक्षमाकाङ्क्षेत् ।
वाजिनेन भक्षोपायोहुतं हविर्मधु०, आ० श्रौ० ४।७।४ ।
यावन्तः प्रवर्ग्यस्यर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं
भक्षयति हुतंहविर्मधु०, बौ० श्रौ० ६।११ ।

(२) अथैतदुपयमनं परिक्रामीका आग्नीध्रोवोच्छिष्टखरमार्जयितुवा०,
- बौ० श्रौ० ६।११ ।

घर्मोत्सादनम् -

अध्वर्युः जघनेन गार्हपत्यस्य पश्चादन्तर्वेदि उपविश्य, "अहमस्मग्नौ वैश्वानरे०" । "अदित्यामदित्याहुतिं०" इति मन्त्रेण आज्यहोमं कुर्यात् । ततः[1] पूर्ववत् परिषिच्य अन्तर्वेदि प्राग् बिले - उपयमनपात्रे रुक्मौ मदन्ती-श्चानीय "हिरण्यवर्णाः शुचयः पावका०" इत्यादि चतुर्मन्त्रैः मार्जयित्वा, ता अपः निनयति । ततः आज्यस्थाल्याः स्रुवेण "प्राणायस्वाहे"[2]ति मन्त्रैः प्रतिमन्त्रं प्रायश्चित्तानि जुहोति । अन्यानि अवान्तर प्रायश्चित्तानि हुत्वा, उपयमनं अन्तर्वेदि प्राग्बिलं सादयित्वा,[3] घर्म्यं आसन्दां निदधाह - "घर्मा-यौत्साद्यमानायानुब्रूहि"[4] इत्युक्ते, होता अप्रैषित एव - "१- श्येनोनयोनिं०" ।

---

(१) अन्तर्वेदि प्राचीनबिलं सादयित्वा तस्मिन् सुवर्णरजतौ च रुक्मौ प्रास्य मदन्तीरुपआनीय हिरण्यवतीभिर्मार्जयन्ते । हिरण्यवर्णाः शुचयः पावका इति चतसृभिरेव मदन्तीरपोनिनीय० बौ० श्रौ० ६,११-१२, हिरण्य-वर्णाः शुचयः पावका०, तै० सं० ५, ६,१ ।

(२) प्राणायस्वाहा, पूष्णेस्वाहा इत्युक्तानिकर्म प्रायश्चित्तानि०, बौ० श्रौ० ६, १७ प्राणायस्वाहा । तै० आ० ४, १५-१६ ।

(३) अथैतदुपयमनमन्तर्वेदि प्राचीनबिलं सादयित्वा० घर्मोत्साद्यमाना० ब्रूहि, बौ० श्रौ० ६,१२ ।

(४) संप्रेषितः श्येनोन योनिंसदनं० - - - सूयवसाम्भगवती हि भूया इति परिदध्यात् । आ०श्रौ० ४,७,४, श्येनोनयोनिं सदनं धियाकृतम्, आय-स्मिन्त्सम्भवासवाः इति संधाप्यमानायान्वाह० सूयवसाम्भगवतीहि भूया इत्युच्यापरिदधाति०, ऐ० ब्रा० १,२२, श्येनोनयोनिं० । ऋ० सं० ६, ७१,६ । सूयवसात्० १; १६४; ४० ।

२ - आस्मिन्नप्प्वासव:० । ३- "सूयवसाद्भगवतीति०" परिदध्यात् ।

पुरिधानीयामन्त्रपाठे विशेष: स उच्यते[१] - उक्ते प्रागुत्मायां हविर्हविष्मो-महिसवुमभित्यावपेत् । तत: अध्वर्यु: उपयमनं सम्राडासन्दां प्रागुबिलं "स्वाहात्वा सूर्यस्य रश्मिः"[२] इति मन्त्रेण सादयति । आपराह्णिके प्रवर्ग्ये - उपयमनं प्रत्यक्बिलं "स्वाहात्वा नदीभ्य: स्वाहा"[३] इति मन्त्रेण सादयतीति विशेष: । सर्वाणि पात्राणि संधाय "शंनोवात: पवतां मातरिश्वा०"[४] इति शान्तिपाठं सर्वे कुर्यु: । इति प्रवर्ग्य कर्म ।

अथ उपसदिष्टि: -

धर्मोत्सादनान्ते शान्तिपाठं कृत्वा, उपसदिष्टिं कुर्यात् ।

आतिथ्येष्टिवत् इष्टे: पूर्वतन्त्रमनुष्ठाय, अध्वर्यु: आग्नीध्रमुद्दिश्य स्फ्यमाद-दानाह - अग्नीन् मदन्तीरधिश्रय, हविरधिश्रयमुपसीद शुल्वप्रभृतितदातिथ्या तदातिथ्या बर्हिरूपविषं प्रस्तरं च बध्वा, तदस्त्वां "चतुर्दधावेदं परिमोजनीयं

---

(१) उक्ते प्रागुत्मायां हविर्हविष्मोमहिसद्भुर्मदभ्यमित्यावपेत्,

- आ० श्रौ० ४,७,५ ।

(२) अथैतदुपयमनं० प्राचीनबिलं सादयति स्वाहात्वा सूर्यस्य रश्मिभिरिति । तै० आ० ४।१० । बौ० श्रौ० ६।१२ ।

(३) प्रतीचीनबिलं सादयति स्वाहात्वा नदीभ्य इति बौ० श्रौ० ६,१२ । तै० आ० ५,८ ।

(४) अथोत्तरां शान्तिमुपयन्ति शंनोवात: पवतां मातरिश्वेति ।

- बौ० श्रौ० ६।१२ ।

च कृत्वा, "कर्मणे वां०" इति मन्त्रेण अग्नीन् परिस्तीर्य, स्रुचमग्निहोत्र-हवणीं जुहूपभृतं ध्रुवं आज्यस्थालीद्वयं वेदं वेदाग्रमिति सादयेत् । ब्रह्मपृष्ट्याभि-मौचार्य यच्च वेषाय निक्षिपेत् । मदन्तीरिह संस्कृत्य, "शुन्धध्वं०" मिति मन्त्रेण निर्वपेत्जुहुतं, "महीनां पयोऽसीति०" अन्तरितं रक्षो अन्तरिताः इति मन्त्रेण आज्यस्य पर्यग्निकरणं, अयं वेदः इति वेदसंस्कारः, अत्र न वेदिं सम्मार्ष्टि । "देवस्य त्वेति" स्फ्यमादाय सम्मृश्य, "पृथिव्यै वर्मासि०" इत्यादि मन्त्रैः स्तीर्णबर्हिषोपरिस्तम्भयजुर्हरति । अत्र वेदिं न खनति । स अध्वर्युः तिर्यञ्चं स्फ्यं स्तब्ध्वा सम्प्रैषमाह - मदन्तीरासादयेध्माबर्हिरुपसादय स्रुवं स्वयमन्त्रेण प्रोक्षमन्त्रेण स्रुचौ च सम्मृज्य, हविश्च मदन्तीश्च उत्पूय, अष्टकृत्वो जुहूवां गृह्णाति । चतुरुपभृति राज्यं पात्रान्तरे अवनीयाज्यस्थाल्यां सकृत् गृह्णाति । हविषो ग्रहणे सर्वत्र - "अग्निस्त्वौति" मन्त्रम्[1] । पात्रान्तरं ध्रुवं च जघनेन वेदिं निधाय, प्रोक्षणीरुन्नयन् "जुहूरसि घृताची" "उपभृदसि घृताची" इति द्वौ मन्त्रौ पठति । तूष्णीमाज्यस्थाली वेद्यां निधाय, "एते असदतां सुकृतस्य लोके" इत्यूहं[2] कृत्वा हविरक्षणमन्त्रं पठेत् । स्थाल्यान्तरस्थेनाज्येन

---

(१) अथ प्रवर्ग्यस्या कृता प्रवर्ग्येण चरति स्फ्यमाददान आहाग्नीन् मदन्तीरधिश्रय हविरधिश्रयध्रुवमसोदेति० अध्वर्युः तिर्यञ्चं स्फ्यं स्तब्ध्वा सम्प्रैषमाहमदन्तीरासादय० हविश्च मदन्तीश्चोत्पूयाष्टौ कृत्वो जुहूवां गृहीति० चतुरुपभृत्याज्यस्थाल्यां०, बौ० श्रौ० ६।२० । देवासुरा वा एषु लोकेषु समयतन्त उपसदामिहापुरं जयन्तीति०, ऐ० ब्रा० १।२३-२६ ।

(२) एते असदतां इति समभिमृश्य, प्रदक्षिणमावृत्य० देवपत्नीर्व्याचष्टे,
- बौ० श्रौ० ६।२० ।

स्रुवमभिपूर्य - "स्योनेमे" "कृषमोमे" इति मन्त्राभ्यां समाज्यं आज्यस्थाल्यामवनीय, यजमानः "यन्मऽग्ने०" इति मन्त्रं पठेत् । ततः अध्वर्युः - प्रदक्षिणमावृत्य, जघनेन गार्हपत्यमुपविश्य, देवपत्नीर्व्याचष्टे । व्याचक्षणमन्त्राः - "सेनेन्द्रस्य - - - - देवानां पत्न्यः इत्यन्तान् - देवपत्नी संज्ञान् मन्त्रान् पठित्वा, "अग्नयेसमिध्यमानायानुब्रूहि" इति होतृप्रैषं दद्यात्[1] । प्रैषानन्तरं होता - नवसामिधेनीपक्षं आश्रित्य, सामिधेनी धर्मेण त्रिस्त्रिरनवानं "उपसद्यायमीलहुषे०"[2] इत्यारभ्य त्रीन् मन्त्रान् ब्रूयात् । अध्वर्युः इध्मं सकृद्वा त्रिर्वाऽभ्यादधाति । न समिधं परिशिनष्टि । वेदेन उपवीज्य आज्यस्थाल्याः स्रुवेण अभिघार्य, आग्नीध्रः अग्निसम्मार्जनं कुर्यात् । उत्करे इध्मसन्नहनानि, स्फ्यः, उपसंगृह्येति[3] । होता च देवतावाहनमुपांशु स्वरेण करोति । अग्निं, सोमं, विष्णुमिति तिस्रो देवताः । अत्र आज्यभागौ न स्तः । इष्टितन्त्रेण निरसनोपवेशने कृत्वा, स्वासने उपविशति । अग्निर्होतावेदेति निगदं पठेत्[4] ।

---

(१) अथ तेनैव यथेतमेत्याधिध्यात् समिधमादधान आह अग्नये० इति ।

(२) उपसद्याय मीलहुष इति तिस्र एकैकां त्रिरनवानम् । ताः सामिधेन्यः । उपसद्यामीलहुष०, ऋ० सं० ७, १५, १-३ । उपसद्यायमीलहुषे० तिस्रः सामिधेन्यो उपसत्स्वा:० । ऐ० ब्रा० १,२५ ।

(३) अभ्यादधातीध्मं सकृद्वा त्रिर्वा, नसमिधं परिशिनष्टि० स्रुग्भ्यामुत्तरं - बौ० श्रौ० ६,२० ।

(४) तासामुच्चैन प्रणवेनाग्निं सोमं विष्णुमित्यावाह्योपविशेत् । नावाह्येदित्येके । अनावाहनेऽप्येता एव देवताः । स्विष्टकृदादिलुप्यते प्रयाजाआज्य भागौ च । आ० श्रौ० ४,८,।६-८ ।

अध्वर्युः घृतवतीशब्दं श्रुत्वा, स्रुचौ आददानः, ओश्रावयेत्यादि उपांशु स्वरेण प्रकृतिवत् कुर्यात्[1] । प्रथमाहुतिं पूर्वार्द्धे अर्धं जुहोति । द्वितीये तत्रस्थेन आज्येन जुहोति । तृतीये - औपभृतं जुह्वामानीय अपरार्द्धे जुहोति । यथालिङ्गं त्यागः, न स्विष्टकृत्[2] ।

उपसदिष्टीं याज्यापुरोनुवाक्या मन्त्राः[3] -

---

अग्नेः - "अग्निर्वृत्राणि जंघनत्०" इति पुरोनुवाक्या ।
"य उग्रइव शर्यहा०" इति याज्या ।[4]

सोमस्य - "त्वं सोमासि०" इति पुरोनुवाक्या ।
"गयस्फानो०" इति याज्या ।[5]

विष्णोः - "इदं विष्णुः०" इति पुरोनुवाक्या ।
"त्रीणिपदा विचक्रमे०" इति याज्या ।[6]

---

(१) अथाश्रावयति०, बौ० श्रौ० ६,२० ।

(२) वषट्कृते पूर्वार्धेऽर्धवेला जुहोति० वषट्कृते मध्ये जुहोति० वषट्कृते पश्चात् सर्वं जुहोति०, बौ० श्रौ० ६।२१ ।

(३) अग्निर्वृत्राणि जंघनयउग्रइवशर्यहा०, आ० श्रौ० ४।८।८, अग्निवतीर्याज्यानुवाक्याः कुर्यात् अग्निर्वृत्राणि जंघनत्, यउग्रइवशर्यहा, त्वं सोमासिसत्पतिः गयस्फानो अमीवहा, इदं विष्णुर्विचक्रमे त्रीणिपदाविचक्रम इत्येताः, ऐ० ब्रा० १।२५ ।

(४) अग्निर्वृत्राणि जंघनत्, ऋ०सं० ६।१६।३४ । यउग्रइव० ऋ०सं० ६।१६।३९ ।

(५) त्वं सोमासि० ऋ०सं० १।९१।५ । गयस्फानो० ऋ० सं० १।९१।१२ ।

(६) इदं विष्णुः ऋ० सं० १।२२।१७ । त्रीणिपदा० ऋ०सं० १।२२।१८ ।

अपराह्णिके उपसदि[1] याज्यापुरोनुवाक्ययोः विपर्यासः ।

सामिधेनीपाठे "उपसद्याय मीळ्हुषे" इत्यस्य स्थाने "इमां मे अग्ने समिधं" इति क्रमेण त्र्योमन्त्राः पूर्ववदेव अनवानकर्मेण पठेत् । होतृकर्मान्ते पाण्योश्च निन्हव इति[2] । अध्वर्युः उदङ्ङत्याक्रम्य - यथायथं स्रुचौ सादयित्वा आह - अग्नीन् मदन्त्यापाः इति । आग्नीध्रः "मदन्ती देवीः" इति मन्त्रपाठं कृत्वा, मदन्तीं स्पृष्ट्वा राजानं विस्रस्य, हिरण्यमवधाय, राजाप्यायनादि निन्हवान्तपूर्ववत् कुर्यात्[3] । अपराह्णिके उपसदि सव्योत्तानैर्निन्हव इति विशेषः । आज्यस्थाल्याः स्रुवेणोपहृत्य, "याते अग्ने या शया०" इति मन्त्रेण जुहोति । ततः परिधिषु समित्सु शकलान् उपसंगृह्य प्रस्तरबर्हिर्विन्यासंविस्रस्य, आहवनीये अतिवास्य, अद्भिरभ्युक्ष्य, उत्तरतो निधाय, श्रोणाशालां तिष्ठन् सुब्रह्मण्याह्वानं करोति[4] । अग्निष्टोमक्रतुस्त्र्युपसत्को भवति । तिस्रा उपसदो यस्यासौ त्र्युपसत्कः । एकसुत्ये यज्ञे तिस्र उपसदो भवन्ति । अपराह्णिक प्रवर्ग्यानुष्ठानान्ते द्वारापिधानं, तानूनप्त्रभिमन्त्रणप्रधानउभाभ्यां सप्रवर्ग्यं पुनः

---

(१) नित्यमाप्यायनं निन्हवश्च । एवमेवापराह्णे । इमां मे अग्ने समिधं - - इत्युपसदः, आ० श्रौ० ४।८।६-११ । सुपूर्वाण्हे एव पूर्वयोपसदाप्रचरितव्यं स्यपराण्हेऽपरया० । ऐ० ब्रा० १।२।३, इमां मे अग्ने समिधमिमामुपसदं वने रिति०, ऐ० ब्रा० १।२५ ।

(२) अथाहाग्नीन् मदन्त्यापा ३ इति० - - - - - हिरण्यमवधाय - राजानमाप्याययन्ति०, बौ० श्रौ० ६।२१ ।

(३) सव्यैपाणौ प्रस्तरं समावृत्याज्यस्थाल्याः स्रुवेणोपहृत्य प्रथमामुपसदं जुहोति याते अग्ने० - - - - - बौ० श्रौ० ६।२१, याते अग्नेऽया-शया०, तै० सं० १।२।११ ।

------अग्रिमपृष्ठेऽपि

पूर्वाह्णे प्रवर्ग्यवत् आपराह्णिकप्रवर्ग्यप्रचार: पूर्वशान्त्यादि अवान्तरशान्त्यन्तं कुर्यात् । उपसदन्ते सोमाप्यायनं निन्हवनम्, सुब्रह्मण्याह्वानं, व्रतदुघादिकं च कार्यम् । आरम्भात् तृतीयेऽन्हि पौर्वाह्णिक प्रवर्ग्योपसत् प्रचारं पूर्ववत् कुर्यात्[२] । ततः प्रवर्ग्योत्सादनान्ते अग्निप्रणयनं कुर्यात् । इति प्रवर्ग्यानुष्ठानम् ।

वेदिमानम् -
----------

औपवसथ्यात्पूर्वेऽहनि प्रात: मध्यमपौर्वाह्णिक प्रवर्ग्योपसदौ प्रचर्य महावेदिकरणं उत्तरवेदि निवपनं च कुर्यात् ।

अध्वर्युः वेदिं मिमीते - आहवनीयादेव अग्रे षट् प्राञ्चः प्रक्रमान् आक्रामति, तत् शालामुखीयं शङ्कुं निहन्ति । शालामुखीयात् अंसौ: षट्त्रिंशत् प्राञ्चः प्रक्रमानपक्रामति तत् यूपावटीयंशङ्कुं निहन्ति । शालामुखीयात् अंसौ: पंचदश दक्षिणा पंचदशोदीचः तत् शङ्कू निहन्ति ते श्रोणी । यूपावटीयात् ।

---------------------------------------

पूर्वपृष्ठस्याग्रे----------

(१) परिधिषु शकलानुपसंगृह्णाति प्रस्तरे०- - - - सुब्रह्मण्यमाह्वयत्रिस्तनव्रतं प्रयच्छतेति । बौ० श्रौ० ६।२१, यदुपसद उपसद्यन्ते० नान्यमाहुतिं पुरस्ताज्जुहुयात्० तिस्र उपसदउपैति० तै० सं० ६।२।३, तिस्र एव साह्नस्यो-पसदो द्वादशाहीनस्य यज्ञस्य ०, तै० सं० ६।२।५, देवासुरा वा एषु लोकेषु समयतन्त० - - - - प्रस्तरेणनिन्हवते०, ऐ० ब्रा० १।२३-२६ ।

(२) अथापराह्ण आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति तयोः समानो-क्तौताकेवनाना० - - - - - - त्रिस्तनव्रतं दोक्ष्यति तदर्धरात्रे-प्रयच्छति ।

शङ्कोद्वाविंश दक्षिणा द्वाविंशोदीच: तत्र शंकूनिहन्ति तावं सो । वरुणयामानेन प्रमाय समं तं स्पंयया परितनोति, पृष्ठ्यां वितत्य यूपावटीयात् शङ्को: अनुस्पंयं द्वादशप्रत्यंचिदुद्रपदानि प्रक्रामति, समध्य औत्तरवेदिक: शङ्कु: । तस्मात् पंचदक्षिणा पंचोदक्षि तत्र शंकूनिहंति ते श्रोणी । यूपावटीयात् शंको: प्रत्यगर्धपदं प्रक्रम्य, चत्वारिदक्षिणा चत्वार्युत्त्रिंशतावंसौ । मध्यमादीचर वेदिकात् शंको: षट् प्रतीच: प्रक्रमान् प्रक्रामति, दक्षिणास्पंयं तत्स्फ्यं निदधाति स उपरवाणां काल: । महावेद्या उत्तरादंसीयात् शंकोर्वैयं तेन द्वादशप्रतीच: प्रक्रमान् प्रक्रामति, उदन्चि त्र्योदशं स उत्कर: । स्फ्येनमोत्वा वेदादानं मार्जनं च न भवति ।[१] अध्वर्यु: पाणी संमृज्य, जघनेन

---

(१) स आहवनीयादेवाग्रे षट् प्राच: प्रक्रमान् प्रक्रामति । तच्छंकुं निहन्ति - - - - - - - - - - - - - - - - - - - - - - - - -
उत्तराभिमुखाधार्धिनां प्रतिच्छाय० । बौ०श्रौ० ६।२२-२३ ।
त्रिंशत् पदानि पश्चात् तिरश्ची भवति षट्त्रिंशत् प्राचीचतुर्विंशति: पुरस्तात् तिरश्ची० उद्धन्ति० बर्हिस्तृणाति० उत्तरं बर्हिषउत्तरबर्हिस्तृणाति० । तै० सं० ६।२।४, शम्यया परिमिमीते० त्रिर्हरति० तूष्णीं चतुर्थं हरति० ध्रुवासीति संहन्ति० देवेभ्य: शुन्धस्व देवेभ्य: शुम्भस्वेत्यव चोक्षति प्र च किरति० । तै० सं० ६।२।७ ।
वितीयनोमिऽसि० - - - - - - - देवेभ्य: शुम्भस्व । तै० सं० १।२।१२ । विभिमि त्वा पयस्वतीम्० - - - - - तयोर्देवानामभिभाधेयम् । तै० ब्रा० ३,७,७।१३-१४ । एष्वाव स समुद्र: यच्चात्वाल:० तस्मात् चिचितस्तंहनन्ति । तै० ब्रा० १।५।१०

संमृश्य, जघनेन महावेद्यां तिष्ठन् स्फ्यमादत्ते देवस्यत्वेति । "इंद्रस्य वायुरसि०" इति मन्त्रेण उपरवदेशे उदीचीनाग्रं बर्हिर्निदधाति । "पृथिव्यै वर्मासि०" इत्यादि महावेद्याः पूर्वं परिग्राहं परिगृह्य, आदित्यवर्तीं विश्वदेव्यावतीं वर्चीन्निति विशेषः । "देवस्यस० धस०" इति मन्त्रेण उपरवदेशमुद्धयंति । त्रिराग्नीध्रो हरति । अध्वर्युः अग्रेणशालां तिष्ठन् संप्रैषमाह - "वेदिकारा-वेदिं कल्पयत, प्रस्थलानिभिंदत, प्रतिनिम्नान्पूरयत, किं शारूणि निरस्यत, प्राचीमुदीचीं प्रवणांनिस्तिष्ठत । महावेद्या उत्तरादंसोयात् शङ्कु०कोर्वैयं तेन त्रीन् प्रतीचः प्रक्रमान् प्रक्रामति उदन्चं चतुर्थं तच्चात्वालं पशुवत् परिलिख्य, उत्तरवेदिमुत्साद्य, शम्यप्रमायप्रादेशमात्रीं उत्तरनाभिं प्रतिच्छादयति । ततः अपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां[1] प्रचर्य, उपनिष्क्रम्य च सुब्रह्मण्याह्वानं करोति । ततः द्विस्तनव्रतं दोहयत् । तत् अर्धरात्रे यजमानाय प्रयच्छति । अपररात्रे आह्वृत्य "एकस्तनव्रतं दोहयत, उदित आदित्ये विसृष्टायां वाचि उभाभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य, "या ते अग्ने स हराशया तनू०" इति मन्त्रेण

---

(१) अपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । अथोपनिष्क्रम्यसम्प्रैष-माहसुब्रह्मण्य० द्विस्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । अथाध्वर्युर-पररात्र आह्वृत्य संशास्ति एकस्तन० प्रातरुदितआदित्ये० हराशया-मत्र जुहोति । अथोपनिष्क्रम्यसम्प्रैषमाह सुब्रह्मण्य० अर्धस्तनव्रतं प्रयच्छति० अथोपनिष्क्रम्य सम्प्रैषमाह सुब्रह्मण्य - - - - - - - - संसादयोद्वासनाय इति ।

- बौ० श्रौ० ६।२३-२४ ।

याते अग्नेहराशया० तै० सं० १।२।११ ।

अत्र जुहोति । श्रोणशालां तिष्ठन् सुब्रह्मण्यं सम्प्रैष्यति 'अर्धस्तनव्रतं प्रयच्छत' तत् पूर्ववत्प्रदाय, तदानीमेव आपराह्णिके प्रवर्ग्योपसदौ समस्य, उपनिष्क्रम्य, सुब्रह्मण्यसम्प्रैषमाह - सुब्रह्मण्य सुब्रह्मण्यामाह्वयप्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यं संसाद्योद्वासनाय ।

प्रवर्ग्योद्वासनम् - [1]

प्रवर्ग्योद्वासनमिति संज्ञा संव्यवहारार्था अत्र प्रवर्ग्यशब्देन तत् सम्बन्धीनि पात्राणि लक्ष्यन्ते तेषां तत् स्थानात् निष्कासनं प्रवर्ग्योद्वासनमिति । ततः पदं त्रेधाविभज्य, प्रवर्ग्यमुद्वासयिष्यन् उपकल्पयते -
(१) त्रीन्शलाकान्, (२) इध्मानित्रीणि, (३) उदकुंभौ, (४) दधिमधुमिश्रं, (५) ग्रमुष्टिमवकाभारं, (६) विंशतिमौदुम्बरीः समिधः, (७) मुन्जप्रलवान्, (८) रौहिणपिष्टानि, (९) सरेभ्यः सिकताः इति ।

---

(१) त्रेधा तत् पदं कुर्वन्ति । गार्हपत्ये तृतीयमुपवपमनीषु तृतीयं नि तृतीयं दधाति । अथ प्रवर्ग्यस्यावृता प्रवर्ग्यमुद्वासयति, बौ० श्रौ० ९।२४ । प्रवर्ग्यमुद्वासयिष्यन्नुप कल्पयते त्रीन्शलाकानिध्मां स्त्रीणि० - - - - - - - - - - - - - - तमध्वर्युः पश्चात् प्राङ्०मुखस्तिष्ठन् स्रुवाहुत्याभिजुहोति धर्मयाति० पूर्वया द्वारोपनिष्क्रामन्ति अनुनोऽनुमतिः, अन्विदनु मतेत्वम् इति द्वाभ्यां, बौ० श्रौ० ९।१३ ।

--------अग्रिमपृष्ठेऽपि

अत्र "नमोवाचे०" इति पूर्वां शान्तिं पठेत् । ततः अध्वर्युः अग्रेणाहवनीयं तृणानि संस्तीर्य, तदेतत् परिधान्यं सर्वं संसादयति । अत्र खराडासन्दीं, स्थूणां, गोदोहनीं, डागायशंकुं, इति । अथ एतौसरौ नानैव सतयोः समुप्य, अग्नेन सह संसादयति । उच्छिष्टखरं आग्नीध्रः सते समोप्य, दक्षिणेन द्वारेण उपनिष्क्रम्य, मार्जालीयेन्युप्य, मार्जालीयदेशे निवपति । अथ एतेनैव यथेतमेत्य निष्क्रामति । अथ अध्वर्युः द्वाराणि परिश्रित्य, पत्नीं, ब्रह्माणं, होतारं प्रतिप्रस्थातारं, प्रस्तोतारं, आग्नीध्रं च आह्वयति ।

ततः दक्षिणतो ब्रह्मयजमानौ उपविश्य, गार्हपत्ये आज्यं संस्कुर्यातामु । प्रतिप्रस्थाता आहवनीये शालाकमिध्ममादीप्य, मुखदघ्ने धारयन् पुरस्तात् प्रत्यङ्मुखस्तिष्ठति । पश्चादध्वर्युः प्राङ्मुखस्तिष्ठन् "घर्मयातेदिविशुग्येति०" मन्त्रेण स्रुवाहुत्याजुहोति । ततः प्रतिप्रस्थाता तं प्रदीप्तमिध्मं अग्नौ प्रास्य, अपरमादीप्यनाभिदघ्ने धारयति, तमध्वर्युः "घर्मयातेन्तरिक्षे०"

-----------------------------------------

पूर्वपृष्ठस्याग्रे-----------------

अथ महावेदिमवक्रम्य प्रस्तोतारमाह प्रस्तोत: सामगाय इति ।
साम्ना प्रस्तोतान्ववैति । त्रिर्निधनमुपैति । अथाभिक्रामन्ति-
दिवस्त्वा० - - - - - उत्तराशान्तिमुपयन्ति शंनोवात:
पवतां मातरिश्वा इति । बौ० श्रौ० ६।१३-१६ । घर्मयाते-
दिविशुक्० - - - - - - - ऊर्ध्वो मनः सुवर्गमु ।
- तै० आ० ४।११-१३ ।
घर्मयातेदिविशुगिति तिस्र आहुतीर्जुहोति० इत्यग्रेजुहोति । अथे-
यत्यथेयति० - - - - - - - - यदुपरिष्टादुपसदां प्रवृज्यते,
- तै० आ० ५।६-१२ ।

इति मन्त्रेण ध्रुवाहुत्या जुहोति । ततःप्रतिप्रस्थातातमग्नीध्रास्य, अपरमादीप्य जानुदघ्ने धारयति । तमध्वर्युः "घर्मयातेपृथिव्यां०" इति ध्रुवाहुत्याजुहोति । अत्र यथालिङ्गंत्यागः । अत्र तमग्नीध्रास्य, विवृत्यद्वाराणि प्रावर्गिकं सर्वमादाय, पूर्वद्वारेण सर्वेऋत्विजः "अनुनोद्यानुमतिः" अन्विदनुमतेत्वं" इति मन्त्रद्वयं पठन्तः अध्वर्युणासह निष्क्रामन्ति । अनग्निचित्त्येयागे उत्तरवेदिरेव प्रवर्ग्योद्वासनदेशः ।

ततः अध्वर्युः महावेदिं प्रविश्य, "प्रस्तोतः सामानिगाय" इति प्रस्तोतारं प्रेष्यति । "पुरुषः पुरुषोनिधनमुपैति" दिवस्त्वापरस्यायाः इति मन्त्रं पठन् सर्वे अभिक्रामन्ति । "विषुवति" द्वितीयं निधनमुक्त्वा, "ब्रह्मणस्त्वापरस्यायाः" इति मन्त्रेण सर्वे अभिक्रामन्ति । उपरवदेशे तृतीयं निधनमुक्त्वा "प्राणस्यत्वापरस्यायै:" इति मन्त्रेण अभिक्रामन्ति । ततः अध्वर्युः उत्तरेणोत्तरवेदिं स्थित्वा आह - अनेनोदकुम्भेन संततयाधारया त्रिः प्रदक्षिणं परिषिञ्चन् परीहि । आग्नीध्रः सप्रवर्ग्यामुत्तरवेदिं परिषिञ्चन् त्रिः प्रदक्षिणं पर्येति । "वल्गुरसिशंयुधायाः" इति मन्त्रमध्वर्युः यजमानं वाचयति । आग्नीध्रः निधाय कुम्भं यथेतं त्रिरपसलैः पर्येति । अध्वर्युः उत्तर-नाभिं "चतुः स्रक्तिर्नाभिरिति" मन्त्रेण अभिमृशति । ततः - बरावुत्तरेणोत्तर-नाभिमवकीर्य, कृष्टीभ्यां प्रागायतं बर्हं कृत्वा, तत्र सुवर्णशकलं निधाय, कृष्णाजिनं प्राचीनग्रीवमुत्तरलोममास्तीर्य, रौहिणपिष्टैः, मुञ्जप्रलवसिकता-भिरनुप्रकीर्य, प्रचरणीयं महावीरं शफाभ्यां परिगृह्य, दध्नामधुमिश्रेण पूरयति । "यमैतन्नमितद्भुपुरीषं" मिति । पुनरभिपूरयति "महीनां पयोसि" ।

सरस्य पूर्वार्द्धे सादयति । प्रचरणीयं महावीरमभितः आदित्यमण्डलवत् क्रमेण परिचिनोति ।

आदित्यमण्डलवत्सादनप्रकारः -

उपप्रचरणीं रुक्मौ पिन्वने मौञ्ज एव च ।
शफौ रौहिणहवनीं समिधः कुशवेदकम् ॥

स्थूणापयमरज्जू च परिध्यग्रीच वृष्टिके ।
पवित्रे समिधः स्थालीं पवित्रं च कपालके ॥

ध्रुवं कुशत्रयं वेदमासन्दीमुदमेव च ।
घर्मेतिन्मन्त्रेण सिकतासु च रौहिणे:[1] ॥+

एवं प्रकारेण पात्राण्यनुप्रकीर्य, अजिनेन प्रोर्णुयात् । ततः एनं "अयं यः पुरुबल्पोसि०" इति मन्त्रैः उपतिष्ठते । ततः प्रस्तोतारमाह - प्रस्तोतर्णाहारं सामगायस्व होत्रीयं चेति । अध्वर्युः दध्नामधुमिश्रमुदकुम्भेन संततयाधारया त्रिःप्रदक्षिणं परिषिञ्चन् परीहि । आग्नीध्रः पूर्ववत् त्रिःप्रदक्षिणं परिषिञ्चन् निधाय कुंभं त्रिरपसलैः पर्येति । परिषिच्यमाने अध्वर्युः - "रन्तिर्नामासि दिव्योगन्धर्वः" इति मन्त्रं वाचयति । ततः यजमानः "एतत्वं देव घर्म" इति मन्त्रेण घर्ममुपतिष्ठते । "सुमित्रियान०" इति मन्त्रेण अञ्जलिना अपो गृह्णाति । "दुर्मित्रियास्तस्मै०" इति मन्त्रेण नैर्ऋत्यां दिशि निरस्यति । अपः स्पृष्ट्वा, "उद्वयं तमसस्परीति मन्त्रेण

---

(१) ना० शु० बौ० प्र०, पृ० सं० ४१ ।

आदित्यमुपतिष्ठते । ततः अध्वर्युः अवकाभारेण प्रच्छाद्य गोप्तारं समादिशन्नाह - वयोभ्यो महावीरं गोपाय प्रस्तोतः इयि तेनान्वेहि । ततः अध्वर्युः गार्हपत्यं यथेतमेत्य "उदुत्यं चित्रं" इति द्वाभ्यां मन्त्राभ्यां ध्रुवाहुतीहुत्वा, सर्वैशालामुखीय-मुपतिष्ठन्ते । "इयमूषुत्यमस्वम्यं०" इत्युपस्थानम् । सर्वे आग्नीध्रीय गत्वा, "शंनोवातः पवतां०" इति उत्तरां शान्तिं पठन्ति । इति प्रवर्ग्योद्वासनम् ।

अथाऽग्नीषोमीयः -

अग्निष्टोमयागे सुत्याहात्पूर्वदिने अग्नीषोमीय पशोरनुष्ठानं भवति । एतत् पशोरनुष्ठानं निरूढपशुतन्त्रेण अनुष्ठेयम् । अत्रानुष्ठाने - अग्नि-षोम देवताको द्विदेवत्यः पशुः । अग्निषोमीय पशोः अनुष्ठानार्थं "अग्नि-षोमीयपशुनायक्ष्ये" इति देवतोच्चारपूर्वकं सङ्कल्पं कुर्यात् । अध्वर्युः शाखां छिनत्ति, शाखाच्छेदन विधिः पूर्वमेव उक्तः । आतिथ्येष्ट्यां वेधामास्तृतबर्हिरेव पञ्चविधं कृत्वा, तदीय प्रस्तरेण सह शुल्वेन संभृत्य, ते एव विधृती प्रज्ञाते निधाय कार्ष्मर्यमयैस्त्रैरेव परिधिभिः सह "ततस्त्वा त्रयोविंशतिधा०" इति मन्त्रेण इध्मं - संभरति । द्वितीयः पक्षः - अन्यदेव पञ्चविधं बर्हिः कार्ष्मर्यै परिधिः सह इध्मं संभरति ।

शाखाहरणम् -

षट्शाखा आहरेत् । तत्र क्रमः - दधिग्रहार्थं प्रथमां, सवनीयाभि-धानार्थं द्वितीयाम् । दधिघर्मार्थं तृतीयाम् । शृतातङ्कार्थं चतुर्थीं । आशिरार्थं

पञ्चमोम् । मैत्रावरुण्या आभिगार्थं षष्ठोम् । ताः शाखाः प्रतिप्रस्थाता अभ्यादधाति । ततः अध्वर्युः हर्व्यं प्रणयनीयमुपोपयमनीः कल्पयन्ति । एवं विधिं कृत्वा, अग्निप्रणयनं कुर्यात् ।

अग्निप्रणयनम्[1] -

---

अध्वर्युः हौत्रे "अग्नये प्रणीयमानायानुब्रूहि" इति प्रैषं ददाति । होता - निखनोपवेशने कृत्वा, उपविश्य, हिं कृत्य भूर्भुवस्वरोंश्म् प्रदेवं देव्याधिया इत्यादयः अग्निप्रणयनमन्त्राः "निहोताहोतृषदने०" इति द्वे कुर्वां परिधानीये इत्यन्तं पठित्वा, प्रक्रमस्थाने पुनरागत्य, वाङ्विसर्गान्तं, होतृकर्म करोति । अग्निप्रणयनमन्त्राः पूर्वमेव उक्ताः । अध्वर्युः शालामुखीयमग्निं अग्रेण नीत्वा उदग्गतः तिष्ठेत् । अत्र एका याज्ञिकी समाख्या यथा -

कश्चिदाहवनीयाग्निं प्रणेष्यत्स्वथ सोमकम् ।
शालामुखीयमग्रेण नीत्वा तिष्ठेदुदग्गतः ॥
प्रणीते तेन मार्गेण नीत्वा संधान्तु सादयेत् । इति ।

---

(१) अग्नये प्रणीयमानायानुब्रूहि इत्याहाध्वर्युः । प्रदेवं देव्याधिया०,
ऐ० ब्रा० १।२८ ।

प्रैषितो अग्निप्रणयनीयाः प्रतिपद्यते । प्रदेवं देव्याधियेति तिस्र-श्कायास्त्वापदेवयमग्ने विश्वेभिः स्वनीकैर्देवैरित्यर्धर्चे आरमेत् । आसीनः प्रथमामन्वाहोपांशु सप्रणवाम् । निहितेऽग्नौ सीदहोतः स्वउलोके चिकित्वान्निहोता होतृषदनेविदान इति द्वेपरिधाय०,
आ० श्रौ० २,१२-१० ।

अध्वर्युः[1] एवमग्निं प्रणीय, ब्रह्माणं मन्त्रवदुपवेश्य, पाणीसम्मृश्य, उत्तरपरिग्रहादि कुर्यात् । ततः उत्तरवेदेः तिर्यन्चं स्फ्यं स्तब्ध्वा, "प्रोक्षणीरासादयेध्माबर्हिरुपसादय" इत्येतावत् प्रेष्य, स्फ्यमुदस्य, आहृताभिः प्रोक्षणीभिरद्भिः, महावेदिं प्रोक्ष्य, पूर्वं वनधौता पन्चविधाबर्हिर्मुष्टिं प्रोक्ष्य, तेन पृष्ठ्या प्रक्षाप्य, अनसि प्रक्षाल्य च, चात्वालोत्करावन्तरेण प्रवेश्य, महावेद्यां पृष्ठ्या दक्षिणत उत्तरतश्च अरत्निमात्रं विहाय, प्राचीं प्रोक्षणीं स्थापयित्वा, "वैष्णवी विष्णवे शुन्ध्याo" इति मन्त्रेण प्रोक्षति ।

हविर्धानसंस्कारः[2] -

अध्वर्युः "एहि यजमान" इति यजमानमामन्त्र्य, यजमानः पूर्वयाद्वाराशालां प्रविश्य, आग्याशालामुत्तीर्थे अग्नौ आज्यं विलाप्य, उत्पूय,

---

(१) अग्नेराहृताग्निं प्रणयत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा-तिर्यन्चं स्फ्यं स्तब्ध्वा सम्प्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयo - - - - - - - - - - - - - - - - - - - अथ ने प्रोक्षति वैष्णवी विष्णवेशुन्धेथामिति, बौo श्रौo ६।२४ ।

(२) अथाह एहि यजमान इति । पूर्वयाद्वाराशालां प्रपाद्यo - - - - - - - - - - - - - - - - - - - - - - सम्प्रैषमाह, बौoश्रौo ६।२४ ।
युन्जतेमनउतo । इदं विष्णुर्विचक्रमेo । अनोवो रीजायतांo ।
- तैo संo १।२।१२-१३ ।
इरावती धेनुमतीहिभूतंo । तैo संo १,२ ।१२-१३ ।

अन्वारब्धे यजमाने अध्वर्युः - "युंजतेमनउत०" इति चतुर्गृहीतं हुत्वा, तेनैव पुनश्चतुर्गृहीतं गृहीत्वा, आज्यस्थालीं, स्रुवां, स्फ्यमुदपात्रं बर्हिर्हिरण्यमादाय, अन्वय्यजमानोऽनूचोपदनोपदतृतीयमादाय, पूर्वयाद्वारा उपनिष्क्रम्य, दक्षिणस्य हविर्धानस्य पश्चात् अक्षमुपसृप्य, दक्षिणस्यां वर्तन्यां स्फ्येनमृदमुद्धृत्य, अवोक्ष्य, तत्र हिरण्यं निधाय, परिस्तीर्य, परिषिच्य, "इदं विष्णुर्विचक्रमे०" इति मन्त्रेण हुत्वा, अर्धं पदपांसूनां पत्न्यञ्जलावोप्य सम्प्रविणाभिधारयति ।

पत्नी -

---

प्राचीनाभेन पाणिना "आनोवीरोजायतां०" इति मन्त्रेण दक्षिणमक्षधुरं अनक्ति । अध्वर्युः पुनः चतुर्गृहीतं गृहीत्वा, उत्तरस्यहविर्धानस्य पश्चात् अक्षमुपसृप्य, तथैवउदननावेक्षणे कृत्वा, हिरण्यनिधाय, परिस्तीर्य, "इरावतीधेनुमतीहिभूतं०" इति मन्त्रेण अभिजुहोति । पदपांसून् सर्वांश एव गृहीत्वा, पत्न्यञ्जलावोप्य, अभिघार्य, पूर्ववदेव - पत्नी उत्तरमक्षधुरमनक्ति । ततः अध्वर्युः आज्यस्थाल्यादीनि प्रतिप्रस्थात्रेप्रदाय, नयन्तिपत्नीं, व्ययन्तिहोतारं, अथ एनं यजमानं पत्नीं च हस्ताभ्यां सम्परिगृह्य, हविर्धानप्रवर्तनार्थं प्रैषं ददाति ।

हविर्धानप्रणयनम् -

---

अथ अध्वर्युः होत्रे-हविर्धानाभ्यां, प्रवर्तमानाभ्यामनुब्रूहि "होता यथासन्नमार्गेण प्राग्वंशं प्रविश्य, हविर्धानप्रवर्तनमन्त्रान् "त्वं विप्रस्त्वं कविः

इत्यादय: परित्वागिर्वणोगिर इति परिधानीयान्तं पठेत्[1]। तत्र अध्वर्यु: "प्राचीप्रेतमध्वरं०" इति मन्त्रेण प्रवर्तयति। "सुवाग् देव दुर्या०" इति वदो स शब्दे प्रतिप्रस्थाता अध्वर्युश्च जपति। तत: उत्तरेण हविर्धाने परीत्य, उत्तर-वेदिकांच्छं कोस्तोन् प्रतीच: प्रक्रमान् प्रक्रम्य, उपस्तम्भमनयोरनसोरग्रे स्थापयत:, "अत्र रमेथां वर्ष्मन् पृथिव्या:" इति मन्त्र:। तत: दक्षिणतो दक्षिणत: "दिवो वा विष्णवुतवापृथिव्या:" इति मेथीन् निहन्ति। "विष्णोर्नुकं वीर्याणि०" इति मन्त्रेण मेथीन् बध्नाति। तथैव प्रतिप्रस्थाता उत्तरतो बध्नाति। इति हविर्धाने प्रवर्तनम्।

सदो हविर्धानादिनिर्माणम् -
-------------------------

तत: अध्वर्यु: दक्षिणोत्तरयो: युगान्तार्जवेन गर्तद्वयं कृत्वा, तेषु-स्थूणा: प्राचीनकरणाउच्छ्रित्य, वंशौ प्रोह्य, पुरस्तात् रराटीं बध्नाति "विष्णोरराटमसी" ति मन्त्रेण। "विष्णो: पृष्ठमसी" ति मन्त्रेण मध्यमंछदि-रधिनिदधाति। "विष्णो:श्नप्त्रेस्थ:" इति मन्त्रेण दक्षिणोत्तरयो:, एवं परिश्रित्य, प्राचीं प्रतीचीं च द्वारौ कृत्वा, द्वारबाहौकुशमुष्टिमुपनिगृह्य, "विष्णो: स्यूरसि" इति मन्त्रेण दर्भेण स्यन्धान् प्रवयति। "विष्णोर्ध्रुवमसि" इति मन्त्रेण ग्रन्थिं करोति। तं ग्रन्थिं विस्रस्याह - अकुर्वतोग्रन्थीन् हस्त-कौशलेनिस्तिष्ठत। एवमुत्तरे प्रतिप्रस्थाता। एवमपरयोर्द्वारबाह्वो:। तत: "वैष्णवमसिविष्णवेत्वा०" इति मन्त्रेण हविर्धानमभिमृशति।

तत: षट् प्राञ्च: प्रक्रमान् प्रक्रामति। "देवस्यत्वे" त्यभ्रिमादाय,

"अभ्रिरसिनारिरसि" इत्यभिमन्त्र्य "परिलिखितं" मिति मन्त्रेण अवटं त्रिः परि-लिख्याह - उद्गातः एहि ध्यामाँ[?]दुम्नयावितं सन प्राकृ पुरीषं उद्वपतात्[2] । ततः अध्वर्युः शालामुखीयात् शंकोरेकस्मात् प्रक्रमात् आरभ्य दशप्रक्रमं तिर्यक् सप्त-विंशत्यरत्निकं पदं पदोऽष्टादशारत्निकं नवशादिर्घं सदो विमाय त्रीणि गर्तानि खात्वा दक्षिणस्य हविर्धानस्य पुरोहामुपहान्विमाय, पृष्ठ्याया दक्षिणतः पदं विमाय, तत्रारत्निक्षुखं कृत्वा, प्रक्षिणु प्रादेशायैनोपरवं

---

(१) अथैने संपरिगृह्य सम्प्रेषमाह हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनु ब्रूहि इति । त्रिरुक्तायां प्रवर्तयन्ति प्राची प्रेतमध्वरं अथैनां स्पन्ध्या सुपनिबद्धामुपनिबध्नात्येतेनैव मन्त्रेण, बौ० श्रौ० प्र० ६ अ० २४-२५ प्राचीप्रेतमध्वरं० । अत्रमेथां वर्ष्मन्० । दिवोवा-विष्णा० । विष्णोर्नुकं० । तै० सं० १।२।१३, तै० सं० ६।२।७-६ ।

(२) अथाध्वर्युर्दक्षिणस्य हविर्धानस्य कुबकात् प्राञ्चमरत्निं मीत्वा लौकेन्यस्य गर्तं खानयति - - - - - - - - - - - - - - -
प्रादेशमुखान् प्रादेशान्तरपादान्, बौ० श्रौ० प्र० ६ अ० २५-२६ ।
क - विष्णोरराटमसि । विष्णोः श्नप्त्रेस्थः० । विष्णोः स्यूरसि० । विष्णोर्ध्रुवमसि । वैष्णवमसि विष्णवेत्वा ।
ख - देवस्यत्वा० । अभ्रिरसिनारिरसि० । परिलिखित ।
(क) तै० सं० १, २, १३ । (ख) तै० सं० १।३।१ ।
दिवो वा विष्णुवुत वा पृथिव्या इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं निहन्ति० । तै० सं० ६।२।६ । यत् तृतीयं पदिर्दविर्धानयो रुद्राक्रियते० यं प्रथमं ग्रन्थिं ग्रथ्नीयात् तं न विस्रंसयेदमेहेनाध्वर्युः प्रमीयेत, तै० सं० ६,२ ।६-१० ।

परिमण्डलं लिखेत् ।

उन्नेता -

ततः उन्नेता उपरवपुरीषं दक्षिणस्य हविर्धानस्य पुरस्तान्न्युप्य, चतुरवरं सिकताभिः आग्राशिनं कृत्वा, अभ्रिमादाय, अभिमन्त्र्य, यूपावटं त्रिः परिलिख्याह - अग्नीदेहि । इमं यूपावटं - खनोपरखम्मितं प्राक् पुरीषमुत्वपतात् । चतुरङ्गुलेनोपरमतिरखनतात्[१] ।

प्रतिप्रस्थाता -

ततः प्रतिप्रस्थाता "अच्छिन्नोरायः सुवीरः" इति मन्त्रेण औदुम्बरीनिरवातात् ऊर्ध्वं यजमानेन सम्मायाधस्तात् परिवासयति । ततः हस्तौ पादौ प्रक्षाल्य, चात्वालोत्करावन्तरेण प्रवेश्य, पुरोऽवटं स्थापयति[२] ।

ततः अध्वर्युः यजमानमाह - यजमानः "दिवेत्वान्तरिक्षाय" इति

---

(१) अथोन्नेतारमाह उन्नेतरिहीमानुपरवान् - - - - चतुरङ्गुलेनोपरमतिरखनतादिति तं स खनतिखानयतिवा । बौ० श्रौ० ६।२५ ।

(२) यावदेवात्राध्वर्युरभेष्टति तावदेष प्रतिप्रस्थातौदुम्बरीं स्थूणां यजमानेन संमायाधस्तात् परिवासयति अच्छिन्नोरायः० इति, - बौ० श्रौ० ६।२६ ।

मन्त्रेण औदुम्बरीं पुरस्तात् अवाञ्चीं प्रोक्षति । "शुन्धन्तां लोकः पितृषदनः" अवटस्पोऽवनयति । "यवोऽसियवयेति" मन्त्रेण यवान् प्रस्कन्दयति । "पितृणां सदनमसीति मन्त्रेण बर्हिर्हस्तं व्यतिषज्य, अवस्तृणाति[1] । ततः हिरण्यमन्तर्धाय "पितृभ्यः स्वाहे" ति स्रुवेण अभिजुहोति । "उद्दिवंस्तभाये" इति मन्त्रेण औदुम्बरीमुच्छ्रयति । "द्युतानस्त्वे" ति मन्त्रेण प्राचीनकर्णामिनोति । "ब्रह्मवनित्वेति" मन्त्रेण प्रदक्षिणं पुरीषेण पर्यूहति । "ब्रह्मदृंह क्षत्रं दृंह०" इति मन्त्रेण मैत्रावरुण दण्डेन संहन्ति । ततः उदपात्रमुपनिनीय विशाखे हिरण्यं निधाय, "घृतेनद्यावापृथिवी०" इति मन्त्रेण स्रुवेण अभिजुहोति । तां आहुतिं भूमिगते स्वाहाकारः कर्तव्यः, यथालिङ्गं त्यागश्च कुर्यात् । ततः प्राचीनकर्णस्थूणामुच्छ्रित्य, तासु उदीचो वंशान् प्रोहन्य, मध्यमच्छदिरध्यस्यति । एवं नवच्छदींषि "इन्द्रस्य सदोऽसिविश्वजनस्य छाया०" इति मन्त्रद्वयेन अध्यस्यन्ति । "परित्वागिर्वणोगिर०" इति परिश्रयन्ति । "इन्द्रस्य स्यूरसि" इति मन्त्रेण दर्भेण

---

(१) अथाध्वर्युः - - - - - - - - इन्द्रस्यध्रुवमसि इति ग्रन्थिं करोति तं तदानीमेव विस्रस्याह अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निस्तिष्ठत इति, बौ० श्रौ० ६।२६-२७ ।

दिवेत्वान्तरिक्षायत्वादयः मन्त्रविभागः - तै० सं० १।३।१

परस्तादर्वाचीं प्रोक्षति० यत्रखनन्त्यपोवनयति० यवमतीरवनयति०, यजमानेन संमितौ दुम्बरी भवति०, पितृणां सदनमसीति- बर्हिरवस्तृणाति०, बर्हिरवस्तीर्यमिनोति० घृतेनद्यावापृथिवीआपृणेथामित्यौदुम्बर्यांजुहोति० आन्तमन्ववच्छादयति० नवच्छदितेजस्कामस्य मिनुयात्० ।

- [illegible] - तै० सं० ६।२।१०   ।

स्पन्द्यां प्रवयति, पूर्ववदेव ग्रन्थिं करोति चिह्नं सति च ।

ततः महावेद्याः उत्तरादं सोयाच्छं कौरवेयन्तेन अष्टादश प्रतीचः प्रक्रमान् प्रक्रामति[1] । तदा आग्नीध्रागारं विमिमीते । यथान्तर्वेद्यर्धं स्यात् बहिर्वेद्यर्धं परिश्रित्य, दक्षिणद्वारं करोति आग्नीध्रागारस्य पार्श्वमानी पञ्चारत्निरीतेन मार्जालीयस्यापि उदीचीं द्वारं करोति[2] । आग्नीध्रागारे तिष्ठन् अग्निं, यवमतीः प्रोक्षणीर्बर्हिर्हस्ताज्यस्थालीं स्रुवां, चर्मफलकं षट् शंकून् ग्रावाणं हिरण्यमुदपात्रं चादाय, "रक्षियजमानं" प्रैषं दत्वा, पूर्वया द्वारा हविर्धानं प्रपाद्य, दक्षिणस्य हविर्धानस्य नीडे चर्मपुरोऽक्षमितराणि सादयित्वा, "देवस्यत्वेति" मन्त्रेण अभ्रिमादाय, "अभ्रिरसिनारिरसि" इति मन्त्रेण अभिमन्त्र्य, दक्षिणपूर्वादीन् उपरवान् "परिलिखितं" मन्त्रेण त्रिः सकृद् वा परिलिख्य, "रक्षोहणो०" इति मन्त्रेण क्रमेण खनति । "इद-महंतं वलगं०" इति मन्त्रेण दक्षिणपूर्वात्पांसूनादत्ते । ततः अध्वर्युः यज-मानस्याधस्पदं पात्रे गृहीतान् पांसून् उद्वपति "अववाढोवलगः०" इति । एवमेव

---

(१) अथ महावेद्याउत्तरादंसोयाच्छं कौवैयन्ते नाष्टादशप्रतीचः प्रक्रमान् प्रक्रामति० - - - - - - - - - - - - - - - - - - - -
उदीचीं द्वारं कुर्वन्ति, बौ० श्रौ० ६।२७ ।

(२) अथाग्नेतिष्ठन् यावत्यग्निं यवमतीः - - - - - - - - - - - - - -
अत्र यं यजमानो द्वेष्टि तं मनसाध्यायति । अथापउपस्पृश्याथैनानव-मृशतः । बौ० श्रौ० ६।२८ ।
मन्त्रभागः, तै० सं० १।३।२ ।

मन्त्रेण चतुर्वारं पांसुग्रहणं उत्क्षेपणं च कुर्यात् । तान् पांसून् अंसचेण्युंच्य,
यजमानः अत्र पाप्मानं मनसा ध्यायनिति । ततः अपोपस्पर्शनम् ।

अध्वर्युयजमानयोरक्संवाद: -

पूर्वयोर्दक्षिणमेवाध्वर्युरभिमृशतिउत्तरं यजमानाभिमृश्यपृच्छति -
अध्वर्यो किमत्र ? भद्रमित्यध्वर्युः पुनः यजमानः "तन्नौ सह" इति वदति ।
पुनरध्वर्युर्यजमानं पृच्छति - किमत्र ? भद्रमित्यजमानः । एवमेव सर्वस्यां
दिशि अभिमर्शनं कुर्यात् । अभिमर्शनप्रश्नप्रतिवचनान्ते अध्वर्युः एतान् पांसून्
"विराडसिसपत्नहेति मन्त्रेण अभिमृशति । "रक्षोहणोवलगहन०" इति
मन्त्रेणाद्भिः प्रोक्षति पुनः "रक्षोहणो०" इति मन्त्रेण अपोनयति ।
"यवोसि" इति मन्त्रेण तेषुयवान् प्रस्कन्दयति । "रक्षोहणो०" इति
बर्हिषाऽवस्तृणाति । तत्र हिरण्यमन्वार्य "रक्षोहणेति" मन्त्रेण स्रुवा-
हुत्या प्रतिदिशं क्रमेण अभिजुहोति सर्वत्र मन्त्रावृत्तिः[१] ।

अधिषवणफलकाभिधानम् -

प्रत्येकं बाह्वादेशविस्तारे प्रादेशत्रयदीर्घेमिलित्वेर समवतुरस्रे अधि-

(१) पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशत्युत्तरं अथ यजमानः पृच्छत्यध्वर्यो
किमत्रेति भद्रमिति० - - - - - - - - - - - - - - - -
सवनिवानुपूर्वम् । बौ० श्रौ० ६।२८, "रक्षो० मन्त्रविभागः जुह-
पूर्वकमस्तीति ज्ञेयम् । तै० सं० १।३।२ ।

षवणफलके संसृष्टे उपदधाति । द्वाभ्यां पुरस्तात् द्वाभ्यां पश्चात् द्वाभ्यां पार्श्वयोः शंकुभिः परिणिहत्य, प्रदक्षिणं पुरीषेन पर्यूहति । बर्हिषा-परिस्तृणाति, तामभिमृशति यज्ञप्रतितिष्ठेति । ततः अधिषवणफलयोः अनडुहं चर्मास्तीर्य, तिरश्चमानि फलके ग्रावाणोदधाति "बृहन्नसिबृहद् ग्रावेति" नीडे चर्मोत्सादयति । ग्रावसुग्रावाणं, दक्षिणहविर्धानस्याग्रेस्तोत्रोपा-करणाय बर्हिर्मुष्टिं बध्वा, "एहि यजमान" इति प्रैषं ददाति । आग्नीध्रीये-स्फेनोद्धत्य, अवोक्ष्य, चात्वालपुरीषं सिकताश्चन्युप्य, परिमण्डलं खरं करोति "विभूरसि प्रवाहणेति" मन्त्रेण[1] ।

सदोमण्डपेहोत्रादीनां धिष्ण्याकरणम् -

अध्वर्युः अन्तः सदसं प्राग् पदद्वयमवशेष्य, पृष्ठ्यायां होतृधिष्ण्या-करणं "वह्निरसि हव्यवाहन०" इति मन्त्रेण ।

ततः अग्रेण आहवनीयं पर्याहृत्य, होतृधिष्ण्याद्दक्षिणतः अरत्नौ मैत्रावरुणस्य धिष्ण्या "श्वात्रोसि" इति मन्त्रेण । होतृधिष्ण्यस्योत्तरः

---

(१) अथास्यैते फलके दीर्घसोमे० - - - - - - - - - - - - - - -
तं परिमण्डलं धिष्ण्यं करोति ।

- बौ० श्रौ० ६।२८-२९ ।

मन्त्रभागः तै० सं० १।३।३ । हनुवा एते यज्ञस्य यदधिषवणे न संतृणत्ति० अथोखलु दीर्घसोमेसंतृद्ये० हविर्धानेचर्मन्नधि ग्रावभिरभि-षुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसिभक्षयन्ति० ।

- तै० सं० ६।२।११ ।

अरत्नौ 'कृशोसिधिष्ण्वेदा०' इति मन्त्रेण ब्राह्मणाच्छंसिनोधिष्ण्या, तदुत्तरत: 'उशिगसिकवी०' इति मन्त्रेण पोतृधिष्ण्या, तदुत्तरत: 'अंघारिरसीति' मन्त्रेण नेष्टृधिष्ण्या, तदुत्तरत: 'अवस्युरसि' इति मन्त्रेण अच्छावाकस्य धिष्ण्याकरणं, 'शुंध्यूरसि' इति मन्त्रेण मार्जालीयधिष्ण्या मैत्रावरुणधिष्ण्यवत्करोति[1] ।

अध्वर्युकर्तृक - कर्मसंभरणार्थं ऋत्विजोनिर्देश: -

विविधकर्म सम्पादनार्थं कर्मस्वरूपमुच्चार्य, अक्रमाणि प्रैषरूपेण अध्वर्यु: आदेशं ददाति । यथा - स्तृणीतबर्हि: प्रव्रतं यच्छत समपित्रतानुद्रवयध्वमास्तावं बहुलं स्तृणीत सदो हविर्धाने बहुले स्तृणीतोन्नेतर्ग्रावणो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय पत्नीशाले संसादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थात: ध्रुव: सम्मृड्याज्यैनो देहि पृषदाज्याय दध्याहर इति । यथा संप्रैषं ते कुर्वन्ति[2] ।

अध्वर्यु: -

अध्वर्यु: 'देवबर्हिरूर्णाम्रदसं०' इति मन्त्रेण दक्षिण दिग् भागे

---

(१) अथैनं सिकताभिराप्राशितं करोत्यथान्त: सदसं धिष्ण्यान्निवपति होतु: प्रथमं वन्हिरसिहव्यवाहन इति० - - -शुन्ध्यूरसिमार्जालीय इति सर्वेष्वेव राद्रमनुवर्तयति । बौ० श्रौ० ६।२६, वन्हिरसिहव्यवाहन० इत्यादय: मन्त्रविभाग: तै० सं० १।३।३, चात्वालाद्धिष्णियानुवपति० न्यन्येधिष्णियाउप्यन्ते० ६।३।१ ।

(२) स्तृणीतबर्हि: प्रव्रतं यच्छत० बौ० श्रौ० ६।३० ।

वेद्यन्ते बर्हिर्मुष्टिं स्तृणाति । तां पुरस्तात् प्रत्यञ्चं स्तृणाति । तूष्णीं
(१)
वर्धेस्तनवृतं प्रयच्छति ।

उन्नेता -
---------

उन्नेता ग्रावादीन् प्रक्षाल्य, द्रोणकलशे निधाय प्राग्वंशे

सादयति । अध्वर्युः शाखापवित्रं कुम्भीं च शूलं, वपाश्रपण्यौ, रशने, शाला-

मुखीयस्य पश्चात् सादयित्वा, प्रोक्ष्य, आस्ते ।

आग्नीध्रः -
---------

पाणीसम्मृज्य, अग्नीन् ज्वलयित्वा, परिस्तीर्य आस्ते ।

प्रतिप्रस्थाता -
---------

पाणीसम्मृज्य, ब्रह्माणं दक्षिणत उपवेश्य, शालामुखीय प्रभृति

उत्तरवेदिपर्यन्तं पृष्ठ्या दर्भैः आस्तीर्य, पवित्रे कृत्वा, यजमानवाचं यच्छ इति

प्रैष्य, अग्निहोत्रहवणीमादाय, शालामुखीये प्रतितप्य, प्रोक्षणीः संस्कृत्य,

पात्राणि प्रोक्ष्य, आज्यस्थाल्यां मन्त्रेण आज्यं निरूप्य तूष्णीं दधि च

निरूप्य, अधिश्रित्य, उभयं पर्यग्नि करोति ।

---------

(१) अथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिं स्तृणाति देवबर्हिरुणाम्रदसं०

- बौ० श्रौ० ६।३० ।

अध्वर्युः -

---

ततः अध्वर्युः "कर्मणे वां देवेभ्यः शकेयं" इति मन्त्र पठित्वा "देवस्यत्वे" ति स्फ्यमादाय, "इन्द्रस्य बाहुरसि०" इति मन्त्रेण वरदेशे स्फ्यं स्तब्ध्वा, पुनः सम्प्रेषति ।

अत्र कर्मस्मारिकायाशिक्षमाख्या -

---

शालामुखीयमग्रेण स्फ्यहवन्यौ जुहूद्वयं ।
उपभृद्वितयं चैव ध्रुवं च स्वधिति ध्रुवे ॥
प्राशित्रेडाज्यधानीश्च वेदं वेदाग्रमेव च ।
अंक्त्रौ षध पात्राणि पश्चादाज्य विलापनम्[1] ॥

प्रैषः -

---

प्रोक्षणीरासादयेध्माबर्हिरुपसादय ध्रुवं व स्वधितिं च ध्रुचश्च सम्मृड्ढि तूष्णीं पृषदाज्यग्रहणी माज्येन च दध्नाचो देहि । ततः - प्रतिप्रस्थातादयः अध्वर्यु सहकारिणः प्रैषोक्तानि कर्माणि सम्पादयन्ति ।

अत्र एकमार्गदर्शिकायाशिक्षमाख्या[2] -

---

---

(१) ना० शे० बौ० प्र०, पृ० सं० ५० ।
(२) ना० शे० बौ० प्र०, पृ० सं० ५१ ।

राजानं ब्रह्मणे दद्यात् तं ब्रह्मादाय सोमकम् ।
शालामुखीयमग्रेण परीत्योत्तरतः स्थितः ॥

अध्वर्युः -

ततः शालामुखीये गार्हपत्यं "उदग्नेतिष्ठेति" मन्त्रेण सङ्कल्पयति । शालामुखीये प्रणयनीयमिध्ममादाय, चात्वालात् समन्वारब्धे सति[1] ।

अन्वारब्धस्वरूप प्रदर्शनार्थं याज्ञिकसमाख्या -

अध्वर्युं यजमानस्तं पत्निपत्नीं च पुत्रकाः ।
पौत्राश्चान्वारभेरंस्ते ज्येष्ठानुक्रमणे न तु[2] ॥

अध्वर्युः पुराणगार्हपत्ये आज्यं विलाप्योत्पूय, प्रचरण्या चतुर्गृहीतं गृहीत्वा, "त्वं सोमतनूकृद्भ्यः" इति मन्त्रेण शालामुखीये जुहोति । पुनः स्रुवेण आज्यं गृहीत्वा "जुषाणो अप्तुराज्यस्ये" ति जुहोति । यथालिङ्गं त्यागः । पुनः प्रचरण्यां चतुर्गृहीतं गृहीत्वा, अग्नीषोमप्रणयनार्थं सम्प्रैषमाह[3] -

(१) अथाग्न्यादधातीध्मं प्रणयनीयमुपयमनीः कल्पयन्ति चात्वालात् समन्वारब्धे०, बौ० श्रौ० ६।३०।

(२) ना० शे० बौ० प्र०, पृ० सं० ५१ ।

(३) गार्हपत्य आज्यं विलाप्योत्पूय० - - - - - - - चतुर्गृहीतं गृहीत्वा सम्प्रैषमाह, बौ० श्रौ० ६।३० । त्वं सोम० । जुषाणो० । तै० सं० १।३।४ । द्वाभ्यां गार्हपत्ये जुहोति, तै०सं० ६।३।२ ।

अत्र कर्मस्मारिकायाज्ञिकसमाख्या -

हरेदग्रेऽग्निमन्वं च ब्रह्मदायमृ सोमकम् ।
अन्वगाज्यानि चान्येन ग्राव्णो वायव्यकानि च ।।[1]

अध्वर्युं प्रैष: -
अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि इति[2] ।

होता[3]

तत: होता शालामुखीयस्य पश्चात् निरसनोपवेशने कृत्वा, हिं ३, भूर्भुवस्वरोम् सावीर्हि देव: प्रथमाय पित्र इति आश्वलायनसूत्रोक्त दिशा

---

(१) ना० शि० बौ० प्र०, पृ० सं० ५१ ।

(२) बौ० श्रौ० ६।३० ।

(३) अग्नीषोमौ प्रणेष्यत्सु तीर्थेन० प्रेषितोऽनुब्रूयात् सावीर्हिदेव: अनुव्रजन्नुत्तरा: । प्रैतु० = प्रणवेनोपरमेत् आ० श्रौ० ४।१०।१-२ प्रैतु ब्रह्मण, ऋ० सं० १।४०।३ । होता देवो० ऋ० सं० ३।२७।७-६ । उपत्वाग्ने० ऋ० सं० १।१।७-६ । उपप्रियं ऋ० सं० ६।६७।२६ अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि इत्याहाध्वर्युः । सावीर्हिदेव प्रथमाय पित्रे इति सावित्रीमन्वाह० प्रैतुब्रह्मणस्पतिरिति ब्राह्मणस्पत्यान्वाह होता देवो अमर्त्य इति तृच माग्नेयं गायत्र मन्वाह सोमे राजनिप्रणीयमाने,।
- ऐ० ब्रा० १।३० ।

अग्नीषोमप्रणयनमन्त्रपाठं करोति । होतुर्मन्त्रारब्धप्रथमायां त्रिरुक्तायाम्[1]-भिष्प्रमुच्य, पूर्वयाद्वारेण 'अयं नो अग्निर्वरिवः कृणोति०' इति मन्त्र पाठेन सह निष्क्रामति । उत्तरेण सदः परीत्य, आग्नीध्रे इध्मं निधाय, परिस्तीर्य, परिषिच्य हस्ते चतुर्गृहीतेनाज्येन 'अग्नेनयसुपथा राये०' इति मन्त्रेण तत्र जुहोति । ततः ग्राव्णो[2] वायव्यं समुपसाद्य, उत्तरेण आग्नीध्रागारं राजाचाज्यैश्च सह गत्वा, 'उरु विष्णो०' इति मन्त्रेण आहवनीये स्रुवाहुतिं जुहोति । ततो ब्रह्मा सोमं राजानमन्यहस्ते प्रदाय, उपवेशनमन्त्रं पठित्वा उपविशेत् । एवमेव यजमानश्च । अध्वर्युः प्रोक्षणीरुन्मद्यन्नित्यादि स्वधिति सादनान्तं निरूढपशुबन्धप्रकृतिवत् करोति । ततः प्रोक्षणम्[3]-

---

(१) त्रिरुक्तायामुपच्छन्ते । होतुर्वंशयन्ति । अथ वै भवति० पूर्वयाद्वारोपनिष्क्रामन्ति अयं नो० उत्तरेण सदः परीत्याग्नीध्रागारे अग्निं निधाय नयवत्यर्चाग्नीध्रे जुहोति अग्नेनय०, बौ० श्रौ० ६।३० । अयं नो अग्निर्वरिवः, तै० सं० १।३।४ ।

(२) अत्र वैतद् ग्रावाणोवायव्यं समुपसाद्योपतियन्ति राजा चाज्यैश्च । आहवनीये स्रुवाहुतिं जुहोति उरु विष्णो० बौ० श्रौ० ६।३०, उरु विष्णो तै० सं० १।३।४ ।

(३) अथ प्रोक्षणीभिरुपोत्तिष्ठति । इध्मं प्रोक्षति । वेदिं प्रोक्षति । कृष्णाजिनमास्तृणाति० - - - - - - - - अथ यजमानमवान्तरदीक्षां विसर्जयति अग्ने व्रतपते०, बौ० श्रौ० ६।३१ । सोमोक्षिणाति० - - - - - - - - - - - - प्रतिनोव्रतानि । तै० सं० १।३।४ । द्वाभ्यां गार्हपत्ये जुहोति० आग्नीध्रे जुहोति० आहवनीये जुहोति०

----------अग्रिमपृष्ठेऽपि

स्रुक्प्रोक्षणं, महावेदिप्रोक्षणं, महावेदिश्रोण्यां प्रोक्षणीर्निनयति । ततः ब्रह्मायथागतमागत्य राजानमादत्ते । यजमानः यथेतमेत्य, अपऊपस्पृश्य ब्रह्मणो-राजानमादाय, "सोमोजिगातिगातुवित्॰" इति मन्त्रेण हविर्धानं प्रपादयति । अध्वर्युः अपस्पृष्ट्वा, दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनं "आदित्याः सदोसि" इति मन्त्रेणास्तृणाति । यजमानः तस्मिन् कृष्णाजिने "आदित्याः सदआसीद" इति मन्त्रेण राजानं देवताभ्यः प्रयच्छति ।

उपस्थानम् -

---

"एजवोदेवः सवितः" इत्युपतिष्ठते । तदुपरि - प्राञ्चमञ्जलिं करोति "नमो देवेभ्य इति । दक्षिणतोन्यञ्चमञ्जलिं "स्वधा पितृभ्यः" इति । अपःस्पृष्ट्वा यजमानः "इदमहं निर्वरुणस्य पाशादिति मन्त्रेण निष्क्रामति । "सुवरभिविख्येषं॰" इत्याहवनीयं उपतिष्ठते ।

---

पूर्वपृष्ठस्याग्रे---------

आसोमं ददत॰ सौम्यचाप्रपादयति॰ । तै॰ सं॰ ६।३०२ उत्तरेणा-ग्नीध्रीयमतिव्रज्यदक्षिणस्य सोमोजिगाति॰ - - - - - - - - - - - - - - - - - - - - - आहवनीयस्योपविशेत् । आ॰श्रौ॰ ४।१०।४-६ । अग्नेजुषस्व॰ ऋ॰ सं॰ १।१४४।७, सोमोजिगाति॰ ऋ॰ सं॰ ३।६२।१३-१५ । तमस्यराजा॰ ऋ॰ सं॰ १।१५६।४ । अन्तश्च॰, ऋ॰ सं॰ ८।४८।२ । श्येनोन॰ ६।७१।६ । अस्तभ्नाद्या॰ ८।४२।१-२ ।

अध्वर्युः -

अथान्वारब्धीयां विसृज्य इत्युक्तः सन् 'अग्नेव्रतपते त्वं व्रतानां० इति मन्त्रेण अग्निमुपतिष्ठेद्यजमानः । अग्निषोमप्रणयनविधिरत्रसमाप्तः ।

सुब्रह्मण्याह्वानार्थं प्रैषः -

अध्वर्युः संशास्ति - प्रस्तोत्र्येमेतां प्रमुष्टीयास्य मैत्रावरुणायदण्डं प्रयच्छ यजमान इति स्वावसतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यामाह्वयतु इति । सुब्रह्मण्यनामा ऋत्विजः हस्ते शूर्पं गृहीत्वा सुब्रह्मण्यसामपठति[1] ।

अग्निषोमीयेष्टिः - अध्वर्युः संशास्ति[2] -

प्रस्तोत्र्येमेतां प्रमुष्टीयास्य मैत्रावरुणाय दण्डं प्रयच्छ यजमान इति स्वावसतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतु इति । पश्चात् सुब्रह्मण्यनामकऋत्विजः हस्ते शूर्पं गृहीत्वा

(१) अध्वर्युः संशास्ति प्रस्तोत्र्येमेतां०, बौ० श्रौ० ६।३१ ।
(२) तत्र प्रैषकरत एवाग्नीषोमावेवमित्यैतरेयिणः, आ०श्रौ० ३।६।३ । सौम्याश्च निर्मिताश्च । निर्मित ऐन्द्राग्नः,
- आ० श्रौ० ३,८।३-४ ।

"सुब्रह्मण्यसामं पठति ।

अग्नीषोमीयेष्टिः -

---

अथेष्टिः पूर्वोक्त पशुतन्त्रेण आज्यैकान्तं कुर्यात् । अत्र पशुद्वये - प्रथमः - अग्नीषोमौ, द्वितीयः - इन्द्राग्नी देवताकः । एकदेवताक इष्टौ द्विदैवत्यः अग्नीषोमावेव । अध्वर्युः यूपाहुत्यादि यूपावटान्तं कर्म कुर्यात्[1] । यूपसंस्कारसमाप्तौ पुनरग्निमन्थनम् । अत्र सप्तदशसामिधेन्यः । देवताऽऽह्वाने प्रथमौ आज्यभागौ देवौ ततः प्रधानदेवता अग्नीषोमौ वनस्पतिश्च । पशुद्वितये- अग्नीषोमानन्तरं इन्द्राग्नीदेवता । एकादशप्रयाजाः[2] । अद्रिगुप्रैषः[3] । पशुसंज्ञपनम् । वपाश्रपणं वपायागश्चेति । अग्नीषोमीयवपायाज्या - "युवमेतानि दिवि रोचनानि०" इति याज्या । इन्द्राग्नीये तु - "शुचिं नु स्तोमं नवं०" इति याज्या ।

पशुपुरोडाशयागः -

---

अत्र यागे अग्नीषोमीयपशुपुरोडाशयाज्या - "आन्यं दिवो मातरिश्वा जभार" इति इन्द्राग्नीये तु - "गोभिर्विप्रः प्रमतिमिच्छमानः" इति

---

(१) अथ यूपाहुतिं हुत्वा यूपं यजुषा करोति०, तदेतद्यूपावटान्तम् ।
- बौ० श्रौ० ४।१९-२२ ।

(२) आ० श्रौ० ३।२।९ । (३) आ० श्रौ० ३।३।१ ।

याज्या । पुरोडाशस्विष्टकृति "स्वदस्व हव्या समिषो दिदीहि" इति याज्या । ततः मनोतालिङ्गकसूक्तपाठः[1] ।

अङ्गहवियागः -

---

अङ्गहवियागेष्वग्नीषोमयाज्या - "अग्नीषोमा हविषः प्रस्थितस्य०" इति । इन्द्राग्न्योस्तु - "प्रचर्षणिभ्यः पृतनाहवेषु" इति याज्या । वनस्पतिः - "वनस्पते रशनया नियूय०" इति याज्या । अङ्गहवियागस्य स्विष्टकृति - "अग्ने यदद्य विशो अध्वरस्य०" इति याज्या । एकादशप्रयाजानुयाजाश्च चातुर्मास्यस्य वैश्वदेवपर्वणि उक्ताः । यथादैवतं सूक्तवाकः । अत्र इष्ट्यां स्वरुहोमवर्ज्जं पत्नीसंयाज इडान्तं पशुवत् "उलूखलमुसल०" इति मन्त्रेण पिष्टलेपान् हुत्वा, संतिष्ठते अग्नीषोमीयः ।

वसतीवरी-संज्ञानां कलशानामासादनम् -

---

अग्नीषोमीयेष्ट्यन्ते हृदयशूलं प्रक्षाल्य, यथास्थानं - स्थापयित्वा,

---

(१) "तस्य वपां पुरोडाशमनुनिर्वपन्ति० आन्यं दिवो मातरिश्वा जभारेति पुरोडाशस्य यजति० स्वदस्व हव्या समिषो दिदीहीति पुरोडाशस्विष्टकृतो यजति० इडामुपह्वयते० मनोतायै हविषोऽवदीयमानस्यानुब्रूहि इत्याहाध्वर्युः । त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह० अग्नीषोमा हविषः प्रस्थितस्येति हविषो यजति० वनस्पतिं यजति० स्विष्टकृतं यजति० इडामुपह्वयते० । ऐ० ब्रा० २।८-१० ।

सर्वैर्ऋत्विजः बहिर्वेदि ययुः । वसतीवरीकलशमादाय, अनेन गार्हपत्यं नीत्वा, दक्षिणया द्वारा निष्क्रम्य, सव्येंऽसे निधाय, दक्षिणेनमार्जालीयं सदश्च पर्यावृत्योदङ्मुखेन दक्षिणातो यूपेन संस्पृष्ट्वा 'इन्द्राग्नियोर्भागधेयीस्थ' इति मन्त्रेण सादयत्यध्वर्युः । पुनः द्वितीयं वसतीवरीकलशमादाय, दक्षिणेऽंसे निधाय, यथेतमेत्य शालामुखीयस्य पश्चात् 'मित्रावरुणयोर्भागधेयीस्थ' इति मन्त्रेण सादयति । पुनः तृतीयं वसतीवरीकलशं दक्षिणेऽंसे निधाय, पूर्वया द्वारा निष्क्रम्य, यूपेनोत्तरतः संस्पृष्टाः 'विश्वेषां देवानां भागधेयीस्थ' इति मन्त्रेण सादयति । पुनः चतुर्थं वसतीवरीकलशमादाय सव्येंऽसे निधाय यथेतमेत्य 'यज्ञे जागृत' इति मन्त्रेण आग्नीध्रीयं संस्पृष्टाः सादयति । इति वसतीवरीकलशानामासादनविधिः[1] ।

प्रातःसवनम्

अध्वर्युमन्त्रेण: -

या वश्राड्गुक् तस्यै दधिघर्माय दधिकुरुत या यजमानस्य तस्या

---

(१) अथ वसतीवरीः परिहरिष्यन्नाहवनीयमभ्यासमत० यजमानायतने यजमान उपविशति । अनेन गार्हपत्ये पत्नी अंसेनावादाय दक्षिणया० यूपेन संस्पृष्टाः सादयति इन्द्रा० अंसेना० - - - - वेषां संस्पृष्टाः सादयति मित्रा० यूपेन संस्पृष्टाः सादयति विश्वेषां० अग्नीध्रीयं धिष्ण्यायं संस्पृष्टाः सादयति यज्ञे जागृत० बौ० श्रौ० ६,३३ इन्द्राग्नियोर्भागधेयीस्थेत्यादिमन्त्रविभागः, तै० सं० १,३,१२ त्रिः सादयति० यद् गार्हपत्य - - - - - - - - उभयोरुपसादयति० सर्वतः परिहरति० आग्नीध्र उपवासयति० नद्धैता दीक्षयन्त्या तृतीय सवनात् परिशेरे०, तै० सं० ६।४,२ ।

आमिक्षार्थे वा पत्न्यै तस्या आशिरे पयश्च सर्वं च कुरुत - शृतातङ्क्या-मादित्यग्रहाय दधि कुरुत पुरोडाशीयानि पिष्टानि कुरुत धानाकम्भरि यौवनीः कुरुत पुरोडाशभृणां स्त्रोनुदवनान्युत एकपां स्नुवमानेकादश परमांस्तक्री रुणारश्चक्री वपाश्रपण्यौध्यमिध्माबर्हिरौदुम्बरान् महापरिधीन् कुरुत सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतु" इति[१] ।

अथ सायं दोहः -

---

ततः अन्यो वा सहकारि क्रमेण शाखानां पर्णानि निधित्वा क्रमेण शाखामुखीयं निधाय, मूलतः परिवास्य उपवेशार्थं शाखामूलीयस्य पश्चान्निधाय, प्रादेशमात्रे ग्रे त्रिधोदर्भनाडीः प्रवेश्य त्रिवृत् शाखापवित्रं करोति । प्रथमं पवित्रं तूष्णीं, द्वितीयं शाखा पवित्रं "त्रिवृत् पलाशे०" इति मन्त्रेण, तृतीयं तूष्णी-मिति । ततः अन्यानि त्रीणि पवित्राणि कुर्यात् । तेषु मैत्रावरुण्यामिक्षार्थ-मेकां उत्तरेण गार्हपत्यं तृणेषु षट् दोहनानि, षट्शाखापवित्राणि, अष्टौ स्थालीश्च सादयित्वा "शुन्धध्वं०" मिति त्रिः प्रोक्षति । दधिग्रहार्थमेकस्यां कुम्भ्यां तूष्णीं दोहयित्वा, सवनीया आमिक्षार्थे सादयति । ततः परं "मातरिश्वनीकौसि०" इत्यतः "विष्णो हव्यं रक्षस्व" इत्यन्तो दोहनविधिः । एतत् सर्वं औपवसथ्याह शेषं कर्मेति ।

---

(१) बौ० श्रौ० ६,३४ ।

सवनदेवता: -

प्रात: सवने - इन्द्रो वसुमान् ।
माध्यन्दिनसवने - इन्द्रोरुद्रवान् ।८
तृतीय सवने - इन्द्र: आदित्यवान् ऋभुमान्, विभुमान्,

वाजवान्, बृहस्पतिवान्, विश्वदेव्यावानिति प्रउगे पूतभृतं, तयो: समान उदन्चनं, आग्नीध्रे एकं सोदन्चनं, मार्जालीये एकं एवं प्रकारेण कलशान् संसादयति । तत: आग्नीध्रे यजमान: संविशति । हविर्धाने राजानं गोपायन्ति[१] । एवं विधं कर्म सम्पाद्य, सुत्यां प्रतीक्षेत ।

अथसवनीयग्रह: -

सवनीयेऽहनि कारिचत् कर्मधारिका याज्ञिकमात्या:[२] -

त्रिभागे पश्चिमे रात्रे तीर्थेन प्रविशंत्यमी ।
प्रक्षाल्य हस्तपादांस्त आग्नीध्रमध्यगंता: ।।
अध्वर्यु: पशुशाखाया: पवित्रं कुरुते त्रिवृत् ।
त्रिवृत्पलाशमन्त्रेण पशुद्रव्यं करोतु मे ।।
पाणौसम्मृज्य चाग्नीध्रे प्रैषैदुन्नेतरित्यथ ।
ग्राव्णो वायव्याधुन्नेता चमसान् द्रोण-मेव च ।+
क्षालयित्वा दक्षेन्यस्य पुरोडाशं सादयेत्तथ ।।

---

(१) बौ० श्रौ० ६,३४ । (२) ना० ह० बौ० प्र०, पृ० सं० ५५-५६, बौ० श्रौ० ७, १, आ० श्रौ० ४,१३,१ ।

अग्नीत्परिस्तीर्य चाग्नीन् स्फ्यस्रवन्यौ जुहूं ।
उपभृद्वितयं चैव ध्रुवं च स्वधिति स्रुवे ॥

प्राशित्र ठाज्य स्थालीश्च वेदं वेदाग्रमेव च ।
शातानुदीयकसेण संधाताज्य विलापनम् ॥

प्रस्थाता प्रक्षृष्टयेमौ वाचं चैनाय निष्टपेत् ।
वैपः प्रोक्ष्य निर्वाज्यं दक्षिणाग्नि च दध्यु ॥

अग्नीदिध्मादि संवाप प्रस्तुष्टं चाच निष्टपेत् ।
ध्रुवशाली मुञ्चौ च्छं स्थालीं जुहवादि पूर्ववत् ॥+

तप्त्वा सम्मृज्य चाग्रेण सादयित्वोत्करे ततः ।
जुह्वासानं ततः पत्न्या गार्हपत्यावेक्षणं ॥

स एवाज्यमपोत्थं तमोदित्वाध्वर्युराज्यकम् ।
आज्यं प्रोक्षणीश्चोत्पूयाग्नीध्रीयमपि सम्मृजेत् ॥

अध्वर्युः उन्नेत्र, आग्नीध्र, प्रतिप्रस्थात्र च सम्प्रेष्यति ।

प्रैषमन्त्रः[१] -

-----------

उन्नेतर्ग्रावाणौ वायव्यानि द्रोणकलशं दशापवित्रं समवधाय दक्षिणस्य

-----------------------------------

(१) अथाग्नीत्तिष्ठन् सम्प्रैषमाह उन्नेतर्ग्रावाणौ० -------
उपोत्तर यथा सम्प्रैषं वै कुर्वन्ति, बौ० श्रौ० ७,१, अथाध्वर्युराग्ने-
ध्रमग्नीद्रग्नभिम्बृजत्याग्निर्मूर्धा दिव इति वैष्णव्याहुतिमर्थान्० ---
अथाग्नि तिष्ठन् सम्प्रैषमाह, बौ० श्रौ० ७,१ ।

------अग्रिमपृष्ठेऽपि

हविर्धानस्य पुरोडाशं संसादयाग्नीदाज्यमधिश्रित्य प्रतिप्रस्थातः ध्रुवः सम्मृज्यैनी देहिपृषदाज्याय दध्याहर। ततः अध्वर्युः - "देवस्य त्वे"ति स्फ्यमादाय, "इन्द्रस्य बाहुरिति हरे स्तब्ध्वा, अग्नीधोऽभीयकत्रेव, स्फ्यमनुहरति। पश्चात् "अग्निपूर्वा०" "विष्णोस्त्वं नो अन्तमः०" इति मन्त्रद्वयेन हविर्धान-मभिमृशति। "अयमग्निः सहस्रिणो०" इति मन्त्रेण ध्रुवः सम्मृशति। "वायोरक्तं हरीणां०" इति मन्त्रेण वायव्यानि सम्मृशति। "इन्द्रं विश्वा अवीवृधन्निति" सदोऽभिमृशति। ततः उत्तरवेदिकस्य पश्चात् प्रभृत्य आज्यानि गृहीत्वा, प्रोक्षणीरुन्नयनित्यादिकं कर्म करोति। ततः एकविंशं बर्हिः दारौदरार्थं स्तीर्त्वा, प्रस्तरपाणिः प्राङ्०अभिसृप्य औदुम्बरान् महापरिधीन् "गंधर्वोऽसि०" इत्यादि मन्त्रैः परिदधाति। अवाङभ्युपस्पृश्येति। "इष्यमानं" इति यजमानमाह्वयति। अध्वर्युः पूर्वद्वारा हविर्धानं प्रपाद्य, वैसर्जन-

---

पूर्वपृष्ठस्याग्रे-----------

(१) आग्नेय्याग्नीध्रमभिमृशेद् वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रियासदः०। तै० सं० ३,१,६-७, ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यः सोममुपावहरन् (सर्वाभ्यो देवताभ्य उपावहरेत्० पुरावाचः प्रवदितोः - प्रातरनुवाकमुपाकरोति० ओ३ऽमभिव्याहरति०।

- तै० सं० ६, ४, ३ ।

हृदे त्वा मनसे त्वा० ------ प्रजास्त्वामुपावेशन्तु, तै० सं० १,३,१३, यः सुवर्गकामः स्यात्। स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात्०। तै० ब्रा० २,२,३,६ ।

फलक्यो: प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तस्मिन् सम्मुखान् ग्राव्णः कृत्वा अन्तरेण "हृदेत्वा मनसेत्वा" इति मन्त्रेण राजानमुपावहरति । ग्रावसु राजानं निधाय, उद्गातृभ्यः प्राहुः तस्मिंस्तरश्चेष्टन्ति यथेषितुः इत्युक्त्वा, अध्वर्युः अपउपस्पृशते । अध्वर्युः पुनः "एहि यजमान" इत्युक्त्वा, आग्नीध्रीये प्रचरण्या चतुर्गृहीतमाज्यं गृहीत्वा, पञ्चहोतारं मनसा अनुद्रुत्य, अन्वारब्धे यजमाने "वाचस्पत्यान्वायन्नातु०" इति मन्त्रेण जुहोति । ततः आहवनीये धृताक्तं शकलमाधाय, होत्रे, ब्रह्मणे, आग्नीध्रे, प्रतिप्रस्थात्रे च स्वं स्वं कर्मकरणार्थं प्रेष्यति । यथा - प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि । ब्रह्मन् वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वय । अग्नीत् सवनीयान्निर्वप[1] प्रतिप्रस्थाता धेर पात्राणि युङ्०धि । अत्र कर्मदर्शिका कारिका[2] -

एकादश कपालानि द्वे कपाले च भर्जने ।
दोहस्थालीं च पात्राणि धानादि क्रियस्य च ॥

सम्पद्यपीदि संभाय प्राशित्रं दारुपात्रिकाम् ।
मेक्षणादिकं चापि मदन्तीं च पवित्रके ॥

ब्रह्मा - पितापुत्रीयायां सुब्रह्मण्यायामाहूतायां वाचं विसृजते[3] । होतार[4] - प्रातरनुवाकार्थं आहुते यथासन्दरं प्रविश्य - "वागग्रेणा अग्र एतु०" इति मन्त्रान् पठित्वा,

---

(१) प्रातर्यावभ्यो०- - - - - न्निर्वप, बौ० श्रौ० ७,२ ।
(२) ना० दे० बौ०, प्र० प्र० सं० ५७ ।
(३) आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् । तस्यामाहूतायां ब्रह्मावाचं विसृजते । बौ० श्रौ० ७,२ ।
(४) आहवनीये वागग्रेणा अग्र एतु सरस्वत्यै वाचे स्वाहा । वाचं देवीं मनोनेत्रां विराजमुग्रां जनीमुत्कामिकमनाम् । तामादित्यानामभिनारुहेमानुमतां पथिभिः पारयन्तीं स्वाहेति द्वितीयाम्, प्राध्वरथिजानि ररटीमभिमृश्यत्युदन्तरिक्षं वीहीतिद्वार्येस्थूणे देवाद्वारौ मामासंताप्तं लोकं मे लोककृतौ कृणुतमिति प्रपन्नान्तरेणयुगधुरावुपविश्योपितः प्रातरनुवाकमनुब्रूयान्मन्द्रस्वरेण - बौ० श्रौ० अ० ४ सं० १३, पृ० २-६ ।

आग्नीध्रीये स्रुवेण आज्याहुतिं ददाति । ललाटे ब्रह्मा स्थूणं उपस्पृशति । निरसनोपवेशने कृत्वा, प्रणवान्तरेण कुशुरौ उपविशति । "आपो रेवतीः" इत्यतः "अभूदुषा रुशत्पशुः" इति परिधानीया मन्त्रान्तं स्वसूत्रोक्तान् मन्त्रान् पठेत् ।

प्रातरनुवाकमन्त्रतालिका[1] -

---

| | | | |
|---|---|---|---|
| (१) | आपोरेवतीः क्षयथा हि वस्व०[2] । | (२) | उपप्रयन्तो० १४[3] । |
| (३) | अबोध्यग्नि० ६[4] । | (४) | अग्निमीळे० ६[5] । |
| (५) | अग्निं दूतं वृणीमहे० १२[6] । | (६) | वसिष्वा हि २२[7] । |
| (७) | त्वमग्ने वसूं रिह० ६[8] । | (८) | अबोध्यग्निः समिधा जनानां० १२[9] । |

---

(१) आपो रेवतीः क्षयथा० - - - - - पाहु०वसु । आ०श्रौ० ४,१४,७ देवेभ्यः प्रातर्याविभ्यो होतरनुब्रूहि इत्याह ब्रह्मा:० - - - - - - - - - - - - - अभूदुषा रुशत्पशुरित्युत्तमया परिदधाति० । ऐ०ब्रा० २,१५-१८ मन्त्राचार्यादिभिः प्रयोगकारैः आश्वलायनश्रौतसूत्रमनुसृत्य- प्रातरनुवाकस्य वृत्तिः प्रदर्शिता सर्वार्त्वे प्रायः स्वीक्रियते ।

- आश्वलायनसूत्रप्रयोगदीपिका पृ० १०७ ।

(२) आपो० ऋ० सं० १०,३०,१२ । (३) उपप्रयन्तो० ऋ० सं० १,७४ ।

(४) अबोध्य० ऋ० सं० १,७५ । (५) अग्निमीळे० ऋ० सं० १,१ ।

(६) अग्निं दूतं० ऋ० सं० १,१२ । (७) वसिष्वा० ऋ० सं० १,२६ ।

(८) त्वमग्ने वसूं० ऋ० सं० १,४५,१-६ । (९) अबोध्यग्निः ऋ०सं० ५,१

(९) अगन्ममहा० ३[१] । (१०) एनावो अग्निं० १२[२] ।

(११) अग्नेवाजस्य० ३[३] । (१२) जनस्य गोपा०[४] ।

(१३) अग्निं तं मन्येयो० १०[५] । (१४) प्रतिष्यासूनरी० ७[६] ।

(१५) उषोभद्रेभिरागहि० ४[७] । (१६) इदं श्रेष्ठं ज्योतिषां० २०[८] ।

(१७) प्रत्युअदर्श्यायत्यु० ६[९] । (१८) उषस्तच्चित्र० ३[१०] ।

(१९) एताउत्याउषसः० ४[११] । (२०) महेनोअद्य० १०[१२] ।

(२१) एषोउषाअपूर्व्या० १५[१३] । (२२) यदद्यस्थपरावति० १०[१४] ।

(२३) आभात्यग्निरुषसा० ५[१५] । (२४) अतारिष्मतमस० ५[१६] ।

---

(१) अगन्ममहा० ऋ० सं० ७,१२ । (२) एना वो० ऋ० सं० ७,१६ ।

(३) अग्नेवाजस्य० ऋ०सं० १,७९,४-६ । (४) जनस्य गोपा० ऋ०सं० ५,११ ।

(५) अग्निं तं० ऋ० सं० ५,६ ।

(६) प्रतिष्यासूनरी० ऋ० सं० ४,५२ ।

(७) उषोभद्रे० ऋ० सं० १,४९ ।

(८) इदं श्रेष्ठं० १,११३ ।

(९) प्रत्यु० ऋ० सं० ७,८१ ।

(१०) उषस्तच्चित्र० ऋ० सं० १,९२,१३-१५ ।

(११) एता उत्या० ऋ० सं० १,९२,१-४ ।

(१२) महेनोअ०, ऋ० सं० ५,७९ ।

(१३) एषो उषा० ऋ० सं० १,४६ ।

(१४) यदद्य० ऋ० सं० ५,७३ ।

(१५) आभात्यग्निरुषसा० ऋ० सं० ५,७६ ।

(१६) अतारिष्म० ऋ० सं० ७,७३ ।

(२५) इमा उवांदिविष्टय० ६ ३ [1] । (२६) अश्विनावर्तिरस्मदा० ३ ४ [2] ।
(२७) अबोध्यग्निर्ज्मउदेति० ६ [3] । (२८) ईळे द्यावापृथिवी० २५ [4] ।
(२९) प्रतिप्रियतमं रथं० ६ [5] । (३०) अभूदुषा रुशत्पशु० [6] ।

सवनीयपुरोडाशनिर्वापः - आग्नीध्रः :-[7]

---

“इमौ प्राणा०” इति मन्त्रेण पवित्रे करोति । “वेषाय त्वा०” इत्यादि “धूरसीति” धूर्यमभिमृश्य, “मित्रस्येति मन्त्रेण प्रेक्ष्य, किंकाणि निरस्य, दशहोतारं ब्रूयात् । ततः “देवस्य त्वेति इन्द्रायजुष्टन्निर्वपामि पुरोडाशार्थं व्रीहीन्निरुप्य, धानार्थं यवान्निरुप्य, करंभार्थं पुनः यवान्निरुप्य, परिवापार्थं व्रीहीन्निरुप्य, “इदं देवाना” इत्यारभ्य, “अग्नेर्हव्यं रक्षस्व” इत्यन्तं निर्वापविधिं कुर्यात् । ततः व्रीहीन् डेयाकृत्या, एकमंशं, अवहन्यात् ।

---

(१) इमा उवांदिविष्टय, ऋ० सं० ७, ७४ ।
(२) अश्विनावर्ति० ऋ० सं० १, ९२,१६-१८ ।
(३) अबोध्यग्निर्ज्म० ऋ० सं० १,१५७ ।
(४) ईळे द्यावा०, ऋ० सं० १,११२ ।
(५) प्रतिप्रियतमं० ऋ० सं० ५,७५ ।
(६) अभूदुषा० ऋ० सं०, सर्वाणिछन्दांस्यन्वाह० गायत्र्या तेजस्कामस्य० - - - - - - - - - - - - - - - - - - विराजान्नकामस्य, तै० सं० ६,४,२ । तं सप्तभिश्छन्दोभिः प्रातरनुवन् । तस्मात् सप्त-चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते । तै० ब्रा० १,५,६,७ । सोऽब्रवीत् प्रजापतिः - - य उ चैनमेवं वेद । तै० ब्रा० १,५,१२ ।
(७) निर्वपत्येष आग्नीध्र ऐन्द्राग्नैकादशकपालान् सवनीयान् । तेषां व्रीही- हविष्कृतमुद्वादयति । उपोपच्छन्ते यवान्, बौ० श्रौ० ७,२ ।

अवघातकाले अवशेषितान् व्रीहीन् यवांश्च उपचेत् । यवान् समोप्य, अवहत्य, तण्डुलप्रक्षालनान्ते प्रातर्दोहं धूर्लोस्थेति । उदगग्रेण पवित्रेण "मातरिश्वनो घर्मोऽसि" इत्यादि दर्शेष्टि विधिना दोहं सम्पाद्य, कृष्णाजिनावधूननादि कुर्यात् । ततः एकादशकपालानि उपधाय, उत्तरतः "आदेवयजं वह" "ध्रुवमसी" ति मन्त्रेण मध्यमकपालमुपधाय "निर्दग्धं" मित्यादयः मन्त्रान् पठेत् । स्थाल्यां तिरःपवित्रं पय आनीयमधिश्रयेत् । इति सवनीयपुरोडाशनिर्वापः ।

सवनीयपुरोडाशनिर्वापकर्मविस्तारिकाकारिका: -

परिप्लुत्य यवान् व्रीहीन् वपेद् मध्यमयोः पृथक् ।
धर्मास्थेति कुलपारे दध्यानीय त्वचादिकम् ।।

आज्यान्तमपवार्यैतान्यवान् देवाभिव्यज्य च ।
पवित्रान्तर्हितपात्रे घृतमर्धयवान् वपेत् ।।

धानास्ता उदरणीव भस्माङ्गारैरधिश्रयेत् ।
चर्मविधूननापर्वान् पिष्टाज्येन्युष्मंथति ।।

करम्भंदधिमिश्रित्य लाजांश्च वितुषी कृतान् ।
आज्यपात्रे समोप्यैतत् परिवापमधिश्रयेत् ।।

आमिक्षां वाजिनं वापि प्रस्तरेऽधिपेत् ।
सवनेभ्यस्तु सर्वेभ्यः प्रातः सवन एव च ।।[१]
निरुप्यास्यांतकं कृत्वो द्वाभ्यानुसवनं यजेत् ।।

(१) ना० है० बौ० प्र०, पृ० सं० ५८ ।

वसतीवरीसंज्ञकलशानां स्थापनमभिमर्शनं च -

प्रतिप्रस्थाता - ततः पूर्वार्द्धे खरस्य दक्षिणाशिरसं उपांशु सवनं निधाय, तस्य दक्षिणोत्तरौ उपांश्वन्तर्यामौस्पृष्टौ, पश्चात् प्रत्यग्यकानिन्द्र-वायव मैत्रावरुणाश्विनान्, आश्विनस्य पश्चात् शुक्रामन्थिनौ दक्षिणोत्तरौ, द्रोणमन्थिनं शुक्रस्य दक्षिणोत्तरे खरस्य पश्चात् आग्रयणस्थालीं, दक्षिणस्यां वरत्रोण्यां आदित्यस्थालीं सोपस्यां, उत्तरस्यां वरत्रोण्यां उक्थ्यस्थालीं सोप-स्थाप्, उत्तरस्य हविर्धानस्य श्रोणे उपस्तम्भनं अनुपोत्पे ध्रुवस्थालीं, ऐन्द्राग्नं दक्षिणेन द्विदेवत्यानतिग्राह्यान् । पुरस्तात् आग्नेयं मध्ये ऐन्द्रं पश्चात् सौर्यं द्विदेवत्योत्तरेणांशवदाभ्यौ, अवस्थादुपरिष्टाच्च क्रमेणसुवर्ण राजतरुक्मविष्टितौ, अन्तरेण पूतभृदाध्वनीयौ कमलान्, दक्षिणस्य हविर्धानस्य पश्चादधो द्रोणकलशं दशापवित्रे निदधाति । स्वल्प प्रतिप्रस्थातृ कर्मेति[1] ।

अभिमर्शनम्[2] -

अध्वर्युः 'अग्निर्देवता०' इति मन्त्रं पठित्वा उपांशुग्रहं अभिमृशति ।

---

(१) अथ प्रतिप्रस्थातासादे पात्राणि अनुक्ति । पूर्वार्द्धे खरस्य दक्षिणाशिरसमु-पांशुसवनं निदधाति० - - - दशापवित्रे इति निदधाति, बौ० श्रौ० ७,२ ।

(२) अथैनान्यभिमृशत्यग्निर्देवता-गायत्रीछन्दउपांशोः पात्रमसीति वशभिर्वाऽध्वर्युः सं वा विंशतिकर्माणिवानुद्रवमाण आस्ते, बौ० श्रौ० ७२ ।
अग्निर्देवता गायत्रीछन्द उपांशोः पात्रमसि० - - - - - - - - - - पृथिवीदेवता०, तै० सं० ३,१,६-७ ।

'सोमोदेवतेति' मन्त्रेण अन्तर्यामग्रहमभिमृशति । 'इन्द्रोदेवतेति' ऐन्द्रवायवग्रहमभिमृशति । 'बृहस्पतिर्देवतेति' ति मैत्रावरुणग्रहणमभिमृशति ।

'अश्विनौ देवतेति' आश्विनग्रहमभिमृशति ।

'सूर्यो देवतेति' शुक्रमभिमृशति ।

'चन्द्रमा देवतेति' मन्थिनमभिमृशति ।

'विश्वेदेवा इति' मन्त्रेण अभिमृशति ।

'इन्द्रो देवता०' इति मन्त्रेण उक्थ्यमभिमृशति ।

'पृथिवीदेवता०' इति मन्त्रेण ध्रुवमभिमृशति ।

अध्वर्युः होत्रापठिते प्रातरनुवाकस्य अन्तिमां परिधानीयां 'अभूदुषा रुशत्पशुरित्यूचं श्रुत्वा, प्रचरण्यां चतुर्गृहीतं आज्यं अन्वारब्धे यजमाने 'शृणोत्वग्निः समिधा हवं मे०' इति मन्त्रेण आहवनीये जुहोति । पुनः चतुर्गृहीतं गृहीत्वा, बर्हिरादाय आह - 'अपस्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैक धनिन स्तनिस्तः पत्नीयुदाग्नीध्रोतृममैन च मा कसतीवरोभिश्च चात्वाले प्रत्युपतंबस्व । यथासम्प्रैषं होतामैत्रावरुणादयः कुर्वन्ति[1] ।

होता -

---

अत्र होता अध्वर्युः अपस्य होता इति ब्रूते इति अनभिहिंकृत्य, मन्द्रस्वरेण श्लोकस्तरां आपोनप्त्रीया संज्ञकाख्य पठन्ति[2] ।

---

(१) अथ यत्र होतुरभिजानाति अभूदुषा० तत् प्रचरण्यां स्रुचि चतुर्गृहीतं गृहीत्वा बर्हिरादाय सम्प्रैषमाह अपस्य० यथासम्प्रैषं ते कुर्वन्ति । शृणोत्वग्निः० तै० सं० १।३।१३ बौ० श्रौ० ७।३ ।



---अग्रिमपृष्ठेऽपि

आपोनप्त्रीयसंज्ञका ऋचः[१२] -

१- "प्रदेवत्राब्रह्मणे०" प्रथमाशिरन्वानुक्त्वा नवर्चः ।

२- "हिनोतानो" इत्येका ।

आवृत्तासु एकधनासु "आवर्वृतती०", इति । प्रतिदृश्यमानासु "प्रतियदापो०" । तीर्थमेष्यमागतासु "समन्यायंत्युपयन्त्यन्या०" इति । होतृचमसे वसां पूर्यमाणे "आपोनदेवी०" इति मन्त्रं पठित्वा तृणन्ते प्रणवेनोपरमेत् ।

---

पूर्वपृष्ठस्यात्र ----------

(१) परिहितेऽध्वर्यो होतरित्युक्तोऽनभिहिंकृत्यापोनप्त्रीया अन्वाहैषच्छ-
न्नैस्तरां परिधानीयायाः । तासां निगदादि० । परं मन्त्रेण ।
अध्वर्यकार०, आ० श्रौ० ५, १,१-५ ।

(२) प्रदेवत्राब्रह्मणे गातुरेत्वितिनव० । आववृततीरधनुद्विधारा इत्यावृता-
स्वेकधनासु । प्रतियदापो० प्रतिदृश्यमानासु । आधेनवः पयसातूर्ण्यर्थाः ।
समन्या यन्त्युपयन्त्यन्या इति, तीर्थदेशे० । आ० श्रौ० ५,१,८-१३ ।
ऋषयो वै सरस्वत्यां सत्रमासत० स बहिर्धन्वोदूढः पिपासयावित
एतदपोनप्त्रीयमपश्यत् प्रदेवत्राब्रह्मणे गातुरेत्विति० तद् संतत मनुब्रूयात्०
तस्य त्रिः प्रथमां संततमन्वाह० ता एता० । ऐ० ब्रा० २,१९-२०,
प्रदेवत्रा० ऋ० सं० १०,३०,१-९ । ऋ० सं० हिनोतानो० ऋ० सं० १०,३०,१
आववृतती० ऋ० सं० १०,३०,१० । प्रतियदापो०, ऋ० सं० १०,३०,१३ ।
समन्यायन्त्यु० ऋ० सं० २,३५,३ । आपोनदेवी० ऋ० सं० १,८३,२ ।

नेष्टा[१] -

नेष्टापत्नीशालात: पन्नेजनीं हस्तां पत्नीं 'प्रेह्युदेह्यवक्रास्यं' इति मन्त्रं वाचयन् आनयति ।

आनयनप्रकार: -

उत्तरेण आग्नीध्रीयं सदस्यान्तरेण चात्वालोत्करौ उदङ्०नुपनिष्क्रम्य, यत्र आपस्तत्रापि अध्वर्युः प्राप्य - 'देवीरापो अपान्नपात्०' इति मन्त्रेण अभिजुहोति । ततः 'कार्षिरस्यपापांमृध्रम्०' इति मन्त्रेण मैत्रावरुण चमसेन आहुतिं अपप्लावयति । ततः बर्हींषि अन्तर्धाय, 'समुद्रस्य त्वाक्षित्या०' इति मन्त्रेण चमसं पूरयति । ततः बर्हींषि अन्तर्धाय कलशेषु एकधनान् 'इन्द्राय वो जुष्टं गृह्णामि' इति मन्त्रेण गृह्णाति । तथैव पन्नेजनीं 'वसुभ्यो रुद्रेभ्य आदित्येभ्यो०' इति मन्त्रेण गृह्णाति तां पत्न्यै प्रदाय, अन्वारब्धेष्वत्राने यथेतमेत्य चात्वाले होतृचमसं वसतीवरीर्मैत्रावरुणचमसं च परस्परं संसृष्टं संपातहोतृचमसं वसतीवरीभिरद्भि: पूरयित्वा, तं मैत्रावरुण चमसे प्रस्कन्दयति । अर्धं सन्निधाय प्रतिस्तीर्य प्रचरण्या 'संज्योतिषां - ज्योतिरङ्०क्ताम्' इति मन्त्रेण चतुरावृत्त्याद्वारं समनक्ति । ततः पत्नीं शालामुखीयस्य पश्चात्

---

(१) आनयति नेष्टा पत्नीं पन्नेजनं कलशमादाय प्रेह्युदेहीत्येतेन निवेदनार्थेनां पूर्वद्वारोपनिष्क्रम्य० - - - - - - - - संसृष्टा: सादयति तूष्णीम्, का० श्रौ० ७।३ ।

सादयति ।

अपांग्रहणम्[१] -

-----------

अध्वर्युः सर्वाणि चमसान्यादाय, होतृसमीपं गच्छेत् । ततः होता अध्वर्युं पृच्छति - अवैरपोऽध्वर्यो ३ उ ? अत्र बौधायनः - अध्वर्योऽवैरपा ३ इति ? अध्वर्युरुत्तरयति "उतेमनन्नमुः उतेमाः पश्य" इति । अध्वर्युः उत्थाय "यमग्ने पृत्सु मर्त्यं०" इति मन्त्रेण संस्रावं आहवनीये जुहोति । अत्र होता "तास्वध्वर्यो०"[३]

-----------------------------------------

पूर्वपृष्ठस्याग्रे --------

प्रैषुदेव्युक्तस्य० तै० सं० ३,५,६,२ । देवीरापो०, कार्षिरस्य० समुद्रस्य० होतृचमसं च मैत्रावरुणचमसं च संस्पर्श्य वसतीवरीर्व्यानयति, तै० सं० ६।४।३, तै० सं० १।३।१३ ।

(१) अथाध्वर्युर्होतुरुत्क्रामेति होताध्वर्युं पृच्छत्यध्वर्योऽवैरपा ३ इति उते-मनन्नमुरुतेमाः पश्येतीतरः प्रत्याहाथाग्निष्टोमौ जुहोतियमग्ने०, बौ० श्रौ० ७,४ । आगत्याध्वर्युमवैरपोऽध्वर्या ३ उ इति पृच्छति । उते-मनन्नमुरिति प्रत्युक्तो निगदं ब्रुवन् प्रतिनिष्क्रामेत् । आ० श्रौ० ५।१।१४ । अध्वर्योऽवैरपा ३ इत्याह० यावाग्निष्टोमौ जुहोति । तै० सं० ६।४।३, अवैरपोऽध्वर्या ३ उ इति होताध्वर्युं पृच्छति उतेमनन्नमुः इत्यध्वर्युः प्रत्याह०, ऐ० ब्रा० २,१६-२० ।

(२) तास्वध्वर्यो इन्द्राय० ----- राजानमभिमुखउपविश्य निरस्य तृणम् तास्वध्वर्यो० ---- सारस्वत्यापरिदधाति, ऐ० ब्रा० २,२०, आ०श्रौ० ५, १,१५-१६ । अम्बयो यन्त्यध्वभिः ऋ०सं० १,२३,१६-१८ । एमा अग्मन्०, ऋ० सं० १०,३०,१४-१५ ।

इति मन्त्रं पठित्वा, निष्क्रामेत् । आसां एकधनादीनां पयः अवतिष्ठेत् । "यस्येन्द्रः पीत्वा०" इत्येकः, "अन्वयीयन्त्यध्वभिरिति" तिस्रः अनुप्रभीत "एमा अग्मन्रेवतीः"० इति तृचेन सन्नासु एकधनासु परिधाय, पुनः पूर्वद्वारा हविर्धानं प्रविश्य राजानमभिमुखं उपविशेत् ।

दधिग्रहप्रचारः[1] -
--------------

कलशीं वसतीवरीः पूर्वद्वारा प्राचीमेकधनादक्षिणेन होतार-मानीय, होतृचमसीयाः दक्षिणस्य हविर्धानस्यां तीर्णोषे उपाविहृत्य नीड उत्सादयति । आहवनीयं मैत्रावरुणचमसीयास्तृतीयमेकधनानां वसती-वरीणां चानीकवदस्य हविर्धानस्य पुरोधः वसतीवरीः पश्चादधमेकधनान् - सादयित्वा, बर्हिषि अन्तर्धाय "उपयामगृहीतोसि०" इति मन्त्रेण दधिग्रहं गृह्णाति । बर्हिषि अपोह्य, "दिवेत्वा, अन्तरिक्षायत्वा०" इति उत्तिष्ठति । "ऐन्द्रदक्षिणत०" इति मन्त्रेणोपनिष्क्रम्य, अन्वारब्धे यजमाने "प्राणायत्वा" अपानायत्वेति मन्त्रेण आहवनीये उपविश्य जुहोति । संक्षालनं अन्तः परिधिनिनीयपात्रमग्नौ प्रास्येत् ।

--------------------------------

(१) अथ यदुवश्य एतैनवयजुषा० - - - - - अथास्य संक्षालनमन्तः परिधि निनयति । कौ० श्रौ० ७।४ । उपयामगृहीतोसीति मन्त्रभागः तै० सं० ३।५।८ । प्राजापत्यं दधिग्रहं गृह्णीयात्० आज्यं ग्रहं गृह्णीयात् तेजस्कामस्य० सोमग्रहं गृह्णीयात् ब्रह्मवर्चसकामस्य दधिग्रहं गृह्णीयात् पशुकामस्य० यस्यैवं विदुषोऽदाभ्यो गृह्यते० उपनद्धस्य गृह्णाति, तै० सं० ३।५।८, तै० सं० ६।६।६ ।

दक्षिणादानम्[1] -

यजमानः अध्वर्यौ । द्वादशपष्ठौहीस्त्रै ददाति । ततः अध्वर्युः होतृकमसीया: दक्षिणहविर्धानस्यान्तरेण एणउपावृत्य, कर्मणि निधाय, तासु यजमानं "निग्राभ्यास्थ देवश्रुत०" इति मन्त्रं वाचयति[2] ।

अदाभ्यांशुग्रहः[3] -

[4] अदाभ्यपात्रे बद्धस्य सोमराजः त्रीन् अंशून् गृह्णाति । "वसवस्त्वा-

(१) बौ० श्रौ० ७।४ ।

(२) अध्वा होतृकमसीया दक्षिणस्य० कर्मणि निदधाति । तासु निग्रा- भ्यासु यजमानं वाचयति निग्राभ्यास्थ०, बौ० श्रौ० ७।५, तै० सं० ३।१।८ ।

(३) अनभिषुतस्य गृह्णाति० अंशूनपिसृजति० यस्यैवं विदुषोऽदाभ्यो गृह्यते० सकृदभिषुतस्य गृह्णाति० स्तमानं भवति । तै० सं० ६।६।९-१० ।

(४) अथातोऽदाभ्यांश्वोर्ग्रहणम्० अग्नेरस्य राजन्यो गृह्णाति वसवस्त्वा- प्रवृहन्तु० होतृचमसे वसतीवरीभ्योऽप्यपो निःषिच्य द्वादशाभिराधा- वेराप्नोति मान्दासु० अंशुनुपसंगृह्य गृह्णाति शुक्रं ते० अंश न मादायो- पोतिष्ठति ककुहं० सोमः सोमस्य० आहवनीये जुहोत्यन्वारब्धे यजमाने यत्ने सोमा० प्रदक्षिणमावृत्य राजन्येवांशूनपि सृजत्युक्षिरसं, बौ० श्रौ० १४।१२ । वसवस्त्वाप्रवृहन्तु गायत्रेण छन्दसाग्नेः प्रियं पाथ उपे- हीतिमन्त्रविभागः तै० सं० ३।३।३ । योऽदाभ्यं गृहीत्वा सोमाय जुहोति० योंऽशुं गृह्णाति० हिरण्यमभिव्यनिति० स्तमानं भवति० अपउपस्पृशति०, तै० सं० ३।३।४ ।

प्रवृहन्तु०" इति मन्त्रेण प्रथमः । "रुद्रास्त्वा०" इति द्वितीयः "आदित्यास्त्वा०" इति तृतीयः । इति । ततः होतृचमसीयाः अपः पात्रान्तरे आनीय, पुनः होतृचमसे आधवनीयात् अपो गृहीत्वा द्वादशमन्त्रैः अंशुभिराधुनोति ।

मन्त्राः - (१) "मान्दासु ते", (२) "भन्दनासु ते", (३) "कोतनासु ते" । (४) नूतनासु ते० । (५) रेशीषु ते । (६) मेषीषु ते । (७) वाशीषु ते । (८) विश्वभृत्सु ते । (९) माध्वीषु ते । (१०) ककुहासु ते । (११) शक्वरीषु ते । (१२) शुक्रासु ते ।

ततः अदाभ्यपात्रं अवस्तादुपरिष्टाच्च सौवर्णरुक्माभ्यामावेष्ट्य, अंशुभिरन्वधाय, "कुकूनानां त्वा कुरूण गृह्णामि" इति मन्त्रेण होतृचमसीयात् गृह्णाति । "ककुहं रूपं०" मिति मन्त्रेण उपोत्तिष्ठति "सोमः सोमस्य पुरोगाः" इति मन्त्रं पठन् आहवनीयमेति । अन्वारब्धे यजमाने "यं ते सोमादाभ्यं०" इति मन्त्रेण आहवनीये जुहोति । ततः प्रदक्षिणमावृत्य क्रमेणपदे राजांशून् सजत ।

मन्त्राः -

(१) "उशिक्त्वं देवसोमे"ति प्रथमम् ।

(२) वशीत्वं देवसोमेति द्वितीयम् ।

(३) "अस्मत्सखात्वं" - मिति तृतीयम् ।

(४) ततः पात्रान्तरस्था होतृचमसीयाः अपः होतृचमसे आनीय, यजमानाय दत्त्वा, "देवस्य त्वे"ति उपांशुसवनमादाय, "ग्रावास्यध्वर०"

इति मन्त्रेणाभिमन्त्रयते [1] । इति अदाभ्यग्रहप्रकार: ।

## उपांशुग्रहप्रकार: [2] -

ततः कर्णः पूर्ववद् ग्राव्णं निधाय, राजानं विस्रस्य, पूर्ववत् एकैकमंशोत्कर्षमुपांशु सवनस्योपरि मिमीते । १- इन्द्रायत्वा वृत्रघ्ने । २- इन्द्रा० वृत्रतुरे । (३) इ० अभिमातिघ्ने । ४- इ० आदित्यवते । ५- इ० विश्वदेव्यावतेइति यजुषा मन्त्रकृत्वा, पुनः तूष्णीं मन्त्रकृत्वा, पुनः तूष्णीं मन्त्रकृत्वा, एवं दशकृत्वा, ऊर्ध्वं नीत्वा, शिष्टमुक्तरीत्यैव विस्रस्य, दक्षिणस्य हविर्धानस्यान्तरेणीषे उपनिकृत्य, नीळत्सायमितं

- - - - - - - - - - - - - - - - - - - - - -

(१) ता यजमानाय संप्रदायाथैतेषां ग्राव्णां यः पृथुतमस्तमादत्ते देवस्यत्वे० आदायाभिमन्त्रयते ग्रावाऽस्यध्वरकृत०, बौ० श्रौ० ७।५ । तै० सं० १।४।१ ।

(२) अथ नं ग्राव्णं प्रक्षित्य विस्रस्य राजानं ग्रावाणमुपांशु सवनमभिमिमीते इन्द्रायत्वा वृत्रघ्ने० मन्त्रकृत्वोयजुषा० ------ नीळत्सादयति अथाभितं राजानं होतृचमसीयाभिरुपसृजति श्वात्राः स्थ० अंशोः सं प्रयोति यत्तेसोम० तिरश्चीनं फलकं अभिमृशति - धिषणेवीडू० अथवाहोर्ध्वं नयति अथोवृषं बौ० श्रौ० ७।५ । इन्द्रायत्वा वृत्रघ्ने० इत्यारभ्य धिषणेवीडू० पर्यन्तं मन्त्रभागः तै० सं० १।४।१ देवस्यत्वा सवितुः प्रसव इति ग्रावाणमादत्ते० यदुपांशुसवनमभिमिमीते० इन्द्रायत्वेन्द्रायत्वेतिमिमीते० मन्त्रकृत्वो यजुषामिमीते० मन्त्रकृत्वस्तूष्णीमु० अंशूनपसृजति० । तै० सं० ६।४।४ ।

राजानं "स्वांगास्थयुक्तुर०" इति मन्त्रेण होतृकमलोयाभिरुपवृजति ।
"यत्तेसोमदिवोति" मन्त्रेण संप्रोति । ततः वर्मान्तरिते फलके "धिषणोवोडु"
इति मन्त्रेण अभिमृशति । "अवोवृध वो मनसेति" मन्त्रं यजमानं वाचयति ।
प्रतिप्रस्थाता उपवेषाणी राजानंशून् दीक्षाभ्यं गुल्यान्तराभेषु आसक्ते ।
अध्वर्युः प्रेष्यति ।

प्रैषः -

--------

प्रतिप्रस्थातरुदकेनोदचमसेनोदचमसेन वा जघने नाहवनीयं प्रत्युपलं वस्व । स तथाकरोति । अध्वर्युः हिरण्यमइभिः प्रक्षाल्य, मध्यमायामंगुलौ कृत्वोपांशु सवनेन राजानं सकृत् प्रकृत्य वामदेव्यं साम "क्यानं" इति योनिं वा मनसा गायन् "उपयामगृहीतोसि०" इति मन्त्रेण अंशुपात्रे गृह्णाति । "प्रजापतये स्वाहेति मन्त्रेण आहवनीये जुहोति । "वान: प्राणस्तु०" इति द्वाभ्यां मन्त्राभ्यां प्रतिप्रस्थाता पूर्णमानोताभिः बाहुभिः वेनां मार्ष्टि । अध्वर्यो वै तच्च शतमानं हिरण्यकं दद्यात् । राजतं ब्रह्मणेदद्यात् । ततः प्रतिप्रस्थाता सव्येन उपांशुग्रहं आदाय, अध्वर्युः पूर्वेण अष्टौकृत्वा, अभिषुत्य, अंशो स्कन्धे वाचयति - "आमास्कान्त्सहेति । प्रतिप्रस्थाता प्रथमाभ्यां अंशुभ्यां अन्ववपाति ।

---

(१) अथाह प्रतिप्रस्थातरुदक० - - - - - - - - प्रत्युपलम्बस्व इति । स तथा करोति । अथैतद्धिरण्य० - - - - - - - - - - - - - अध्वर्यो-रेतद्धिरण्यं भवति , श० ब्रा० १४।१२, वान: प्राण स्तु० । इन्द्राग्नी-मे० । तै० सं० ३।३।३ । आमास्कान्त्सह०, तै० सं० ३।१।८ ।

"वृषावृष्ण०" इति मन्त्रेण अध्वर्युरानयति । प्रतिप्रस्थाता अंशू सवते । पुनरध्वर्युः एवमेव द्वादश कृत्वा, प्रतिप्रस्थाता तृतीयाभ्यामंशुभ्यां अन्तर्दधाति । पुनरध्वर्युः "देवोदेवाना०" मिति मन्त्रेण आनयति । प्रतिप्रस्थाता अंशू सवते । ततः अध्वर्युः उपांशुसवनं दशापवित्रेण परिमृज्य, स्वस्थाने "स्वांकृतोसि०" इति मन्त्रेण दक्षिणाशिरसं स्थापयित्वा, प्रतिप्रस्थातुः "मधुमती:" इति मन्त्रेण अवेक्ष्य, "विश्वेभ्यस्त्वे" ति मन्त्रेण ऊर्ध्वमुन्मार्ष्टि । ततः "उर्वन्तरिक्षं०" इत्युत्थाय, आहवनीयं गत्वा, अन्वारब्धे यजमाने "स्वाहात्वासुभव:" इति मन्त्रेण जुहोति । "भूरसि श्रेष्ठ०" इति मन्त्रेण अनुप्राण्य वाचयति[१] । ततः ग्रहं अवाचीनमकृत्य, प्रतीचीनोत्तानपाणिना मध्यमे परिधौ "देवेभ्यस्त्वामरीचिपेभ्य:०" इति मन्त्रेण निर्मार्ष्टि । प्रदक्षिणमावृत्य, आग्रयणस्थाल्यां संस्रावं "एषते योनि" रिति मन्त्रेण अवनयति । अभिषुतादेकमंशुं ग्रहेऽप्रास्य, दक्षिणतउपांशुसवनेन संस्पृष्टं "प्राणायत्वा०" इति मन्त्रेण सादयति । अत्र होता उपांशुग्रहानुमन्त्रणं "प्राणं यच्छस्वाहा०, अपानायच्छ०" इति मन्त्राभ्यां करोति । ततः अध्वर्युः

---

(१) संतुष्टस्य राज्ञः प्रतिप्रस्थाता सव्येपाणौ षडंशून् सव्यते । अथ तेनैव पाणिनोपांशुपात्रमादत्ते । अथोपसृष्टं राजानमष्टौ कृत्वोऽग्रे अभि-षुणोति । सोऽष्टौ स्कन्नं वाचयति आमास्वान्तस्य० - - - - व्यानायत्वा इत्युपांशुसवनं प्रत्यभिमृशति, ७।५। वाचस्पतये पवस्ववाजिन् इत्यारभ्य प्राणायत्वापर्यन्तमन्त्रविभाग:, तै० सं० १।४।२। यदुपांशवग्रा ग्राह्यन्ते० अष्टौ कृत्वोऽग्रेऽभिषुणोति० एकादश-कृत्वो द्वितीयम् । द्वादशकृत्वस्तृतीयम्० अष्टावष्टौ कृत्वोऽभिषुत्यम्० यत् त्रिरुपांशुं हस्तेन विगृह्णाति० । तै० सं० ६।४।५ ।

"व्यानाय त्वा०" इति मन्त्रेण उपांशुपात्रमभिमृशति । ततः प्रतिप्रस्थाता "यत्ते सोमादाभ्यं०" मिति मन्त्रेण अंशूनां द्वौ द्वावपि सृजति । यः उपांशु-प्रचारे उपांशुग्रहः सोमः गृह्यते स एव सोमाभिषवो भवति । इत्युपांशुग्रहप्रचारः[1] ।

सोमाभिषवः -

ततः अध्वर्युः आहवनीयस्य पश्चात् प्राङ्मुखः तस्य दक्षिणं बाहु यजमानः, तद् दक्षिणतः प्रतिप्रस्थाता उत्तरः आग्नीध्रः, पुरस्तान्नेष्टा, अध्वर्युः उन्नेतारमुद्दिश्य "आहरोपब्दं इति प्रेष्यति । ततः उन्नेता आधवनीयात् उदन्चेन उपरि अधि षोडशवतो अंशून परिप्लावयन्ति "प्राणपागुदें" ति मन्त्रेण एषाभिप्राणसंज्ञकः - आप्याययन्ति । व्यपोहन्ते । अभिषुण्वन्ति निग्राम-मुपयन्ति । एवमेव पर्यायक्रमेण चतुर्वारं कुर्वन्ति । ततः अध्वर्युः संभरण्यां संभृत्य, उन्नेत्रे प्रयच्छति । तद् उन्नेता आधवनीयस्याधः पात्रान्तरे कृत्वा, आधवनीये अवनयति । ततः उन्नेता आधवनीये प्रपोह्य, दक्षिणस्य हविर्धानस्यान्तरेण उपावहृत्य, कर्णे निधाय, सम्मुखान् ग्राव्णः कृत्वा, चतुर्थं ऋजीषं ग्रावमुखेभ्यो व्यपोहति । अध्वर्युः "सोमोऽभिषुतः" इत्युक्ते उद्गाता ग्राव्णु-

---

(१) नानुवयोरुपांशवन्तर्यामयोर्होतावाचं विसृजेत० प्राणं यच्छ स्वाहा त्वा सुहव सूर्याय इत्युपांशुमनुमन्त्रयेत । तमभिप्राणप्राणं मे यच्छ इति, ऐ० ब्रा० २।२१ । उपांशुं हूयमानं प्राणं यच्छ स्वाहा० - - - - उः इत्यनुप्राण्यात्, आ० श्रौ० ५।२।१ ।

द्रोणकलशं निधाय तत्र दशापवित्रं वितनुते । इति सोमाभिषवः[1] ।

अन्तर्यामग्रहप्रकारः[2] -

---

उदित आदित्ये अध्वर्युः अन्तर्यामग्रहं "उपयामगृहीतोऽसि अन्तर्यच्छ" इति मन्त्रेण गृह्णाति । "स्वां कृतोऽसि" इति मन्त्रेणापविध्य, "मधुमतीर्न इषस्कृधि०" इति मन्त्रेण अवेक्ष्य सद्यो गृहीत्वा, "विश्वेभ्यस्त्वे" ति मन्त्रेण दक्षिणेनोर्ध्वमुन्मार्ष्टि "मनस्त्वाष्टु०" इति मन्त्रेणोत्थाय, "उर्वन्तरिक्ष-

---

(१) अथाभिषोष्यन्तः सर्व एव राजानं पर्युपविशन्ति । पश्चात् प्राङ्०-मुखोऽध्वर्युरुप विशति । तस्य दक्षिणं बाहुमनुयजमान:० अग्नीदार-माह बाहरोपवृत इति० उपर्येव होतृचमसेऽप्सु परिप्लावयन्ति प्राणपा० एषोऽन्तर्याम:० कृतेनादित्यस्योदयमाकांक्षति, बौ० श्रौ० ७।६ । प्राणपानुदगपराकावास्त्वा० इत्यादिमन्त्रविभागः । तै० सं० १।४।१ । अंशून् पुनरपिसृजति० अंशूनपिसृजति०, तै० सं० ६।४।४ ।

(२) उदित आदित्येऽन्तर्यामं गृह्णात्यथ पवमानस्य राज्ञः उपयामगृही-तोऽस्यन्तर्यच्छ० स्वांकृतोऽसि इति ग्रहमुपयच्छति । अथ न मधेपाते मधुमतीर्न० अथैनं मूर्ध्नमुन्मार्ष्टि विश्वे० - - - - - - - - उपांशुसवनं प्रत्यभिमृशति, बौ० श्रौ० ७।६ । उपयामगृहीतोऽस्यन्तर्यच्छ० इत्यादि मन्त्रविभागः, तै० सं० १।४।२, वृतिश्रेष्ठो०, तै० सं० ३।२।१०।२ । यदिमानन्तर्यामो गृह्यते० प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ-व्यान उपांशुसवनः । यं कामयेत - - - - - - - - - - सादयेत्० यं कामयेत - - - - सादयेत्०, तै० सं० ६।४।६ । अन्तर्यामपात्रं यच्छ स्वाहात्वा० सम्यपान्यवज्ञ० । आ० श्रौ० ५।२।२-३ ।

मन्थिहि०" इत्येत्य - अन्वारब्धे यजमाने "स्वाहात्वा सुभवः०" इति मन्त्रेण आहवनीये हुत्वा, "पुरुदिभिक्ष०" इति मन्त्रं वाचयति । ततः मध्यमे परिधौ उत्तानेन पाणिना "देवेभ्यस्त्वेति मन्त्रेण प्रान्तं उन्मार्ष्टि । "एष ते योनिः" इति मन्त्रेण आग्रयणस्थाल्यां शुक्रामन्थीयस्थाने सादयति । ततः उपांशुसवनं "अपानाय त्वा" "व्यानाय त्वा" इति मन्त्रेण अभिमृशति । इति अन्तर्यामग्रहप्रचारः ।

ग्रहग्रहणम्[१] -

अध्वर्युः उन्नेतारमाह - क्रमशः संततमान्योपांशु ग्रहान् ग्रहीष्यामि

---

(१) ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते० ------ऐन्द्रवायवः पूर्वो मित्रावरुणाद् गृह्यते०, तै० सं० ६।४।७-८, यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते० यद्देवं कृतं मन्थिपात्रं भवति । सक्तुभिः श्रीणाति, तै० सं० ६।४।१० । यस्यैवं विदुष आग्रयणाग्रा ग्रहा गृह्यन्ते० --- अवस्तादुपगृह्णाति०" यदतिग्राह्या गृह्यन्ते० अग्निष्टोमे ग्रहीतव्याः० । तै० सं० ६।६८ । तै० सं० ६।४।११ । यदुक्थ्यो गृह्यते० तै०सं० ६।५।१ । आयुर्वा एतद्यज्ञस्य ध्रुवः ----यद् ध्रुव उत्तमः साद्यते०, तै०सं० ६।५।२ । यान् प्राचीनमाग्रयणाद् ग्रहान् गृह्णीयात् तानुपांशु गृह्णीयाद्यानूर्ध्वांस्तानुपब्दिमतः । तै० सं० ३।१।६ । पवमानस्य ग्रहा गृह्यन्ते० उपयामगृहीतोऽसि० इन्द्राय त्वा इत्याधवनीयं० विश्वेभ्यस्त्वा देवेभ्यः इति पूतभृतम्०, तै० सं० ३।२।१। ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्० । तै० सं० ७।२।७, तै० ब्रा० २।२।८२ । २।५।८।१० । २।४।३।१ । १।४।१ । १।५।४ । अथोन्नेतारमाहाप्रचः संतत०, स तथा करोति, बौ० श्रौ० ७।६-७ ।

इति, उन्नेताऽपि तथा करोति । आवायोभूषशुचिपेँ ति[क] ऐन्द्रवायवं गृह्णाति । 'इन्द्रवायू इमे सुता' इति मन्त्रेण पुनर्गृह्णाति, तथा अध्वर्युः ऐन्द्रवायवं सादयति । द्वितीये मैत्रावरुणग्रहपात्रे अयं वां मित्रावरुणामिति मन्त्रेण गृह्णाति तं सादयति ।

[ख]
तृतीये - 'अयं वेनश्चो०' इति मन्त्रेण शुक्रग्रहपात्रे गृह्णाति, तं सादयति । चतुर्थे - 'तं प्रत्नथे' ति मन्त्रेण मन्थिनं गृह्णाति तं सादयति । पञ्चमे - 'ये देवा दिव्येका' इति मन्त्रेण आग्रयणं गृह्णाति तं सादयति ।

[ग]
ततः हिरण्यं पिधाय, उपांशुस्वरेण त्रिरभिहिंकृत्य, 'सोमः पवते स्मै०' इति मन्त्रपाठः । मन्त्रान्तावाक्यं 'ज्येष्ठायपवते' इत्युच्चैः कुर्यात् ।

[घ]
अतिग्राह्यपदी -

---

पुरस्तात् सादिते पात्रे 'अग्न आयूंषि' इति मन्त्रेण गृह्णाति, तं सादयति । 'उत्तिष्ठन्नोजसे' ति मध्यमे पात्रे गृह्णाति तं सादयति । 'तरणि-

---

(क) आवायो० । इन्द्रवायू० । अयं वां मित्रावरुणा० । तै०सं० १।४।४-५ ।
(ख) अयं वेनश्चो० । तं प्रत्नथा० । ये देवा दिव्येका० । तै० सं० १।४।८-११ ।
(ग) सोमः पवते० । बौ० श्रौ० ७।७ ।
(घ) अग्न आयूंषि० । उत्तिष्ठन्नोजसा० । तरणिर्विश्वदर्शतो० ।
तै० सं० १।४।२६-३१ ।

विश्वकर्मन्०' इति मन्त्रेण सोमं ग्रहं गृह्णाति, तं सादयति । 'इन्द्रायत्वा-[ढ०] बृहद्वते०' इति मन्त्रेण उक्थ्यस्थाल्यां गृह्णाति तं सादयति । ततः अध्वर्युः ध्रुवस्थालीमाददान आह - ये पुर्व्याहाराप्राप्तस्यन्तः प्राञ्चस्ते निष्क्रामन्तु येऽपस्या प्रत्यञ्चस्ते मावोऽभिपरिहारिषम् । अनेनाभिणोतृस्त्वोन्नेतृकानभि-परिहृत्योच्चस 'मूर्धानं दिवो०' इति मन्त्रेण अनुद्रुत्य, 'उप० अग्नयेत्वा वैश्वानराय०' इति मन्त्रेण ध्रुवस्थाल्यां गृह्णाति 'ध्रुवोऽसि ध्रुवक्षिति' रिति आदित्यके ततः तं सादयति । ततः ध्रुवेण राजानं परिधाय उपर्यहि द्रोणकलशे समनुस्वर्णप्योतिभिः शीत्वा, परिप्लुपात्रं प्रास्य 'द्रप्सश्चस्कन्दे'[ब]ति द्वाभ्यां ऋग्भ्यां अनुमन्त्रयते । एतत् दधिद्रप्सानुमन्त्रणम् । अथ उन्नेतारमाह - अतिरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् ग्रहीष्यामि' तत् श्रुत्वा उन्नेता पूतभृति दशापवित्रं वितत्य द्वौ वा त्रीन् वा राज उदकानानयति । ततः अध्वर्युः 'प्राजापत्यायेत्वे'ति द्रोणकलशं, 'इन्द्रायत्वे'ति आधवनीयं, 'विश्वेभ्यस्त्वा,' इति मन्त्रेण अभिमृशति ।

बहिष्पवमान निःसर्पणम् -

अपउपस्पृश्य, बर्हींषि आदाय, उपनिः सर्पति । अत्र तं निःसर्पन्त-मन्वारभते । प्रथमतः - उद्गाता अध्वर्युं अन्वारभते । ततः उद्गातारं प्रस्तोता,

---

(ढ०) उप० इन्द्रायत्वाबृहद्वते० । मूर्धानंदिवो० । ध्रुवोसिध्रुवक्षिति० ।
उप० अग्नयेत्वा०, तै० सं० १।४।१२-१३ ।

(ब) द्रप्सश्चस्कन्द० तै० सं० ३।१।८ । यस्तेद्रप्सः० । योद्रप्सो० ।
यस्तेद्र० । तै० सं० ३।१।१० ।

प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारं यजमान०, यजमानं ब्रह्मा, ब्रह्माणं प्रतिप्रस्थाता एवमेव अन्वारब्धे अध्वर्युः "अग्निः प्रातः सवने पातु०" इति मन्त्रेण आहवनीये जुहोति । एवमा अध्वर्यु जुहुतः यथावेदं इतरेऽपि जुह्वन्ति । उदन्च आस्ताव-सर्पन्ति । ततः प्रसृपः अध्वर्युः "वाग्ग्रेगा अग्रास्तु०" इति मन्त्रेण बर्हींषि धून्वानः मन्त्रं जपति । आस्तावे बहिष्पवमान निः सर्पणम्, ब्रह्मादयः यथायतनं उपविशन्ति । ततः उद्गात्रे बर्हींषि "कुशाम्यौ" इति प्रयच्छति ।[1]

बहिष्पवमानस्तोत्रम् -

---

आस्तावे ब्रह्मादयः यथायतनं उपविशन्ति । ततः उद्गात्रे बर्हींषि "कुशाम्यौरिति" प्रयच्छति । स्तोत्रारंभे जपः "वायुर्हिं कर्ता०" इति मन्त्रेण स एष त्रिवृत् बहिष्पवमानो भवति । अध्वर्यु राह - ब्रह्मन् स्तोष्यामः प्रशास्तः इति । तत् ब्रह्मा प्रसौति "देवसवितः" इत्येतां प्रतिपदं कृत्वा "रश्मिरसि

---

(१) अथा च उपस्पृश्य बर्हिषी आदायोपनिःसर्पति तं निःसर्पन्तमन्वारभत- उद्गातारं ब्र उद्गातारं प्रस्तोता० आहवनीये स्रुवाहुतिं जुहोति अग्निः प्रातः सवने० यथावेदमितरे जुह्वति । अध्वर्युः प्रथतो० वाग्ग्रेगा०, बौ० श्रौ० ७।७-८ । अग्निः प्रातः सवने० । वाग्ग्रेगा० । तै० सं० ३।१।६-१० । पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानं सर्पन्ति । तै० सं० ६।३।१। पवमानाय सर्पणे० । तावन्वारेणेतरे दीक्षितारश्च । द्रप्सश्चस्कन्देति०, आ० श्रौ० ५।२।४-६ । द्रप्सश्चस्कन्द० ऋ० सं० १०।१७।११-१२ । तदाहुः सर्पे ३ न्न सर्पे ३ दिति । सर्पेदिति हैक आहुः० तदन्नाहत्यम्, ऐ० ब्रा० २।२२ ।

क्षयाय त्वा क्षयं जिन्व०" इत्येतस्यानुवाकस्य, एकैकं उपादाय प्रशंसति[1] ।

---

(१) आस्तावे यथायतनमुपविशन्त्यथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक् साम्नो० - - - दशहोतारं व्याचष्टे । बौ० श्रौ० ७।८ । वायुर्हि कर्माग्निः प्रस्तोता० एतद् यदेनमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति, नाध्वर्युरुपगायेत्० । तै० सं० ६।३।१, तै० सं० ३।३।२ । देवस्य त्वेतत् ते - - - - - - सवितुः प्रसवे । तै० सं० ३।२।७ । रश्मिरसि क्षयाय त्वा क्षयं जिन्व । तै० सं० ४।४।१ । ३।५।२ । श्येनोऽसि गायत्रछन्दा० तै० सं० ३।२।१। स्तुतस्य स्तुत० तै० सं० ३।२।७ । बहिष्पवमाने दशहोतारं व्याचक्षीत । तै० ब्रा० २।२।८।३ । सर्वे तथोपक्रमेत्योपासीदन्० - - - - - - - - - बहिष्पवमान उपसद्यः । तै० ब्रा० १।५।६।७ । ते यत् त्रिवृतास्तुवते० । अथ यत् पञ्चदशेन स्तुवते० - - - - - एकविंशः । तै० ब्रा० १।५।१०-११ । तत्रासीनोऽनुमन्त्रयेत योदेवानामिह सोमपीथो यज्ञे बर्हिषि वेद्याम् । तस्यापि भक्षयामहि इति० अथो ब्रूयात् भुवमसि भुवं भूयासम्, ऐ०ब्रा० २।२२ । उपाकृतेषु पवमानेष्वाहुवः० स प्रस्तोतोपाकृते स्तोत्रमाह - ब्रह्मन् स्तोष्यामः प्रशास्तः इति । स भूः इति ब्रूयात् प्रातः सवने ब्रूयात् इन्द्रवन्तः स्तुध्वमिति० । ऐ० ब्रा० ५।३३-३४ । अथाहास्त्युद्गातॄणां प्रेषा ३ : ना ३ इति । वस्तोति ब्रूयात् । यदेवैतत् प्रशास्ता कं वधित्वा स्तुध्वमित्याह स एषां प्रेषः, ऐ० ब्रा० ६।१४ ।
तत् स्तोत्रायोपविशन्त्युद्गातारमभिमुखाः । तान्होताऽनुमन्त्रयतेऽत्रासीनो यो देवाना० भुवं भूयासमिति । दीक्षितश्चेद् ब्रूयाद् स्तोत्रोपास्वाराय । सर्वेष्वोत्तरयोः सवनयोः ब्रह्मन् स्तोष्यामः० । भूरिन्द्रवन्तः० । भुव इति माध्यं दिने० । स्तुत देवेन सवित्रा० - - - - - - - - - - - - - - - - - - - - - - -स्तुध्वमित्युक्ते: । आ० श्रौ० ५।२।७-१४ ।

ततः बहिष्पवमानस्तोत्रे पञ्चम्यां प्रस्तुतायां "श्येनोऽसि गायत्रछन्दाः०" इति मन्त्रं वाचयति । ततः अध्वर्युः "चित्तिः स्रुगा" दि दशहोतारं व्याचष्टे । "स्तुतस्य स्तुतमस्यूर्ज" मिति मन्त्रेणास्तुतदोहं वाचयति । मन्त्रसमाप्ते अध्वर्युः आग्नीध्रप्रैषं ददाति ।

अथ सवनीयेष्टिः[1] -

---

तत्र विविधानि अध्वर्युकर्माणि प्रथमतः भवन्ति, तानि संक्षेपेण लिख्यन्ते । अध्वर्युः आग्नीध्रं प्रतिप्रस्थातारं च सम्प्रेष्यति । प्रैषः - "अग्नि-दग्नीन् विहर, बर्हिस्तृणीहि, पुरोडाशानलं कुरु, प्रतिप्रस्थातः पशुना-केतुं" । यथासम्प्रैषं तौ कुरुतः । अध्वर्युः जपन्नुपैति । ततः "एहि यजमान" इति ब्रुवन् पूर्वयाद्वारा प्रपाद्य समस्तराजानं "विष्णोस्त्वं नो०" इति मन्त्रेण

---

(१) उद्धृते सान्नाय्यप्रैषमाह अग्नीदग्नीन् विहर० पूर्वयाद्वारा हविर्धानं प्रपाद्य समस्तं राजानमुपतिष्ठते विष्णो० अथादत्त आश्विनपात्रं० तस्मिन् गृह्णाति द्रोणकलशात् परिप्लुता पात्रेण यावां० अथा-ध्वर्युश्चरति परिपुरश्मि० अथ प्रचरण्यां नवकृत्वो गृह्णाति० अथो-त्तरस्य हविर्धानस्य छदे प्रचरणीं सादयति । अथाग्निकाशिनेन आह-वनीयात् । बौ० श्रौ० ७।८ ।

क - वैष्णव्यर्चा पुनरेत्योपतिष्ठते० विष्णोस्त्वं नो अन्तमः - - - अजित-मिति० । तै० सं० ३।१।१० । यावांकशा० । उप० स्वश्विभ्यां स्वा० तै० सं० १।४।६-७ । बहिष्पवमाने स्तुत आश्विनो गृह्यते० । तै० सं० ६।४।६ । यदाग्नीध्राद्धिष्ण्यान् विहरति० बहिष्पवमानेस्तुत आह अग्नीदग्नीन् विहर० अंगारैं सवने विहरति० आहवनीय - - - - तेषु कुरुते० । तै० सं० ६।३।१ ।

उपतिष्ठते । ततः द्रोणकलशात् परिप्लुवा "या वां कशा मधुमती" ति मन्त्रपूर्वकं "अश्विभ्यां त्वे" ति मन्त्रेण आश्विनग्रहं गृह्णाति । तं परिमृज्य सादयति । पुनरुत्सर्पणं कृत्वा, प्रचरण्यावगृहीतं आज्यं अन्वारब्धे यजमाने "महाहवि-र्होते" ति सप्तहोतारं मनसा अनुद्रुत्य आहवनीये जुहोति । इति सप्तहोतुः होमः । एतदनुसवनमेव भवति । पुनः यजमानः अध्वर्युश्च सर्वग्रहस्थं सोमं "परिभूरग्निं परिभू" रिति[१] मन्त्रेण उपतिष्ठते । ततः उपांशुपात्रं "प्राणाय मे वर्चोदा०" इति मन्त्रेण अवेक्षते । "अपानाय०" ति मन्त्रेण अन्तर्यामपात्रम् । "व्यानाय०" इति मन्त्रेण उपांशुसवनम् । "वाचे०" इति मन्त्रेण ऐन्द्रवायवं "दक्षक्रतुभ्यां" मिति मन्त्रेण मैत्रावरुणम् । "श्रोत्राय०" इति मन्त्रेण आश्विनम् । "चक्षुर्भ्यां०" इति मन्त्रेण - युगपत् शुक्रामन्थिनौ । "आत्मने०" इत्याग्रयणम् । "ओजोभ्यो०" इति मन्त्रेण उक्थ्यम् । "आयुषे०" इति ध्रुवम् । क्रमेण अति-ग्राह्यान् - (१) वीर्याय० इति निर्मन्थ्यः । "प्रतिष्ठायै०" इति मन्त्रेण शुक्रपात्रं माध्यंदिन सवने न प्रातः सवने । "विष्णोर्जठर०" इति मन्त्रेण द्रोणकलशम् । "इन्द्रस्य जठर०" इति मन्त्रेण आधवनीयं । "विश्वेषां देवानां" इति मन्त्रेण पूतभृतम् । ततः "कोऽसि कोनाम०" इति मन्त्रेण राजानमुपतिष्ठते । ततः उन्नेता पूतभृतोबिलि दशापवित्रं वितत्य, आधवनीयस्थं सोममवनीय, दशा-पवित्रेणाधवनीयपृष्ठवोदरस्य, हविर्धानस्य नीडेऽन्यन्वं सादयति । ततः आग्नीध्रः अङ्गारानादाय, आग्नीध्रीयादि तदन्येषु धिष्ण्येषु निधायक्रमेण विहरति ।

---

(१) परिभूरग्निं इत्यारभ्य कोऽसिकोनामपर्यन्तमन्त्रविभागः, तै० सं० ३।२।३ ।

ततः अध्वर्युः प्रचरण्यां नवकृत्वो गृहीत्वा, "विभूरसि०" इत्यादिभिः स्वाहा-
कारान्तैर्मन्त्रैः आग्नीध्रीये हुत्वा, उत्तरस्य हविर्धानस्य कुबेरप्रचरणीं सादयति ।
आग्नीध्रः पृष्ठ्यां शांकवलेन दर्भान् "यज्ञस्य संततिरसि" इति मन्त्रेणास्तृणाति ।

ततः होतुराह्वानं -

---

"होतरेहि" इति । होता आगते सति अध्वर्युः स्वरुं सर्वैकृत्वा, अन्वारब्धः पूर्वां रशनां उद्गृह्य, रशनान्तरेण नाभिदघ्ने परिव्ययन्नाह - "यूपाय परिवीयमाणायानुब्रूहि" इति अध्वर्युरुक्ते सति होता "युवासुवासा०" इत्येतां ऋचं ब्रूयात् । अध्वर्युः "परिवीरसि०" इत्यादि स्वर्वन्तं यूपमुत्सृज्य, आग्नेयं पशुमुपाकरोति । सवनीयेष्टेः तन्त्रं अग्नीषोमीय औपवसथ्यपशुवदनुभवति । तत्र यानि कर्माणि संस्काराश्च विशेषः ते एव अग्रे प्रतिपादयिष्यते ।[१]

अध्वर्युः अग्नीषोमीयवत् होतृवरणान्तं पशुतन्त्रवत् कृत्वा, आश्राव्य यथा - "अश्विनाध्वर्यू आध्वर्यवात् अहं यातौ मानुषौ" इति प्रतिप्रस्थातुर्नाम गृह्णाति । अथ पुनराश्रावयति - मित्रावरुणौ प्रशास्तारौ प्रशास्त्रात् असौ मानुष इति मैत्रावरुणस्य नाम गृह्णाति । पुनराश्राव्य - "इन्द्राग्ना-

---

(१) अथाध्वर्यू रशनाहस्तो यूपमभ्येति । उद्गृह्य पूर्वां रशनां नाभिदघ्ने परिव्ययन्नाह - परिवीयमाणायानुब्रूहीति । स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति । समानं कर्म प्रवरात् । प्रसिद्धं होतारं वृणीते । अथाश्रावयति ओश्रावय, अस्तु श्रौषट् - - - - - - - - - - - - -
नात्वाशैमावैयन्ते, बौ० श्रौ० ७।६ ।

ब्राह्मणाद्" इति ब्राह्मणाच्छंसिनो नाम गृह्णाति । पुनराभाव्य - "मरुतः पोत्राद्" इति पोतुर्नाम गृह्णाति । पुनराभाव्य - "ग्नावो नेष्टाद्" इति नेष्टुर्नाम गृह्णाति । पुनराभाव्य - अग्निराग्नीध्राद् आग्नीध्रो नाम गृह्णाति । ततः होता प्रयाजाहुतीर्जुहोति[१] । होतुः प्रयाजाहुत्यानन्तरं[२] "कृतास्तोमं समश्नुविति" द्विः आहुतयः अध्वर्युर्जुहुतः । अध्वर्युः पुनराभाव्य आह - अग्निर्होत्रीयानां पितां पुरस्तायं पुन्पन्चजानो मनुष्याणां क्षोर-स्पूरि गार्हपत्यं दीव्यन्तं जिनावायुरायांसीत्संपृंचानावसंपृंचनी तन्वः । अत्र निगदात्रनाम्नरणं यष्टुः । प्रयाजाहुतयो यथावेदमितरेषां भवति ।

सवनीयपशोर्वपायागः -

---

ततः अध्वर्युः सवनीयपशोर्वपायागार्थं अग्निमन्थनं करोति । होता अग्निमन्थनमन्त्राः प्रकृतिवत् पठति ।

देवताआवाहने -

---

आज्यभागावावाहय, अग्निमावह, वनस्पतिं॰, इन्द्रं वसुमन्तं॰ ।

---

(१) प्रयाजाहुतीर्जुहवति वषट्कर्तारोऽन्येऽच्छावाकात्॰ । आ॰ श्रौ॰ ५।३।१ । तथैवेतयजमाना आग्नीध्रादेवसदस्यानग्नीन् विहरन्ति॰ । ऐ॰ब्रा॰ २।३६ ।

(२) अथ सवनीयेन पशुना चरन्ति । यद्देवतो भवति । आग्नेयोऽग्निष्टोमे॰ । उपविश्यामि हिंकृत्यपरिव्ययणीयांभि: । आ॰श्रौ॰ ५,३,१,२,३,६,पुन: कृतास्तोमं॰ । पृष्टोदिवि॰ तै॰सं॰३।१।१० । पूर्णमा॰ ३।५।५। तै॰सं॰

इन्द्रं रुद्रवन्तं० । इन्द्रमादित्यवन्तं०, देवां आज्यपां० इत्यादि आवहजातवेदः सुयजायज इत्यन्तं पठेत् । ततो होता मैत्रावरुणमग्रतः कृत्वा, सदः प्रविश्य, पश्चात् स्वस्य धिष्ण्यस्य उपविशेत् । अग्निप्रैषः । तत्र एक पशुत्वात् एकवचन-मूह्य: संज्ञाप्तः पशुः इति श्रुते निरसनोपवेशनेकृत्वा, सुग्रावापनमिदं पठेत् । ततः एकादशप्रयाजयागः । प्राकृतौ आज्यभागौ । ततः आग्नेयवपायागः । अध्वर्युः आश्रावयति[1] । होतायेयजामहे[2] प्रवः शुक्रयमानेवमरभ्वं० इति आग्नेय-वपायाज्यां पठति । सर्वे चात्वाले मार्जयित्वा, अध्वर्युः पयः उपतिष्ठन्ते[3] । सर्वे सदः प्रसर्पन्ति । इति वपायागः ।

सवनीयपशुपुरोडाशयागः - प्रैषः -

अध्वर्युः आग्नीध्रं प्रैष्यति । अग्नीत्पशुपुरोडाशं निर्वपप्रतिप्रस्थातः पशुं विशाधि । आग्नीध्रः - अनुसवनपदौमाध्यंन्दिनसवनीयैः सह पुरोडाशान्नि-

---

(१) आवह देवान्त्सुन्वते यजमानायेत्यावाहनादिसुन्वच्छब्दोऽग्रे यजमान-शब्दादष्टिकेषु निगमेषु । नान्त्यादाशियोजनादूर्ध्वम् । प्रागा-ज्यपेभ्यः सवनदेवता आवाहयेदिन्द्रं वसुमन्तमावहेन्द्रं रुद्रवन्तमावहेन्द्र-मादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्त बृहस्पतिवन्तं विश्वदेव्यावन्त-मावहेति । आ० श्रौ० ५।३।७-१० ।

(२) प्रवः शुक्रायमानवे० ऋ० सं० ७।४।१ ।

(३) चात्वालेमार्जयित्वा० - - - - - - - - - - - - मार्जालीयस्तरमिति । आ० श्रौ० ५।३।१३-१७ ।

(४) आ० श्रौ० ५।३।१८-३० ।

र्वपेत् । प्रातः सवन एव सर्वेषां सवनीयानां निर्वापादो - ऽप्यनीमेव पशु-
पुरोडाशं निर्वपेत् । तत्र हविष्कृन्तौ प्रतिप्रस्थाता, पशुविशसनश्रपणादिकार्यं
शमित्रा सहकारेण शामित्र शालायां कुर्यात्[१] । अध्वर्युर्यजमानं उत्करे[२] स्फ्या-
ग्रावादीन् उपस्थापयति । स्फ्यः 'स्वस्तिर्विघनः स्वस्तिः०' इति मन्त्रेण ।
ततः उभौ आहवनीयं गत्वा, 'नमोऽग्नये मखघ्ने०' इति मन्त्रेण उपतिष्ठन्ते ।
'नमो रुद्राय मखघ्ने०' इति मन्त्रेण आग्नीध्रं, 'नमइन्द्राय मखघ्ने०' इति मन्त्रेण
उपतिष्ठन्तौ होत्रीयमिति । ततःसव्यावृदावृत्य 'दृढेस्थः शिथिरे०' इति
मन्त्रं जपति । दक्षिणावृदावृत्य हस्ताभ्यां द्वार्यैस्थूणे 'देवीद्वारौमामा
सन्ताप्तम्' इति मन्त्रेण सम्मृशति । 'नमः सदसेनमः' इति मन्त्रेण सदः
प्रविश्य, तृणानिरसनोपवेशने कृत्वा उपविशन्ति । प्रशास्तु दक्षिणेयजमानो
ब्रह्मसदस्यौ उद्गाता दक्षिणतउदञ्चः, दक्षिणं द्वार्यामुपोपविश्याध्वर्युरुत्तरां

---

(१) तस्मादनुसवनं पुरोडाशान्निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां
प्राश्नीयात्० ब्रह्मवादिनो वदन्ति - - - - - - - - - - - -
सवनस्य पाङ्क्तत्वम् । तै० सं० ६।५।११ । सोऽब्रवीत् ।
सप्तदशेन क्रियमाणो व्यलेशिष । भिषज्यतेतिमश्विनौ
- - - - - - - - - - - - - - - - - - - -
एतैर्विभिरभिषज्यंस्तस्मादिति, तै० ब्रा० १।५।११ ।

(२) अथ यजमानमुत्करे स्फ्यविघनानुपस्थापयति स्फ्यः स्वस्तिर्विघनः ०
अथ प्राङ्ङावृत्य जपति दृढेस्थः शिथिरे० प्रदक्षिणमावृत्य पूर्वे द्वारौ-
सदसः संमृशति देवीद्वारौ० अथसदः प्रपद्यते नमः० अथ दक्षिणावै
परेत्य आग्नीध्रपिहारः० उदङ्कुंस्थालाया इति । बौ० श्रौ० ७।६-२०
स्फ्यः स्वस्तिर्विघनः इत्यारभ्य मन्त्रविभागः तै० सं० ३।२।४ ।

प्रतिप्रस्थाता, तौ प्रत्यञ्चौ स्तरे प्राञ्चः । "धातं माद्यावापृथिवी अवाहुः" इति मन्त्रेण द्यावापृथिव्यौ प्रेक्ष्य, प्राचीनावीतिनः "आगन्त पितरः पितृमानिति" मन्त्रेण दक्षिणतः प्रेक्ष्य, पुनर्यज्ञोपवीतिनः "तूष्णीं उदक् प्रेक्षन्ते । अध्वर्युः[१] "अग्नीत् सवनीयान् पुरोडाशानाहर" इति आग्नीध्रं प्रेष्यति । आग्नीध्रः पात्र्यां मध्ये प्रागग्रांश्च पन्थोपस्तीर्य मध्ये पुरोडाशं स्थापयति । पुरस्तात् धाना, दक्षिणतः करम्भं, पश्चात् परिवापं, उत्तरत आमिक्षां, इत्युद्वासयति । धाना-उद्वासे "यवानां मेधाः" इति उद्वासनमन्त्रे ऊहः कार्यः । करम्भपरिवापयोः पुरोडाशवत् उद्वासनं कुर्यात् । आमिक्षायाः तूष्णीमुद्वासनम् । ततः "अङ्गु०ष्ठं स्वकमङ्गु०ष्ठं०" इति मन्त्रेण हविषां अभिघारणं कुर्यात् । आमिक्षां सान्नाय्य-वदलं कृत्य, आसाद्य, वाजिनेनोपसिच्य, धानाकपालस्य समन्त्रत्वेप्रत्यञ्चनं क्रियोक-श्चकुर्यात् । ततः कपालानि उद्वास्य हवींष्यादाय, प्राग्द्वारा निष्क्रम्य, सद-आग्नीध्रीयं धिष्ण्यं चोत्तरेण आनीय, अध्वर्यु अभिपरिहरन् अन्तर्वेद्यां सादयति । वाजिनमुत्करे सादयति च । अत्र ब्रह्मयजमानौ उत्तरवेदेः दक्षिणतः उपविशतः । पशोः अनाज्यभागत्वे सह पशुसोमयोः आज्यभागाभ्यां प्रचर्य, जुहूपभृतोः उपस्तृणानः आह - प्रातः प्रातः सावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहि" इति ।

---

(१) संप्रैषान् विदित्वाध्वर्युः सवनीयान् पुरोडाशान् यावत्येव आग्नीध्रो पथेन गार्हपत्यमुपविश्य पन्थोपस्तृणाति मध्यतः ---------- ------------------ अथजुहूपभृतोरुपस्तृणा-नाह प्रातः प्रातः ०, बौ० श्रौ० ७।१२ । अथेन्द्रः पुरोडाशैरनु-सवनं चरन्ति । बा० श्रौ० ५।४।१ ।

अत्र मैत्रावरुणः 'धानावन्तं करंभिणं'[1] मिति अनुवाक्यां पठति । ततः 'मामेमर्षि विश्वाः' इत्यादि मन्त्रेण अवदानम् । धानासु 'मामैष्टं मार्सं॰' इति मन्त्रेण अवदानम्, इतरेषां अविकृतमवदानं गृह्णीयात् । ततः द्विरभिघार्य, अत्याक्रम्य, दक्षिणश्रोण्यां प्राङ्तिष्ठन् आश्राव्याह[2] - 'प्रातः प्रातः सावस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य' इति प्रेष्यति मैत्रावरुणाय । मैत्रावरुणः[3] - होतायक्षदिन्द्रं हरिवां इन्द्रो धाना - - - जुषाणोवेतु होतर्यज' इति प्रेष्यमन्त्रं पठति । होता[4] - ये यजामहे हरिवां इन्द्रो धाना॰' इति याज्यां पठति । अध्वर्युः - होतुर्वषट्कृते अग्निमध्ये जुहोति । यजमानः - इन्द्रायेदं नममेति त्यागः कुर्यात् ।

---

(१) अनुसवनं पुरोडाशान्निरुप्यन्ति॰ इत्यनुसवनं पुरोडाशस्विष्ट-
कृतो यजति । ऐ॰ ब्रा॰ २।२३-२४ । धानावन्तं करम्भिणमिति
प्रातः सवनेऽनुवाक्या । आ॰ श्रौ॰ ५।४२ । धानावन्तं
ऋ॰ सं॰ ३।५२।१ ।

(२) द्विः पुरोडाशस्यावदति॰ अत्याक्रम्याश्राव्याह प्रातः
प्रातः । श्रौ॰ श्रौ॰ ७।१२ ।

(३) होता यक्षदिन्द्रं॰ । खिलम् ५।७।४ (अ)
होता यक्षदिन्द्रं हरिवां इन्द्रो धाना अत्त्विति प्रैषो-
लिङ्गैरनुसवनम्, आ॰ श्रौ॰ ५।४।३ ।

(४) उद्धृत्यापदं तैनैवेज्या । होतायक्षदसौ यक्ष्योस्तुस्थान
आगुर्वषट्कारौ यत्र क्व च प्रैषेण यजेत्, आ॰ श्रौ॰
५।५।४-५ ।

अथस्विष्टकृद्याग:[1] -

अध्वर्यु: - 'अग्नयेनुब्रूहि' इति प्रेषयति ।

मैत्रावरुण: - अग्नेजुषस्वनो० इति स्विष्टकृत् पुरोनुवाक्याम्[2] ।

अध्वर्यु: - आश्राव्य 'अग्नयेप्रेष्य' इति प्रेषयति ।

मैत्रावरुण: - 'होतायक्षदग्निं पुरोडाशानां जुषतां हविर्होतर्यज'[3] इति प्रेषमन्त्रं पठति ।

होता - 'ये यजामहे हविरग्नेवीही वौषट्' इति स्विष्टकृत् याज्यां पठति ।

अध्वर्यु: - होतुर्वषट्कृते उत्तरपूर्वार्द्धे जुहोति ।

यजमान: - अग्नय इदं नममेति त्याग: कर्त्तव्य ।

तत: अध्वर्यु: उदङ्ङत्य, आक्रम्य, संक्षालननिनयन,

---

(१) अथ समावपन्नाह अग्नयेऽनुब्रूहि इति । आश्राव्याह अग्नये प्रेष्य इति । वषट्कृतेउत्तरार्धं पूर्वार्धेऽतिहाय पूर्वाहुतेर्जुहोति । अथोदङ्ङत्याक्रम्य - - - - - - - - - - - - - - - - - - अनुहेके संयन्ति यथा इडेति वदन्त: ।

(२) अथ स्विष्टकृतोऽग्ने जुषस्वनो हवि: । आ० श्रौ० ५।१४।६ । अग्नेजुषस्वनो हवि: ० कृ० सं० ३।२८।१ ।

(३) होतायक्षदग्निं पुरोडाशानामिति प्रैषोहविरग्नेवीहीति याज्या । एतास्वनुवाक्यासु पुरोडाशवच्चं स बहुवेदेके० आ० श्रौ० ५।१४।७-८, होतायक्षदग्निं पुरोडाशानां० खिलत् ५।७४ (उ०) ।

प्राशित्रेडावदानानि कृत्वा, इडां होत्रे प्रदाय, प्रकृतीष्टिवत् इडोपाह्वानं कुर्यात् । इति सवनीयपशुपुरोडाशयागः ।

द्विदेवत्यग्रहप्रचारः[1] -

द्विदेवत्यग्रहप्रचारे वक्ष्यमाणग्रहाः द्विदेवत्यसंज्ञाः भवन्ति । ऐन्द्रवायव मैत्रावरुण आश्विनाग्रहाः, एते सोमपायिनः देवताः । अतः द्विदेवत्यप्रचारे प्रधानद्रव्यं सोम एव भवति । अत्र पुरोनुवाक्या मन्त्रद्वयात्मिका द्विदेवत्यत्वात् । अतः सूक्ता अनुवाक्ये इत्युक्तम् । अध्वर्युः 'वायवइन्द्र-वायुभ्यामनुब्रूहि'[2] इति मैत्रावरुणार्थं प्रेषयति ।

पुरोनुवाक्ये[3] - (१) 'वायवायाहिदर्शत०' । (२) 'इन्द्रवायू-इमेसुता' इति एते द्वे ऋचौ द्वे अनुवाक्ये भवतः, ते च सह अनवानं वक्तव्ये पृथक् प्रणवे च ।

---

(१) द्विदेवत्यैश्चरन्ति । आ० श्रौ० ५।५।१ ।

(२) अथ प्राङ्ग्यन्नाहवायव०, बौ० श्रौ० ७।१२ ।

(३) वायव इन्द्रवायुभ्यां वायवायाहि दर्शतेन्द्रवायूइमेसुता इत्यनुवाक्ये अनवानं पृथक् प्रणवे । आ० श्रौ० ५।५।२ । वायवायाहि-दर्शत० ऋ० सं० १।२।१ । इन्द्रवायूइमे० ऋ० सं० १।२।४ ।

प्रतिप्रस्थाता[१] -

प्रतिप्रस्थाता द्रोणकलशात् परिप्लुतापात्रेण सोमद्रव्यं गृह्णाति । आदित्यस्थाल्यौपशये "उपयामगृहीतोऽसि वायवे०" इति मन्त्रेण गृह्णाति । ऐन्द्रवायवप्रतिनिग्राह्यौ आदाय निष्क्रामति ।

अध्वर्युः -

तस्मात् ग्रहावादाय अपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्यं प्रयच्छति । ततः अध्वर्युः आज्यस्थाल्या स्रुवेणोपहत्य, तिर्यन्चं "अध्वरो यज्ञोऽयमस्तु देवा०" इति मन्त्रेण आघारयति । ततः अध्वर्युः आश्राव्याह - "वायवेन्द्रवायुभ्यां प्रेष्य" इति मैत्रावरुणार्थं प्रेषयति ।

---

(१) तच्छ्रुत्वा प्रतिप्रस्थातैन्द्रवायवस्य प्रतिनिग्राह्यं गृह्णाति द्रोणकलशात् परिप्लुतापात्रेणादित्यस्थाल्या औपशयेपात्रउपयाम० ग्रहावादायोप-निष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युः औ० श्रौ० ७।१२ । ग्रहावादे । उत्तरतस्तिष्ठते० - - - - - स्रुवेणोपहत्येन्द्रवायूग्रमादायाघारमा-धारयन्नित्याश्रावयति० । उपयामगृहीतोऽसि० इत्यारभ्य पितृभ्य-स्त्वा० पर्यन्तमन्त्रविभागः, तै० सं० ३।२।१० ।
ऐन्द्रवायवमादायाघारमाघारयेत् अध्वरो यज्ञो० ।
तै० सं० ३।२।६३ ।
यदेकपात्रा गृह्यन्ते० द्विपात्रा हूयन्ते० । तै० सं० ६।४।६ ।
यद् ग्रहान् जुहोति० तै० ब्रा० १।४।१ ।

मैत्रावरुणः[1] -

होतायक्षद्वायुमग्रेगां होतायक्षदिन्द्रवायौ अर्हन्तेति प्रैषौ अनवानं पठति । अध्वर्युः "यजे" इत्युक्ते होतादिदैवत्ययाज्याभ्यां अनवानमेकागुरे पृथग्वषट्कारैं इति सूत्रवचनानुसारेण पठति ।

तद्यथा - "ये यजामहे अग्रं पिबामधूनां सुतं वायोदिविष्टिषु त्वंहि पूर्वपा असो ३ वौषट् इतेनानो अभिष्टिभिर्नियुत्वां इन्द्रसारथिर्वायो सुतस्यतृंपतां ३ वौषट् इति । अत्र द्विवर्गीयः भवति[2] ।

अध्वर्युः -

होतुर्वषट्कृते अध्वर्युः पूर्वभागे जुहोति । यजमानः - वायवेदं न ममेति त्यागः कुर्यात् । द्वितीयवषट्कारे तथैव जुहोति । यजमानः - इन्द्रवायुभ्यां इदं नममेति त्यागः कुर्यात्[3] ।

---

(१) होतायक्षद्वायुमग्रेगां होतायक्षदिन्द्रवायू अर्हन्तेति प्रैषावनवानम् । सितम् ५।७।४(१) । नि०कु०प्रै०ब०,पृ०सं० २०क्र०३७ । आ०श्रौ०५।५।३ ।

(२) अग्रंपिबमधूनामिति याज्ये अनवानमेकागुरे पृथग्वषटकारे । इदमायनवानं प्रातःसवन इज्यानुवाक्ये । आ० श्रौ० ५।५।४-५ । अग्रंपिबामधूनां० ऋ० सं० ५।४६।१-२ ।

(३) वषट्कृतेऽध्वर्युः पूर्वीजुहोति द्वितीयं वषट्कृतेऽसहोमौ जुहुतो हुत्वा वाचयति योन इन्द्रवायू० । बौ० श्रौ० ७।१२ । योनइन्द्रवायू० तै० सं० ३।२।१० ।

ततः अध्वर्युः "योनङ्कद्वयायू अभिदासति०" इति मन्त्रं यजमानं वाचयति । प्रतिप्रस्थाता - अध्वर्योः पात्रे ग्रहसंस्रावं अवनयति । अध्वर्युः - प्रतिप्रस्थातृ-पात्रे तथैव अवनयति । प्रतिप्रस्थाता दक्षिणेनाध्वर्युं पात्रं परिहृत्य, "दैवेभ्यस्त्वे" ति मन्त्रेण आदित्यस्थाल्यां अवनयति । अध्वर्युः स्वं पात्रं दक्षिणेन प्रतिप्रस्थातारं परिहृत्य, उत्तरेण हविर्धानं गत्वा, हौत्रपात्रं ददाति[१] । ततः होता "दैत्तक्रतुः पुरुक्रतुः" इति मन्त्रेण ऐन्द्रवायवग्रहं गृहीत्वा, दक्षिणमूरुमपोच्छाय, तस्मिन् सादयित्वाकाशवतीभिरङ्गुलीभिरित्थं मुखेन[२] पाणिना अपिदध्यात् । अध्वर्युः मैत्रावरुणग्रहप्रचारार्थं "मित्रावरुणाभ्या-[३]मनुब्रूहि" इति मैत्रावरुणाय प्रेष्यति ।

मैत्रावरुणः -
---

"अयं वां मित्रावरुणासुत०" इति अनुवाक्यां पठति प्रतिप्रस्थाता -

---

(१) अथ प्रतिप्रस्थाताध्वर्योः पात्रग्रहस्य संस्रावमवनयति । उभयोरेवमध्वर्युः हौत्रपात्रं प्रदाय । बौ० श्रौ० ७।१२ । प्रेष्योचरयोर्ग्रहयोः । हुत्वैतत् ग्रहपात्रमाहरत्यध्वर्युः, आ० श्रौ० ५।५।६-७ ।

(२) तद् गृह्णीयाद्दैत्तक्रतुः पुरुक्रतुरिति । प्रतिगृह्यदक्षिणमूरुमपोच्छाय तस्मिन् सादयित्वाऽकाशवतीभिरङ्गुलीभिरपिदध्यात् । एवमुत्तरे । सव्येनत्वापिधायतयोः प्रतिग्रहोः भक्षणं च, आ० श्रौ० ५।५।८-११ ।

(३) बौ० श्रौ० ७।१२ ।

"उपयामगृहीतोऽसि०"[1] इति मन्त्रेण पूर्ववत् पात्रे सोमं गृह्णाति, तं आदाय निष्क्रामति । अध्वर्युः - तद्धस्तादादाय पूर्ववत् प्रतिप्रस्थात्रे प्रदाय, आनाय्याह - "मित्रावरुणाभ्यां प्रेष्य" इति प्रेषयति[2] । मैत्रावरुणः - होतायक्षन्मित्रा-वरुणा०"[3] इति प्रैषमन्त्रं पठति ।

होता[4] - "ये यजामहे गृणानाजमदग्निना०" इति याज्यां पठति । अध्वर्युः - ऐन्द्रवायवग्रहवत् संग्रहणादिकं कृत्वा, पात्रं होत्रे प्रयच्छति । होता - "रेतुवसुर्विदद्वसुः" इति मन्त्रेण मैत्रावरुणग्रहं होता गृह्णाति, पूर्ववत् आसादयति[5] ।

प्रतिप्रस्थाता - पुनः पूर्ववत् परिप्लुना द्रोणकलशात् ग्रहं पूरयति पूर्ववत् उदङ्कृत्य, अध्वर्युस्तिष्ठन् "अश्विभ्यामनुब्रूहि" इति प्रैषयति[6(अ)] ।

---

(१) मैत्रावरुणस्यायं वां मित्रावरुणा होतायक्षन् मित्रावरुणा । अयं वां मित्रावरुणा० ऋ० सं० २।४१।४ । आ०श्रौ० ५।५।१२ ।

(२) तच्छ्रुत्वा प्रतिप्रस्थाता मैत्रावरुणस्य० मित्रावरुणाभ्यां प्रेष्य । बौ० श्रौ० ७।१२ ।

(३) होतायक्षन् मित्रावरुणा० होतर्यज । खिलम् ५।७।४ (बौ) शि० कु० प्रै० च० पृ० २९,३६ ।

(४) गृणाना जमदग्निनेति । आ०श्रौ० ५।५।१२ । ऋ०सं० ३।६२।१८ ।

(५) रेतुवसुर्विदद्वसुरिति प्रतिगृह्य दक्षिणेनैन्द्रवायवं हुत्वाऽस्यात्मं सादनम् । आ० श्रौ० ५।५।१२ ।

(६) बौ० श्रौ० ७।१२ ।

(अ) अश्विभ्यामनुब्रूहि । अश्विभ्यां प्रेष्य ।

मैत्रावरुण: -

"प्रातर्युजाविबोधय०"[1(अ)] इति पुरोनुवाक्यां पठति ।

अध्वर्यु: -

पूर्ववत् प्रतिप्रस्थातुर्ग्रहं प्रदाय, आश्राव्याह - "अश्विभ्यां प्रेष्य" इति ।

मैत्रावरुण: -

"होतायक्षदश्विनासत्या०"[1(ब)] इति अश्विदैवताकं प्रैषमन्त्रं पठति ।

होता -

ये यजामहे "वायुवानाशुमस्पती०"[2] इति याज्यां पठति । वषट्कृते

---

(1) अ- आश्विनस्य प्रातर्युजाविबोधय होतायक्षदश्विनासत्या ।
प्रातर्युजाविबोधय० ऋ० सं० १।२२।१ । आ० श्रौ० ५।५।१२ ।
ब - होतायक्षदश्विना नासत्यादोष्यग्नो० - - - पिबेतां सोमं
होतर्यज । शिक्षा ५।७।४ (श्रौ०) निषङ्कुब्रै०४०,पृ०२१ नं० ४० ।

(2) वायुवानाशुमस्पती इत्येतु बसु: संवसुरिति - - - सादनम् ।
वायुवानाशुमस्पती० ऋ० सं० ८।५।११ । आ० श्रौ० ५।५।१२ ।
तस्य हैतस्यैन्द्र वायवस्याप्येकेऽनुष्टुभौ पुरोनुवाक्ये कुर्वन्ति गायत्र्यौ
याज्ये० तत्तथाहत्यम्० वायव्यापूर्वा पुरोनुवाक्यैन्द्र वायव्युत्तरा । एवं
याज्ययो: येनैवाध्वर्युर्ग्रहं प्रयच्छति तेन होता गृह्णाति० अनवानं
द्विदैवत्यान् यजेत्० - - - होतुरासु: । ऐ० ब्रा० ३।२६-२८ ।

सह जुहुतः । यजमानः - अश्विभ्यामिदं नममेति त्यागः कुर्यात् । ततः -
अध्वर्युः पूर्ववत् यजमानं वाचयति अवनयति च । अध्वर्युः पूर्ववदेव आश्विनग्रहपात्रं
होत्रे प्रयच्छति । होता - "ऐतुवसुर्वसुः" इति मन्त्रेण होताश्विनग्रहं ।
गृह्णात्याखादयति च पूर्ववत् ।

शुक्रामन्थिप्रचारः[१] -

-----------------

अध्वर्युः चमसेषु उन्नीयमानेभ्यः सोमेभ्यः उन्नयनार्थं "उन्नीय-
मानेभ्योऽनुब्रूहि होतुश्चमसमनून्नयध्वमुन्नयतः - शुक्रान् कुरुध्वमच्छावाकस्य
चमसाध्वर्यो मा तुत्स्वनुन्नेष्ठाः प्रतिप्रस्थातः मन्थिना शक्तैः प्रोक्षिता प्रेषितैः

-----------------------------------------

(१) अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाक्रम्य होत्रपात्रं प्रदाय प्राङ्ङायन्ना-
होन्नीयमानेभ्योऽनुब्रूहि० यथा सम्प्रेषं ते कुर्वन्ति० तौ पश्चेनोत्तरवेदिं
ग्रहौ संधत्त आयुः संधत्तं षड्भिः संधाभिः संधाय व्युत्क्रामतस्तुतोऽसि
जनधा० तौ पुरस्तात् प्रत्यञ्चावुत्तरवेदिमभिद्रवत इन्द्रेण स्युनौ० अथान्तरेण
यूपं चाहवनीयं च ग्रहौ संधत्त आयुरस्य आयुर्मे धत्त० तौ देवौ शुक्रामन्थिनौ

- - - - - - - - - - - - - - - - - - - - - -

मनसाध्यायति । अथाप उपस्पृश्य प्रोक्षितावभ्यायतः शुक्रेषा ते०
बौ० श्रौ० ७।१३-१४ । आयुः संधत्त० इत्यारभ्य निरस्तौ मर्कः
इत्यन्तं मन्त्रविभागः ।

- तै० ब्रा० १।१।१ ।

प्रत्युपलभ्यस्वेति" इति प्रेषयति । प्रतिप्रस्थाता चतुरः शकलानादाय, द्वौ प्रोक्षति, प्रोक्षिताप्रोक्षितौ द्वौ अध्वर्यवे प्रयच्छति । शुक्रमध्वर्युरादत्ते, मन्थिनं प्रतिप्रस्थाता । प्रोक्षिताभ्यां दक्षिणेनापि दधतौ प्रोक्षिताभ्यां सव्येनो-पयच्छते । दक्षिणमध्वर्युरविहुं निःश्वमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता जघनेन उत्तरवेदिं - "वायुः सपदं तन्वैमिन्धत०" इति मन्त्रेण ग्रहौ सन्धत्तः ।

ततः अध्वर्युः "स्तुतोसि जनधा देवास्त्वे"ति मन्त्रेण दक्षिणोत्तर-वेदिं परिक्रामति । तेनैव मन्त्रेण प्रतिप्रस्थाता "शुक्रा" स्थाने "मन्थिनः" इत्यूहं कृत्वा मन्त्रं पठति, मन्त्रान्ते उत्तरेणोत्तरवेदिं तौ पुरस्तात् प्रत्यञ्चौ "इन्द्रेण सयुजो वयं०"[क] मिति मन्त्रेण उत्तरवेदिमारोहतः । तथा च "आयुस्थ आयुर्मेयज्ञायुर्यज्ञाय०" इति मन्त्रेण जघनेन यूपं ग्रहौ संधत्तः । ततः "तौ देवौ शुक्रामन्थिनौ कल्पयतं०" इति अवरोहतः । अध्वर्युः यजमानस्य पाप्मानं मनसा ध्यायन् "निरस्तः शण्डः सह पाप्मना०" इति मन्त्रं पठेत् । तथैव प्रतिप्रस्थाता "निरस्तो मर्कः सहपाप्मना०" इति मन्त्रं पठति । अपउपस्पृशेति ।

शुक्राहुतिः -

"शुक्रंपातिसमिश्यासमिव्यस्वस्वाहे"ति अध्वर्युः शुक्राहुतिर्ददाति ।

---

(क) इन्द्रेणसयुजो० तै० सं० ३।५।३ । द्वे शुक्रतोप्रातः सवनं च माध्यं दिनं च तै० सं० ६।१६ । अपनुत्तौ शण्डामर्कौ सहामुना० - - - - - - - - - - - - - - - - तस्मान्नातनुते० तै० सं० ६।४।१० ।

यथा दैवतं त्यागः ।

मन्थिग्रहाहुतिः[1] -

"मन्थिन्नेष तेसमिश्रासमिश्यस्वस्वाहे" ति प्रतिप्रस्थातामन्थि-
ग्रहाहुतिर्ददाति । यथादैवतं त्यागः । अत्र चमसिनः चमसानुपोपच्छन्ते ।
अत्र होता "आ त्वावहन्तु वृषणो०"[2] इत्युन्नीयमानासूक्तमनुब्रूयात् । अध्वर्युः
पुरस्तात् प्रत्यङ्०तिष्ठन् आनाश्याह[3] - प्रशत: प्रातःसावस्य शुक्रवतो मन्थिवतो-
मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य" इति मैत्रावरुणाय प्रेषयति ।

होत्रकाणां प्रस्थितयाज्याः[4] - मैत्रावरुणः - "होतायक्षदिन्द्रं

---

(१) मन्थिनेषा ते समिश्या समिश्य स्वस्वाहेति प्रतिप्रस्थाते तस्मिन् कालेचमसाध्वर्यवश्चमसानुपोपच्छन्ते । बौ० श्रौ० ७।१४ ।

(२) आत्वावहन्त्विहरय इति प्रातःसवन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मदवतीरूपसमृद्धाः । ऐन्द्रीरन्वाह० - - - - - - - - - - - - - - - - - - - - - - - इत्युक्तान्यनुब्रूयात् । ऐ० ब्रा० ६।६ । उन्नीयमानेभ्योऽन्वाहाऽऽत्वावहन्त्व सा यिदेवमिहो- पयासित्यनुसवनं । आत्वावहन्त्विहरयोवृषणं ऋ०सं०१।१६।१६-६। आ० श्रौ० ५।५।१४ ।

(३) बौ० श्रौ० ७।१४ ।

(४) होतायक्षदिन्द्रं प्रातः प्रातःसावस्य० । नामादेशमितरे । प्रशास्ता- ब्राह्मणाच्छंसी पोतानेष्टाऽग्नीध्रः । अच्छावाकश्च । इदं ते सोम्यं मधुमिश्रं वयं हवामहे इन्द्रत्वावृषभं वयं मरुतीयस्यहिहायेऽग्नेपत्नी- [illegible] । सवनिक्यः प्रस्थितयाज्याः

प्रातः प्रातः सावस्य०[१] इति प्रैषमन्त्रपाठं करोति ।

होता -

ये यजामहे "इदं ते सोम्यं मध्वधुक्षन्०" इति प्रस्थितयाज्यां पठति । अत्र अनुवषट्कारान्ता याज्या भवति । होतुर्वषट्कृते प्रत्यन्वौ तत् "स प्रथमः[२] संकृतिर्विश्वकर्मा०" इति मन्त्रेण उभौ जुहुतः । अनुवषट्कृते च तथैव जुहोति । यजमानः - अग्नये स्विष्टकृत इदं नममेति त्यागः कुर्यात् ।

ततः[३] चमसिनः द्विर्द्विश्चमसान् जुह्वति । ततः प्रतिप्रस्थातः

---

पूर्वपृष्ठस्याग्रे---------

आ०श्रौ० ५।५।१५-१७,१८ । इन्द्रत्वावृषभं वयमिति ब्राह्मणाच्छंसी०-। मित्रंवयं हवामहे इति मैत्रावरुणीयजति० मरुतीयस्य हि क्षय इति पोता यजति० अग्नेपत्नीरिहावहेतिनेष्टा यजति० उक्षान्नाय वशान्नायेत्याग्नीध्री यजति० ऐ० ब्रा० ६।१० ।

(१) होतायक्षदिन्द्रं प्रातः प्रातः सावस्य० होतृयंज । नि०कु०प्रौ०प० पृ० ५१ शिक्षु ५।७४ (अ) । इदं ते सोम्यं० ऋ०सं० ८।६५।८ । इदं ते सोम्यं मध्विति होता यजति । ऐ० ब्रा० ६।१० ।

(२) वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिः । का० श्रौ० ७।१४ । स प्रथमः संकृतिः तै० ब्रा० १।१।१ ।

(३) तथैव द्विर्द्विः सर्वांश्चमसान्जुह्वत्यथसप्रैषमाह प्रैतुहोतुश्चमसः प्रब्रह्मणः० अथ प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति० अथप्रतिप्रस्थातो-त्तरार्धे आहवनीयस्य मन्थिनः संस्रावं जुहोत्येषणवै रुद्रभागः० बौ०श्रौ० ७।१४ । एषते रुद्रभागोयं० - - - न ततरुद्रः पशूनभिमन्यते । तै०सं० ३।१।६ । यच्चमसान् जुहोति० । तै० ब्रा० १।४।१।३ ।

उत्तरार्धेआहवनीयस्य मन्थिनः संस्रावं जुहुधि, प्रदक्षिणमावृत्य होतृचमसे शुक्रसंस्रावमवनयति । प्रतिप्रस्थातोत्तरतउपविश्य, अध्वर्युः उत्तरार्धे आहवनीयस्य "एषते रुद्रभागोयं०" इति मन्त्रेण मन्थिसंस्रावं जुहोति । यजमानः - रुद्रायेदं नममेति त्यागः कुर्यात् । ततः अपउपस्पर्शनं कृत्वा, यथायतनं प्रत्याधावन्तः । होत्रकाणां[1] चमसाध्वर्यवः महर्त्विजां चमसांश्च पृथक् पृथक् द्रोणकलशात् अभ्युन्नीय उपावर्तन्ते । तेषां चमसां मध्ये मैत्रावरुण चमसमादाय, आश्राव्याह - "प्रशास्तर्यज" इति प्रेषयति । होता - "होतायक्षन्मित्रावरुणा०" इति प्रेषमन्त्रं पठति ।

मैत्रावरुणः[2] -
---

"ये यजामहे मित्रं वयं हवामहे०" इति स्वां याज्यां सः अनुवषट्कारसहितां मैत्रावरुणः पठेत् । एवं वषट्कृतानु वषट्कृते द्विर्जुहोतीति शेषम् ॥ तथैव द्विर्गौणः इति । अध्वर्युः - आश्राव्याह[3] - ब्राह्मणाच्छंसिन्यज इति ।

मैत्रावरुणः -
---

"होतायक्षदिन्द्रो ब्रह्म०[4]" इति प्रेषमन्त्रं पठति ।

---

(१) अन्वैते महर्त्विजां चमसा० - - - - - - - - - मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यज । कौ० सौ० ७।२४ ।
(२) होतायक्षन्मित्रावरुणा० प्रशास्तर्यज । नि०कु०प्रै०च०पृ० २२।४७ ।
(३) मित्रं वयं हवामहे० ऋ०सं० १।२३।४ ।
(४) ब्रह्मन्यज, पोतर्यजनेष्टर्यजाग्नीध्रयजेतिपञ्चहोतारः संयाज्य, कौ०सौ० ७।२४ ।

ब्राह्मणाच्छंसि - [1]इन्द्रत्वावृषभं वयं० इति याज्या पठति सानुवषट्कृतां
वषट्कृते जुहोत्यध्वर्युः । अध्वर्युः - पोतुः प्रैषार्थं मैत्रावरुणाय प्रेष्यति ।
मैत्रावरुणः - होतायक्षद्[2]देवं द्रविणोदां० इति प्रैषमन्त्रं पठति । पोता -
[3]मरुतो यस्यहि क्षये० इति आगूपूर्वकं स्वां प्रस्थित याज्यां सानुवषट्कृतां
पठति । वषट्कृते पूर्ववत् जुहोत्यध्वर्युरिति ।

अध्वर्युः - मैत्रावरुणाय नेष्टुः प्रैषार्थं प्रेष्यति । मैत्रावरुणः - होता-
यक्षद्देवं[4] द्रविणोदां नेष्ट्रादृतुभिः० इति प्रैषमन्त्रं पठति । नेष्टा - [5]अग्नेपत्नी-
रिहावह० इति स्वां प्रस्थितयाज्यां सानुवषट्कृतां पठति । वषट्कृते पूर्ववत्
जुहोत्यध्वर्युरिति । अध्वर्युः - आग्नीध्रार्थं मैत्रावरुणाय प्रैषं ददाति ।
मैत्रावरुणः[6] - होतायक्षदग्निमाग्नीध्राद् ऋतुना० इति प्रैषमन्त्रं पठति ।
आग्नीध्रः[7] - उक्षान्नायवशान्नाय० इति स्वां प्रस्थितयाज्यां सानुवषट्-
कृतां पठति । वषट्कृते जुहोति । इति पञ्चहोत्रकाणां प्रस्थित याज्याः ।

---

(१) होतायक्षदिन्द्रो० ब्रह्मन्यजा नि० कु० प्रै० च०, पृ० २२, ४६ ।
(२) इन्द्रत्वा वृषभं वयं० ऋ० सं० ३।४०।१ ।
(३) होतायक्षद्देवं द्रविणोदां० पोत्रर्यज । नि० कु० प्रै० च०, पृ० २२,४९ ।
(४) मरुतो यस्य हि क्षये० ऋ० सं० १।८६।१ ।
(५) होतायक्षद्देवं० सोमं पिबतु नेष्ट्रयंज, नि० कु० प्रै० च०, पृ० २२,५० ।
(६) अग्नेपत्नीरिहावह० ऋ० सं० १।२२।९ ।
(७) होतायक्षदग्निमाग्नीध्रादृतुनासोमं पिबत्वग्नीध्रज,
नि० कु० प्रै० च० २२।४५ ।
उक्षान्नायवशान्नाय, ऋ० सं० ८।४३।११ ।

ततः अध्वर्युः[1] प्रदक्षिणमावृत्य, प्रत्यङ्ङावृत्य, अग्रेण होतारं उपविश्य, अत्र होता आगच्छन्तमध्वर्युं 'अयाडग्नीत्' इति पृच्छति ? अध्वर्युः 'अयाट्' इत्युत्तरं ददाति । होता - 'सम्झमग्नीनः सोमस्य पाययिष्यति' इति मन्त्रं जपति ।

प्रातः सवनात द्विदैवत्य ग्रहोपाख्यानम्[2] -

---

होता ऐन्द्रवायवग्रहं दक्षिणेन हस्तेन उपरभागे गृहीत्वा, अध्वर्यु

---

(१) प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्याग्रेण होतारमुपविशत्ययाडग्नीदिति सम्झकरित्याह होता०, शां० श्रौ० ७।१४ । इत्यध्वर्युः । अयाडग्नी-दिति पृच्छति । अयाडिति प्रत्याह । सम्झमग्नीनः सोमस्य पाय-यिष्यतीति होता जपति, आ० श्रौ० ५।५।२७-३० ।

(२) अथ होतादत्त ऐन्द्रवायवपात्रमादायाध्वर्युरन्वारभेत० तद्धोतायथायतनं सादयति । अथ होतादत्ते मैत्रावरुणपात्रं० तद्धोतायथायतनं सादयत्यथ होतादत्त आश्विनपात्रं० यथायतनं सादयति, शां०श्रौ० ७।१४ । मयिवसुः पुरोवसुर्वाक्पा वाचं मे पाहि । मायिवसुर्विदद्वसुः, मयिवसुर्संयद्वसुः, तै०सं० ३।२।१० । पुरस्तादैन्द्रवायवं भक्षयति० पुरस्तात् मैत्रावरुणम्० सर्वतः परिहारमाश्विनम् । तै० सं० ६।४।६ । ऐन्द्रवायवमुत्तरेऽर्धे गृहीत्वाऽ हस्ते प्राणाभक्षैः० इत्यारभ्य आश्विनं यथाहूतम् इत्यन्तमसूत्रः । आ० श्रौ० ५।५।१-१२ । एषवसुः पुरुवसुरिहवसुः पुरुवसुर्मयिवसु-र्वाक्पा वाचं मे पाहि इत्यैन्द्रवायवं भक्षयतीति - - - - - - - तपोजाः इति पुरस्तात् प्रत्यञ्चमैन्द्रवायवं भक्षयति० पुरस्तात् प्रत्यञ्चं मैत्रावरुणं भक्षयति० सर्वतः परिहारमाश्विनं भक्षयति० । ऐ०ब्रा० २।२७ । द्विदैवत्यानां संस्रवान् होतृचमसे समवनयति, ऐ० ब्रा० २।३० ।

प्रणमेत् । ततः अध्वर्युरपि "इषवसुः पुरुवसुः" इति मन्त्रेण होतारं प्रणमेत् ।

उपाह्वानम् -

प्रथमः होता अध्वर्युमुद्दिश्य, "अध्वर्य उपह्वयस्व" इत्युक्त्वा नासिकाभ्यां अवघ्राय "वाग् देवी सोमस्य तृप्यतु" इति मन्त्रेण तं सोमं स्वयं भक्षयेत् ।

अध्वर्युं होतारमुद्दिश्य "होतरुपह्वयस्व" इत्युक्ते होता "उपहूतः" इति वदेत् । एवमेव सर्वत्र उपह्वयस्व इत्युक्ते "उपहूतः" इति प्रतिवचनं भवति । अत्र भक्षणं द्विवारं भवति । ततः होता अध्वर्य उपह्वयस्व, प्रतिप्रस्थातरुपह्वयस्व, इत्यध्वर्युप्रतिप्रस्थातृभ्यां प्रतिभाषिते शेषं होतृचमसमानीय तद् पात्रमुत्सृजेत् अत्र भक्षणे भक्षणनिमित्तानुचित्त निवर्हणाय प्रवक्तमावनमकृत्वा, उपह्वादि कर्तव्यम् । सोमभावन प्रतिषेधः सोमभक्षणे अनुचित्वाभावादुक्त इति । होतुः सोमभक्षणमन्त्रः - "इषवसुः पुरुवसु०" रिति । अध्वर्युभ्यां भक्षणमन्त्रः - "मयिवसुः पुरोवसुर्वाक्पा वाचं मे पाहि" इति । ततः पूर्ववत् प्रतिप्रस्थाता मैत्रावरुणग्रहमानीय तं यथायतनं सादयित्वा, अध्वर्युभ्यां अन्वारब्ध मैत्रावरुणग्रहं तौ (अध्वर्यु होतारौ ) परस्परमुपहूय भक्षयति ।

अध्वर्युः - अन्वारब्धं होतारं प्रतिप्रस्थातारं चोपहूय, चक्षुर्णोरुपनिघ्राय "मयिवसुर्विदद्वसु" रिति मन्त्रेण भक्षयति । प्रतिप्रस्थाता -

होतारमध्वर्युर्वोपहूय 'मयि वसु' रिति मन्त्रेण भक्षयति । होतारं ग्रहं यथायतनं सादयेत् । होता - पुनः तृतीयमाश्विनग्रहं अन्वारभ्य अध्वर्युं प्रतिप्रस्थातारं चोपहूय भक्षयति । अध्वर्युः - अन्वारब्धं होतारं प्रतिप्रस्थातारं च उपहूय, गोऽश्वौ रूपनिघ्राय शिरः पर्याहृत्य 'मयि वसुः संयद्वसु' रिति मन्त्रेण अध्वर्युः भक्षयति ।

प्रतिप्रस्थाता - होत्रध्वर्यू उपहूय अध्वर्युवत् तथैव मन्त्रेण जपित्वा-भक्षयति । होता तं यथायतनं सादयत्यप उपस्पृशति । अत्र मैत्रावरुणाश्विनौः ग्रहपात्रे भवतः नत्वे तयोः पुनर्भक्षो भवति ।

सवनीयेडोपाह्वानम्[1] -

अथ उपस्पृश्य, पवमानादि इडामुपोपह्वयन्ते । अत्र होतृचमसमिडा-स्पृष्टमुपोपह्वयति । 'वाचस्पतिनातिकृतस्यैर्यो' इत्यादि निगदपाठः । अत्र निगदे 'उपहूतोयं युञ्जन् यजमानीय यजस्यागुर उत्तमगोऽयेति तस्मिन्नुपहूतः'

---

(१) द्विदेवत्यान् भक्षयित्वेडामुपह्वयते० अतिरिक्तानि पात्राणि
सादयति० दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयति०
आ तृतीयसवनात् परिशेरे० ।
द्विदेवत्यान् भक्षयित्वेडामुपह्वयते० ऐ० ब्रा० २।३० । अथाप-
उपस्पृश्य होतृचमसमिडामुपोपह्वयन्ते० - - - - - - - - - - -
तान्या तृतीयसवनात् परिशेरेऽथाग्नीयजादपाति चमसं प्राश्न-
न्ति भावयन्त, बौ० श्रौ० ७।१४-१५, आ० श्रौ० ५।६।१२-३० ।

इति इडामुपहूय, अवान्तरेडां प्राश्य, इडामदनमकृत्वैव, आचम्य चमसं भक्षयेत् । उपहूयमानायामिडायामुपांशुग्रहणमिति । स्वस्य चमसात् उपहूतायां इडायां ऐन्द्रवायवे इडातः पुरोडाशशकलं, आमिक्षां मैत्रावरुणे धाना-आश्विने, प्राश्य, पूर्वद्वारोपनिष्कृत्य अपरद्वारा हविर्धानं प्रपाद्य, दक्षिणहविर्धानोत्तरवर्त्मन्यां इडां सादयित्वा, आग्नीध्रे षडवत्तं दत्वा, अच्छावाकशकलं निधाय, इडां प्राश्यमार्जयित्वा, प्राशित्रं परिहृत्य, तूष्णीं आमिक्षां शाखापवित्रं च प्रहृत्येति ।

शुक्रप्रचारः -

अध्वर्युः दक्षिणशुक्रपात्रं, प्रतिप्रस्थाताऽपरमुत्तरपात्रमादत्ते । अध्वर्युः परिप्लवपात्रेण द्रोणकलशात् "उपयामगृहीतोऽसि मर्केत्वाजुष्टं गृह्णामि" इति मन्त्रेण सौम्यग्रहं गृह्णाति । ततः प्रतिप्रस्थाता "उपयामगृहीतोऽसि मार्कायत्वा जुष्टं गृह्णामि" इति मन्त्रेण तथैव गृह्णाति । ततः अध्वर्युः - दक्षिणद्वारबाहुं संस्पृश्य, निष्क्रामति । प्रतिप्रस्थाता उत्तरद्वारबाहुं संस्पृश्य हविर्धाने तिष्ठति । शुक्रहेषु होमार्थं गच्छन्तं आगच्छन्तं चाध्वर्युं दक्षिणेन स्वपात्रं परिगृह्णाति, अध्वर्युः - प्रतिप्रस्थातारम् । अध्वर्युः आगमयति, मैत्रावरुणाय "शुक्राप्रैष्य" इति प्रेषयति ।[1]

---

(१) शुक्रावैश्वरन्ति, का० श्रौ० ५।८।१ ।
यत्शुक्रा गृह्यन्ते० यावत्गृह्यन्ते० सह प्रथमौ गृह्येते सहोत्कौ० उपयतो-

——————अग्रिमपृष्ठेऽपि

मैत्रावरुणः[२] -

"होतायक्षदिन्द्रं होत्रात्सजुर्दिवं वा पृथिव्याऋतुना सोमं पिबतु होतर्यज इति प्रैषमन्त्र पाठं करोति ।

होतुऋतुयाज्या -

ये यजामहे इन्द्रं होत्रात्सजुर्दिवं वा पृथिव्या ऋतुना पिबतु ३ वौषट्

---

मुखमृतुपात्रं भवति० ऋतुनाप्रेष्य इति षड् कृत्वआह० ऋतुभिः इति चतुः० द्विः पुनः ऋतुना आह नान्योऽन्यमनु प्रपद्येत० प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्रपद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेण, तै० सं० ६।५।३, अर्थ तु पात्रे आददाते दक्षिणमेवाध्वर्युरुत्तरं प्रतिप्रस्थाता । अध्वर्युः पूर्वो वायव्येन द्रोण-कलशाद् गृह्णाति उपयाम० मधवेत्वा जुष्टं गृह्णामीत्यत्र प्रतिप्रस्थाता गृह्णात्युपयामगृहीतोसि माधवायत्वा जुष्टं गृह्णामीति प्रत्यावादा-यीप निष्क्रामतोदक्षिणमेवाध्वर्युर्हविर्धानं क्रियमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाताहविर्धानं क्रियमाण उपसृत्याध्वर्युराश्राव्यत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति वषट्कृते जुहोति निष्क्रामत्येव प्रतिप्रस्थाता प्रपद्यते-ध्वर्युः च - - - वषट्कृते सहोभौ जुहुतो, बौ०श्रौ०७।१६ । मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च । उपयामगृहीतोऽसि संसर्पोस्यंहस्पत्यायत्वा, तै०सं०१।४।१४

(२) होतायक्षदिन्द्रमित्यारभ्य होतायक्षदग्निं गृहपतिं इत्यन्तं द्वादश-ऋतुप्रैषाः । खिलम् ५, ७,६ । नि०कु०प्रै०क०पृ० सं० २१-२३, तेषां प्रैषाः । पञ्चमं प्रैषसूक्तम् । आ०श्रौ० ५।८।२-३ । प्रै० सं० ४२-५३ ।

इति याज्या पठति । होतुर्वषट्कृते अध्वर्युः सोमं जुहोति [1] । यजमानः - इन्द्रायमरुत्वत इदं नममेति त्यागः कुर्यात् । ततः प्रतिप्रस्थाता होमार्थं प्रपद्यते । अध्वर्युः "उपयामगृहीतोऽसि" इति मन्त्रेण पूर्ववत् सोमग्रहणं करोति । प्रतिप्रस्थाता - अत्याक्रम्य, आश्राव्याह - "ऋतुना प्रेष्य" इति । मैत्रावरुणः - होतायक्षन्मरुतः पोत्रात् सुष्टुभः स्वर्कादृतुनासोमं पिबतु पोतर्यज । पोतुर्याज्या - ये ३ यजामहे मरुतः पोत्रात् सुष्टुभः स्वर्कादृतुना सोमं पिबतु ३ वौषट् । इति पोता याज्या पठति । पोतुर्वषट्कृते प्रतिप्रस्थाता जुहोति । यजमानः - मरुद्भ्यो माधवायेदं नममेति त्यागः । ततः निष्क्रम्याध्वर्युः, प्रतिप्रस्थाताप्रपद्यते, स गृह्णाति "उपयामगृहीतोऽसि" इति मन्त्रेण । अध्वर्युः - आश्राव्याह - "ऋतुनाप्रेष्य" इति । मैत्रावरुणः - "होतायक्षत् ग्नावीर्नेष्ट्रा त्वष्टा सुजनिमासजूर्देवानां पत्नीभिर्ऋतुना सोमं पिबतु नेष्टर्यज ।

नेष्टा -
---

ये यजामहेग्नावीर्नेष्ट्रा त्वष्टा सुजनिमासजूर्देवानां पत्नीभिर्ऋतुना सोमं पिबतु नेष्टर्यं वौषट्" इति नेष्टुः याज्या पठति । नेष्टुर्वषट्कृते अध्वर्युः जुहोति । यजमानः त्वष्ट्रे शुक्रायेदं नममेति त्यागः । ततः निष्क्रामति प्रति-

---

(१) द्वादशऋतुयाज्याः "तेन तेनैव प्रेषितः प्रेषितः स स यथाक्रमं यजति" आश्वलायनसूत्रानुसारेण क्रमेण भवन्ति, आ०श्रौ०५।८।४ ।

प्रस्थाता, अध्वर्युः प्रपद्यते स पूर्ववत् "उप० नमायत्वाजुष्टं०" इति मन्त्रेण गृह्णाति । प्रतिप्रस्थाता - आश्राव्याह - "ऋतुनाप्रेष्य इति मैत्रावरुणः - "होतायक्षदग्निमाग्नीध्रादृतुनासोमं पिबत्वग्नीधः" इति प्रैषमन्त्रपाठं करोति । आग्नीध्रः - ये यजामहेऽग्निमाग्नीध्रादृतुनासोमं पिबतु वौषट्" इति याज्यां पठति । आग्नीध्रः वषट्कृते प्रतिप्रस्थाता जुहोति । यजमानः - अग्नयऋतुभ्यइदं नममेति त्यागः । ततः निष्क्रामत्यध्वर्युः, प्रतिप्रस्थाताप्रपद्यते स पूर्ववत् "उप० नमस्यायत्वाजुष्टं०" इति मन्त्रेण सोमद्रव्यं गृह्णाति । अध्वर्युः - आश्राव्याह- "ऋतुना प्रेष्य" इति । मैत्रावरुणः - होतायक्षदिन्द्रोब्रह्मा ब्राह्मणादृतुनासोमं- पिबतु ब्रह्मन्यजं" इति प्रैषमन्त्रपाठं करोति । ब्रह्मयाज्या - ये ३ यजामहे इन्द्रो- ब्रह्मा ब्राह्मणादृतुना सोमं पिबतु ३ वौषट्" इति ब्रह्म याज्या पठति । ब्रह्म- वषट्कृते अध्वर्युः जुहोति । यजमानः - इन्द्रायनमायेदं नममेति त्यागः कुर्यात् । ततः निष्क्रामति प्रतिप्रस्थाता, अध्वर्युः प्रपद्यते स पूर्ववत् "उप० सोष्णायत्वाजुष्टं०" इति मन्त्रेण द्रव्यं गृह्णाति । प्रतिप्रस्थाता - आश्राव्याह - "ऋतुनाप्रेष्य" इति । "होतायक्षन्मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादृतुनासोमं पिबतां प्रशास्तर्यज" इति प्रैषमन्त्रपाठं करोति । अध्वर्युः - "प्रशास्तर्यज" इति प्रेषयति। (प्रशास्ता) मैत्रावरुणः - ये ३ यजामहे मित्रावरुणौ प्रशास्तारौ प्रशास्त्रा- दृतुना सोमं पिबतां वौ ३ षट्" इति याज्यापाठः मैत्रावरुणः दण्डं निधाय, याज्याकर्मेण पठति । प्रशास्तुर्वषट्कृते प्रतिप्रस्थाता जुहोति । यजमानः - मित्रावरुणाभ्यां नमस्यायेदं नमम इति त्यागं कुर्यात् । ततः अध्वर्युः निष्क्रामति, प्रतिप्रस्थाता प्रपद्यते स पूर्ववत् "उप० ऊर्जायत्वाजुष्टं०" इति मन्त्रेण सोमद्रव्यं

गृह्णाति । अध्वर्युः - आगाध्याह - 'ऋतुना प्रेष्य' इति ।

मैत्रावरुणः -

'होतायक्षद्देवं द्रविणोदां होत्रादृतुभिः सोमं पिबतु होतर्यज' इति प्रेषमन्त्र पाठं करोति ।

होतुर्याज्या -

'ये यजामहे देवं द्रविणोदां होत्रादृतुभिः सोमं पिबता वौ ३ षट्' इति होतायाज्यां पठति । होतुर्वषट् कृते अध्वर्युः जुहोति ।

यजमानः - देवाय द्रविणोदे इदमार्येन्न ममेति त्यागं कुर्यात् । ततः प्रतिप्रस्थाता निष्क्रामति, अध्वर्युः प्रपद्य च पूर्ववत् 'उप० ऋतायत्वा-जुष्टं०' इति मन्त्रेण गृह्णाति । प्रतिप्रस्थाता - आगाध्याह - 'ऋतुना प्रेष्य' इति । मैत्रावरुणः - 'होतायक्षद्देवं द्रविणोदां पोत्रादृतुभिः सोमं पिबतु पोतर्यज' इति प्रेषमन्त्रपाठं करोति ।

पोतुर्याज्या -

'ये ३ यजामहे देवं द्रविणोदां पोत्रादृतुभिः सोमं पिबता वौषट्' इति पोता याज्यां पठति । पोतुर्वषट् कृते प्रतिप्रस्थाता जुहोति ।

यजमान: - देवाय द्रविणोदे ऊर्जा ये दं नममेति त्यागं कुर्यात् । ततः अध्वर्युः निष्क्रामति, प्रतिप्रस्थाता प्रपद्यते च पूर्ववत् - "उप० सहस्यायत्वाजुष्टं० इति मन्त्रेण सोमग्रहं गृह्णाति ।

द्विदेवत्यग्रहप्रचारः -
---

वक्ष्यमाणाग्रहाः द्विदेवत्यसंज्ञकाः भवन्ति । ऐन्द्रवायवमैत्रावरुण-वाश्विनाग्रहाः । एते सोमपायिनः देवताः । अतः द्विदेवत्यग्रहप्रचारे प्रधान-द्रव्यं सोमएव भवति ।

अध्वर्युः - आश्राव्याह - "ऋतुनाप्रेष्य" इति प्रेषयति ।
मैत्रावरुणः - "होतायक्षद्देवं द्रविणोदां नेष्ट्रादृतुभिः सोमं पिबतु नेष्टर्यज ।
इति प्रैषमन्त्रपाठं करोति ।

नेष्टुर्याज्या - ये ३ यजामहे देवं द्रविणोदां नेष्ट्रादृतुभिः सोमं पिबता वौ ३ षट्" इति नेष्टा स्वां याज्यां पठति । नेष्टुर्वषट्कृते अध्वर्युः जुहोति ।

यजमान: -
---

देवाय द्रविणोदे सहायेदं नममेति त्यागं कुर्यात् । ततः निष्क्रामति-प्रतिप्रस्थाता, अध्वर्युः प्रपद्यते च पूर्ववत् "उप० तपायत्वाजुष्टं०" इति मन्त्रेण सोमग्रहं गृह्णाति । प्रतिप्रस्थाता - आश्राव्याह - "ऋतुनाप्रेष्य" इति

प्रेष्यति ।

मैत्रावरुणः - "होतायक्षद्देवं द्रविणोदा० - - - - - - -
अच्छावाकयज" इति प्रेषमन्त्रपाठं करोति ।

अच्छावाकयाज्या - ये ३ यजामहे देवं द्रविणोदाममपाद्धोत्रा० - - - -
पिबता वौषट्" इति अच्छावाकः स्वां याज्यां
पठति । अच्छावाक वषट् कृते प्रतिप्रस्थाता जुहोति ।

यजमानः - देवाय द्रविणोदे सपत्यायेदं नममेति त्यागं पठेत् । ततः प्रति-
प्रस्थातारुपतेन पात्रेण "एम" इति । अध्वर्युः - आश्राव्याह - "ऋतुना-
प्रेष्य" इति प्रेषयति । मैत्रावरुणः - "होतायक्षदश्विनाध्वर्यू आध्वर्यं-
वाहतुना सोमं पिबतामध्वर्यू यजतम्" इति प्रेषमन्त्र पाठं करोति ।

अध्वर्युः - "होतरेतयज[1]" इति होतारमादिशति ।

होता - ये ३ यजामहे अश्विनाध्वर्यू आध्वर्यवाहतुना सोमं पिबता वौषट्" इति
अध्वर्यू याज्यां पठति । होतुर्वषट् कृते अध्वर्युः सहैणं जुहोति ।

यजमानः - अश्विभ्यां तपायेदं नममेति त्यागं कुर्यात् । ततः अध्वर्युः हविर्धान-
आसीनं प्रतिप्रस्थातारं अनुप्रपद्यते । प्रतिप्रस्थाता पात्रमुखं विपर्यस्य "उप०
तपस्यायत्वाजुष्टं०" इति मन्त्रेण सोमद्रव्यं गृह्णाति । अध्वर्युः "उप० सं
सर्पोस्यं हस्पत्याय त्वा जुष्टं०" इति मन्त्रेण गृह्णाति । ग्रहौ आदाय

---

(१) अध्वर्युयजतमित्याह प्रशास्ता होतरेतयजेत्याहाध्वर्युर्वषट् कृते
जुहोति, शां० श्रौ० ७।१६, आ० श्रौ० ५।८।५ ।

उपनिष्क्रामत: । अध्वर्यु: दक्षिणं द्वारबाहुं नि:श्रेयमाण उपनिष्क्रामति ।
उत्तरं प्रतिप्रस्थाता, आग्नीध्राह - "सुनाप्रेष्य" इति प्रेषयति । मैत्रा-
वरुण: - "होतायक्षदग्निं गृहपतिं० -------- गृहपतेर्वीयं" इति
प्रैषमन्त्रपाठं करोति ।

यजमान: - प्रशास्ता "गृहपतेर्वीयं" इत्युक्ते "होतरेतद्यज" इति होतारमादिशति ।[1]
होता - "ये ३ यजामहेऽग्निं गृहपतिं गार्हपत्यात्० -------- पिबता
सोम्यद्" इति यजमान याज्यां पठति । होतुर्वषट्कृते उभौ सह जुहुत: ।
यजमान: - अग्नये गृहपतये सं सर्वस्यं हस्पत्यायेदं नममेति त्याग: कर्तव्य: ।

ऐन्द्राग्न ग्रहग्रहणम्[2] -
---

तत: प्रतिप्रस्थाता आध्वर्यवपात्रे ग्रहस्य संग्रहमवनयति । अध्वर्यु-
स्तमाह - प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाण" इति । प्रतिप्रस्थाता
स्व पात्रे द्रोणकलशात् परिप्लुपात्रेण "इन्द्राग्नीआगतं सुतं०" "उप० इन्द्रा-

---

(१) गृहपते यजेत्याह प्रशास्ता होतरेतद्यजेत्याह गृहपतिर्वषट्कृते पतीभौ जुहुत: । कौ० श्रौ० ७।१६ । होताऽध्वर्युगृहपतिभ्यां होतरेतद्यजेत्युक्त: । कौ० श्रौ० ५।८।५ ।

(२) तमाह प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाणेति तेन० परिसृज्य सादयत्यैन्द्राग्न्योनिरिन्द्राग्निभ्यां त्वेति । कौ० श्रौ० ७।१६ । यदैन्द्राग्नमृतुपात्रेण गृह्णाति०, तै० सं० ६।५।४ । इन्द्राग्नी आगतं० तै० सं० १।४।१५ ।

ग्निभ्यां त्वाजुष्टं०" इति मन्त्रद्वयेन ऐन्द्राग्नं गृह्णाति । तं ग्रहं परिमृज्य "एष ते योनिरिन्द्राग्निभ्यां त्वाजुष्टं०" इति मन्त्रेण तं सादयति ।

सोमभक्षणविधिः -

अध्वर्युः प्रदक्षिणमावृत्य, प्रत्यङ्ङावृत्य, होत्रादिभिः सह स्वपात्रं प्रथमपुटेन क्रमेण "ऋतुनापीतस्ये" ति मन्त्रेण भक्षयति । याज्या क्रमेण उपहवानपूर्वकं सोमभक्षणं कुर्यात् । इति ऋतुयागः ।

अथ स्तोत्रशंसनम् -

अग्निष्टोमे ऋतुयागानन्तरं द्वादशस्तोत्रेषु मध्ये प्रथममाज्यस्तोत्रम्, द्वितीयं प्रउग स्तोत्रम्, प्रातः सवने एते स्तोत्रे भवतः । स्तोत्ररूपेण स्तवनं छन्दोगानां भवति । आज्यस्तोत्रानन्तरं होता आज्यशस्त्रशंसनं करोति । अथ च प्रउग स्तोत्रानन्तरं प्रउगशस्त्र शंसनं करोति । सर्वत्र होतुः शस्त्रपाठः, पूर्वं पठितस्य स्तोत्रस्य योनिस्थानीयासु अन्तिमासु ऋगानुरूपेषु शस्त्रस्य प्रारंभो

---

(१) अथाध्वर्युः प्रदक्षिणमावृत्य० - - - - - - - - - - - - अथ विपर्यस्यैवपात्राणि द्विःद्विर्भक्षयत्यृतुनापीतस्येति । बौ०श्रौ० ७।१६ । अथैतदृतुपात्राणामानन्तर्येण वषट्कर्तारो भक्षयन्ति । पृथगध्वर्युः प्रति भक्षयेत् । तस्मिन्नेवोपहवः ।

- आ० श्रौ० ५।८।८-१० ।

भवति ।

शस्त्रशंसने नियमाः[1] -

आज्यशस्त्रे होता 'सुमुतपत्यद्गन्दे०' इति जपित्वा, अभिहिंकार-मकृत्वा, 'शों ३ सावो ३ मित्युच्चैराहूयतूष्णीं उपांशु सप्रणवं शस्तन्वं शंसेत् । अयं जपः शस्त्राङ्गमिति शस्त्रेण सम्बद्ध दर्शनात् । अनेन शब्देन आहूय इति वचनात् 'शों ३ सावों ३' मिति शब्दस्य आहाव इति संज्ञा-भवति । उच्चैर्वचनं मन्द्रस्वरप्राप्त्यर्थं शस्त्रां गत्वात्, आहावस्य शस्त्रस्य च मन्द्रस्वरत्वात्, आहावानन्तरवर्तिनः शस्त्रैकदेशस्य उपांशुत्वात् मुख्यानु-ग्रहन्यायेन उपांशुत्वाशंकायां भूयसामनुग्रह एवात्राश्रयितुं युक्त इति मन्द्रस्वर सिद्ध्यर्थं उच्चैरित्युक्तवानाचार्यः । 'तूष्णीं शंसं' इति नामधेयं सप्रणवं तूष्णीं शंसेत् ये प्रणवाः सन्तानायेति । तेन शस्त्राधिना शावेन उक्तः संततौ वक्तव्यः । शस्त्रे कृन्ते-कृन्ते शस्त्रस्वरः प्रतिगरः । प्रतिगीयते इति

---

(१) सुमतुपत्यन्ददे० - - - - - - - - - - - - - - - - - - - -
अनभिहिं कृत्य शों सावोमित्युच्चैराहूय तूष्णीं शंसं शंसे दुपांशु सप्रणमसंतन्वन् । एष आहावः - - - - - - - - - - - - -
अन्तशस्त्रम् । (शों सावो ३ म् इत्याहूयते प्रातःसवने ऋग्दारेण । ऐ०ब्रा० ३।१२) आ० श्रौ० अ० ५, ६ खं० सू० १-२ ।

प्रतिगर: "ओ ३ थामो दैव"[1] इत्ययं प्रतिगरसंज्ञो भवति । ह्रस्वस्वरोनाम -
ह्रस्वस्य स्वर इव स्वरो यस्य स ह्रस्वस्वर: । अयं प्रतिगर: प्रणवे-प्रणवे
आहावोत्तरे अवसाने च भवति । अध्वर्यु: होतारं पृच्छति ? "प्रणवमुपांशु शं
सं सं सिष्यसो ३ मिहाहा ३ मिति । होतायथा शंसिष्यन् भवति तथा प्रत्या-
ह - अध्वर्यु: पात्रं नैर्विरवष्टभ्य, सव्यमावृत्य, प्राङ्मुख उपविश्य "इडादेव-
हूरिति" शान्तिं जपित्वा, अपसव्यमावृत्य, होतुरभिप्रत्यङ्मुख: प्रह्वस्तिष्ठन्
प्रतिगृणाति[2] ।

**आज्यशस्त्रशंसनप्रकार:[3] -**

होता - समुत्पत्यन्दे मितामातरिश्वाछिद्रा० - - - - - -
शंसिष्यामि इति जपित्वा, अनभिहिंकृत्य , उच्चै: - शों ३ सावों ३, उपांशु[4] -

---

(१) ह्रस्वस्वर: प्रतिगरओथामो दैवेति । शों सामो दैवेत्याहावे ।
प्लुतादि: प्रणवेऽप्लुतादिरवसाने च । प्रणवे प्रणवआहावोत्तरे ।
अवसाने च । प्रणवान्तोवा । यत्र यत्र - - - - - - - - - -
प्रणव: । आ० श्रौ० ५।९।४-१० ।

(२) अथ होतारं विपृच्छति प्रणवमुपांशु० - - - - - - तदुच्चै: प्रति-
गृणाति इडा० तै० सं० ३।३।२, संततं वा विग्राहं वा । बौ०श्रौ०
७।१७ । शंसामो दैवो ३ मु इत्यध्वर्यु: प्रतिगृणाति, ऐ० ब्रा०३।१२ ।

(३) समुत्पद्यन्दे०, अनभिहिंकृत्य शोंसावोमित्युच्चैराहूय तूष्णींशंसं शंसेत् ।
आ० श्रौ० ५।९।१ । समुत्पद्यन्दे इत्येषाकंयशोदारपंक्ति:, ऐ०ब्रा० २।२४

(४) भूरग्निर्ज्योतिरग्नोम् अ० ।आ०श्रौ०५।९।११-१२,ऐ०ब्रा० २।३१ ।

भूरग्निर्ज्योतिरग्नी३म् । इन्द्रोज्योतिर्भुवोज्योतिरिन्द्रो३म् । सूर्योज्योति-
ज्योतिः स्वः सूर्यो३म् । उच्चैः - "अग्निर्देवेद्धः"[1] - - - - - - सो
अध्वरा करति जातवेदा३ प्रवोदेवायाग्नये०[2] इति त्रिः प्रथमामन्वाह पश्चात्
"कृता वा यस्य० ५ (पञ्च) मन्त्राः, नूनो रास्व०[3] - - - - - - - सोम् ।
त्रिरुत्तमां मन्वाहेति "उक्थं वाचि घोषायत्वा"[4] शस्त्वा जपेत् ।

ततः अध्वर्युः "उक्थशाः"[5] इत्युक्त्वा "शस्त्रस्य शस्त्रमसि"[6] इति मन्त्रं पठित्वा, सदसि उक्थपात्रं निधाय, प्राङेत्य अपूर्वाज्यात् स्रुवेण "यन्मयात्मनः" इति भूरादि चतुर्व्याहृत्यन्तैरिति शस्त्रायचरितं हुत्वा, ऐन्द्राग्नग्रहमुपोपह्वते चमसाध्वर्यवो नाराशंसेति । अध्वर्युः आगाव्याह - "उक्थशायजसोमस्ये"ति[7]

---

(१) अग्निर्देवेद्धः० । खिलम् ५।५।१ । आव्ययतोऽथ निविदं दधाति०, ऐ० ब्रा० २।३३-३४ ।

(२) प्रवोदेवायाग्नये० । ऋ० सं० ३।१३।१-६ । आद्यां त्रिःशंसेत् । प्रवोदेवायाग्नये० - - - - - - - - - - - - सर्वशस्त्रपरिधानीया स्वेवम्, आ० श्रौ० ५।९।२१-२५ ।

(३) नूनोरास्व० ऋ० सं० ३।१३।७ । प्रवोदेवायाग्नय इति शंसति० । ऐ० ब्रा० २।४० ।

(४) उक्थं वाचिघोषायत्वेति शस्त्वा जपेत् । आ० श्रौ० ५।९।२६ । उक्थं वाचि इत्याह शस्त्वा चतुरक्षरम् । ऐ० ब्रा० ३।१२ ।

(५) ओमुक्थशाः इत्यध्वर्युश्चतुरक्षरम् । ऐ० ब्रा० ३।१२, उक्थशाः इत्याह प्रातःसवनं प्रतिगीर्य० । तै० सं० ३।२।९ ।

(६) शस्त्रस्य शस्त्रमसि० तै० सं० ३।२।७ ।

(७) प्रसिद्धमुक्थ्यं प्रतिगीर्य - - - - - उक्थशायजसोमस्येति, बौ० श्रौ० ७।१७ ।

पश्चात् होता - ये ३ यजामहेऽग्न इन्द्रश्च दाशुषो॰[1] इति अनुवषट्कारपूर्वकं शस्त्र याज्या पठति । अध्वर्युः वषट्कृतानुवषट्कृतेद्विर्जुहोति[2] । तथैव द्विर्नाराशंसान् अनुप्रकम्पयति न जुहोति । यजमानः - इन्द्राग्निभ्यामिदं नममेति त्यागं पठेत् । अपउपस्पृश्य अग्नयेस्विष्टकृत इदं नममेति त्यागः ।

प्रातःसवनीयोपाह्वानम्[3] -

अध्वर्युः ग्रहं गृहीत्वा सद आगच्छति तदनु चमसाध्वर्यवो नाराशंसानागच्छन्ति । आगमानन्तरं होता - 'अध्वर्युरुपह्वयस्व' इत्युक्त्वा शस्त्रग्रहं भक्षयति । भक्षिते होता अध्वर्युः - 'होतरुपह्वयस्व' इति होतारं उपहूय, 'वसुमद् गणस्यै' ति मन्त्रेण भक्षयति । ततो होता - अध्वर्युः प्रतिप्रस्थातारं चोपहूय, स्व चमसे भक्षिते तं प्रतिप्रस्थातारं चोपहूय भक्षयति ।

समाख्यानभक्षणम् -

समाख्यानभक्षणे - ब्रह्म, यजमान, प्रशास्त्रादयो होतारमुपहूय स्व-

---

(१) अग्न इन्द्रश्च दाशुषो दुरोण इति याज्या । आ॰श्रौ॰५।६।२६, अग्न इन्द्रश्च दाशुषो दुरोण इत्याग्नेन्द्रयायजति॰, ऐ॰ ब्रा॰ २।३७ ।

(२) बौ॰ श्रौ॰ ७।१७ । वषट् - - - - - - अनुप्रकम्पयन्ति ।

(३) उक्थपात्रमग्रे भक्षयेत् । ततश्चमसांश्चमसिनः सर्वेशस्त्र्याज्यान्तेषु । आ॰श्रौ॰ ५।६।२६-२७ । एतत्पात्रं नाराशंसा अन्वायन्ति॰ होताध्वर्युश्चैतत् पात्रं संभक्षयतो॰ होतृचमसमेवैतेभ्यः समुपहूय भक्षयन्ति॰ यथाचमसं - - - आत्मानं प्रत्यभिमृशन्त । बौ॰श्रौ॰ ७।१७ ।

स्व चमसान् भक्षयति । पश्चादध्वर्युः - "चमसिनः उपह्वयध्वं" इत्युक्ते सर्वे चमसिनः "होतरुपह्वयस्व" इति होतारं उपहूय स्वस्व चमसान् भक्षयति । इति चमसभक्षः ।

ततो होता "अपामसोमममि०" इति सूक्तं, शंनोभव० इति तृचद्वयमभि-मृशति । चमसाध्वर्यवः पुनः चमसान् "आप्यायस्वसमेतुते०" इति मन्त्रेण चमसाप्यायनं कुर्वन्ति सादयन्ति च[1] ।

प्रउगशस्त्रशंसनविधिः -

---

आप्यायनानन्तरं अध्वर्युः शुक्रपात्रमाददान आह[2] - "उन्नेतर्यदिमं वैश्वदेवं ग्रहं गृहाणाप्यथोदन्चं राजानं पूतभृतं अभिसंयवादशाभिर्द्रोणकलशं गृहणाम्युक्षतात् । द्रोणकलशात् परिप्लुपात्रेण वैश्वदेवं शुक्रपात्रे "ओमासश्च-र्षणीधृत०" इति मन्त्रेण गृह्णाति, तं परिमृज्य, "एष तेयोनि०" इति

---

(१) आप्याययन्ति चमसानाप्यायस्व० सीदन्तिनाराशंसा - - - -
वैश्वदेवाय । बौ० श्रौ० ७।१७ ।

(२) अथ प्राङ्०त्य शुक्रपात्रमाददान आहउन्नेतर्यदिमं० स शुक्रपात्रेण वैश्व-देवं कलशाद् गृह्णाति ओमासश्चर्षणीधृत० अथापउपस्पृश्य बर्हिषो आदाय वाचं यमः प्रत्यङ्०त्वा स्तोत्रमुपाकरोतीति० स्तुते वैश्वे-देवाय होत्रे एषोत्का इति प्राहुः । बौ० श्रौ० ७।१७, ओमासश्चर्ष-णीधृतो० । तै० सं० १।४।१६ । वैश्वदेवं शुक्रपात्रेण गृह्णातीति० । तै० सं० ६।५।४ । यतोमन्थैतानभिक्रम्य० - - - - - - - - स्तोत्र-मुपाकुर्यादि० । तै० सं० ३।१।२ ।

मन्त्रेण सादयति । ततः उन्नेतापूतभृति पवित्रं वितत्य, द्रोणकलशस्थं राजान-मवनीय, दशापवित्रेण द्रोणकलशं पिधायग्रावस्तुन्युपति । अध्वर्युः अपउपस्पृश्य, बर्हिंषिराधाय, वाचंयमः प्रत्यङ्मुद्धृत्य, प्रउगस्तोत्रं कुरु साम्यौरिति उप-करोति । वायुर्हिंकर्ता इति स्तोत्रे प्रक्रान्ते अध्वर्युः आग्नीध्रं प्रेष्यति । अग्नीत् सवनीयान् निर्वप । आग्नीध्रः - प्रथमं आग्नेयं एकादशकपालं पशुपुरोडाशं सवनीयस्थानिधा, प्रातः सवनस्य निर्वपति प्रउगस्तोत्रसवने अवशिष्टामेका-मृचं अवशिष्य, होतारं प्रति 'एषोस्ता' इति कथयति,[1] तं श्रुत्वा, अध्वर्युः आज्यशस्त्रवत् प्राङ्मुखः उपविश्य वडादेवहूरिति शान्तिं जपित्वा, शस्त्रं प्रति-गीर्य प्रउगशस्त्रसमाप्तिपर्यन्तं प्रतिगरं करोति ।

प्रउगशस्त्रम्[2] -

'एषोस्ता' इत्युक्ते होता - शों ३ सावोम् वायुरग्रे[3] यज्ञप्रीःसाकं० इति त्रिवारं पठेत् पश्चात् 'वायवायाहि०'[4] इति त्रिः (३) हिरण्यवर्तनी०[5]

---

(१) अग्न आया हि वीतये० । सा वेसं० ३।२।१-३ ।

(२) एषोस्तेति प्रौक्त्रा० आ० श्रौ० ५।१०।२-५ । तस्माज्येन पवमानमनुशंसति प्रउगेणाज्यम्० । ऐ० ब्रा० २।३।७ । तं पुरोरुग्भिः प्रारोचयन् । यत्पुरोरुग्भिः प्रारोचयंस्तत् पुरोरुचां पुरोरुक्त्वम्०, ऐ०ब्रा० ३।६ । ग्रहोक्थं वा एतत् प्रउगम्० वायव्यं शंसति० ऐन्द्रवायवं शंसति० । ऐ०ब्रा० ३।१-८ ।

(३) वायुरग्रेगा० खिलम् ५।६।१, आद्यां त्रिःशंसेत् ।

(४) वायवायाहि० । ऋ०सं० १।२।१-३ ।

(५) हिरण्यवर्तनी० । खिलम् ५।६।२ ।

एका (१), इन्द्रवायू इमेसुता[1]० ---- नरौं० इति त्रिः (३) शौं सावोंम
काव्यराजाना[2]० इत्येका - शौं सावों अ्सु [3]मित्रं हुवे पूतदक्षं० इति त्रिः
शौं सावोश्सु [4]दैव्या अध्वर्यू० --------- जायौं ३ इत्येका (१),
शौं सावोश्सु [5]अश्विनायज्वरीरिषः० इति त्रिः (३,) शौंसावोश्सु, इन्द्र[6]
उक्थेभि ------- वद्वोश्सु, इत्येका (१), शौंसावोंश्सु [7]इन्द्रायाहि चित्र-
भानो इति त्रिः (३), शौं सावोंश्सु [8]विश्वान् देवान्० पीतयोम्, इति एका
(१), शौं सावोंश्सु [9]ओमासश्चर्षणीधृत० इति त्रि० (३)। शौं सावोम्
[10]वाचमह --------- हवामहोश्सु इत्येका (१) शौंसावोंम् [11]पावकानः
सरस्वती० इति द्वौमन्त्रौ (२), पश्चात् [12]महोअर्णः सरस्वती० इति परिधा-

---

(१) इन्द्रवायू इमे० ऋ० सं० १।२।४-६ ।

(२) काव्यराजाना० खिलम् ५।६।३ ।

(३) मित्रं हुवे० ३ ऋ० सं० १।२।७-९ ।

(४) दैव्याअध्वर्यू० खिलम् ५।६।४ ।

(५) अश्विनायज्व० ऋ० सं० १।३।१-३ ।

(६) इन्द्रउक्थेभिः० खिलम् ५।६।५ ।

(७) इन्द्रायाहि चित्रभानो० ऋ० सं० १।३।४-६ ।

(८) विश्वान्० खिलम् ५।६।६ ।

(९) ओमास० ऋ० सं० १।३।७-९ ।

(१०) वाचामहो - खिलम् ५।६।७ ।

(११) पावकानः ऋ० सं० १।३।१०-११ ।

(१२) महोअर्णः सरस्वती० ऋ० सं० १।३।१२ । परिधानीया ।

नीया कुर्यात् । पश्चात् उक्थवाचि[1]श्लोकायत्वा इति वदेत् । प्रउगशस्त्रावसाने अध्वर्युः इत्र प्रायश्चित्तानि पूर्ववत् यजेत् ।

वैश्वदेवग्रहप्रचारः[2] -

---

पश्चात् अध्वर्युः वैश्वदेवग्रहमादाय - आगाश्राव्य - उक्थशा यजसोमानाम् इति ततो होता प्रउगयाज्यां पठति ।

प्रउगयाज्या[3] -

---

ये ३ यजामहे विश्वेभिः सोम्यं - - - - - - धामभीर्वौषट् सोमस्याग्ने वीही ३ वौषट् । अत्र द्विर्होमः । अध्वर्युः वषट्कृतानुवषट्कृते द्विर्जुहोति[4] । तथैव चमसाध्वर्यवः द्विर्द्विर्नाराशंसान् अनुप्रकम्पयति ।

यजमानः - विश्वेभ्योदेवेभ्य इदं नमम । ऊमेभ्यः पितृभ्य इदं नमम । अग्नये-स्विष्ट कृत इदं नममेति त्यागः पठेत् । पूर्ववत् उपह्वानं कुर्यात् ।

---

(१) उक्थं वाचि श्लोकायत्वा, आ० श्रौ० ५।१०।१० ।

(२) विश्वेभिः सोम्यं मध्विति याज्या, आ० श्रौ० ५।१०।१०, ऋ० सं० १।१४।१० ।

(३) प्रसिद्धमुक्थं प्रतिगीर्याडि०त्योपच्छत एतं वैश्वदेवग्रहमनुवचन्तो० उक्थशायज सोमस्य । बौ० श्रौ० ७।१७ ।

(४) वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसान् अनुप्रकम्पयन्ति, बौ० श्रौ० ७।१७ ।

होत्रा[1] वैश्वदेवग्रहमक्षिते अध्वर्युः तं उपहूय "वसुमद्गणस्येति" मन्त्रेण भक्षयति । होत्रकसमं होत्रध्वर्युप्रतिप्रस्थात्रादयः पूर्ववत् नराशंसपीतेन भक्षयन्ति । ब्रह्म, यजमान, प्रशास्त्रादयो होतारमुपहूय नराशंसपीतेन स्व चमसात् पूर्ववत् भक्षयन्ति । अत्र नाप्यायनम् ।

मैत्रावरुणग्रहग्रहणम्[2] -

---

चमसाध्वर्यवः चमसान् "मार्जालीये प्रक्षाल्य, जघनेन स्रुचौ मैत्रावरुण चमसप्रभृतानुदीचः सादयन्ति ।

अध्वर्युः प्रतिप्रस्थातरि एनं ऋतुपात्रं सक्तुपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपिसृजस्वेत्यादिशति । प्रतिप्रस्थाता तथा करोति । अध्वर्युः प्राह्णत्याह - "मैत्रावरुणस्य चमसमनून्नयानुन्नीतः सोमप्रभावं" ततः चमसाध्वर्यवः उन्नेत्रा आहुतेन पूतभृत् सोमतृतीयेन मैत्रावरुणचमसप्रभृतान् चमसानुन्नीय उत्तरवेद्यां सादयति । अध्वर्युः उक्थ्यस्थाल्या औपशयपात्रमादाय, तस्मिन् उद्धृत्य तृतीयं "उपयामगृहीतोसी" ति मन्त्रेण गृह्णाति । उक्थस्थालीं

---

(१) एतत् पात्रं नाराशंसा अन्वायन्ति । अनुवचनभक्षः विश्वैर्देवैः पीतस्य० नाप्यायन्ति चमसान् । सर्वभक्षामायेन्द्री । बौ० श्रौ० ७।१७ ।

(२) अथाह प्रतिप्रस्थातरिमं० अथ प्राहणायन्नाहमैत्रावरुणस्य० - तस्मिन्नेतस्य राजस्तृतीयवेलां गृह्णाति उक्थ्यस्थाल्यां भवति उपयाम० पुनर्हविरसि० परिमृज्य सादयति एवम्० । बौ० श्रौ० ७।१७-१८ । त्रिर्निगृह्णाति० पुनर्हविरसि इत्याह० । तै० सं० ६।५।१ ।

"पुनर्हविरसि" इति मन्त्रेण अभिमृशति "एषते योनि" रिति मन्त्रेण परिमृज्य सादयति [1]। ततः मैत्रावरुणस्तोत्रोपाकरणम् ।

## मैत्रावरुणशस्त्रशंसनविधिः[2] -

एणोकेति कृते मैत्रावरुणः दण्डं निधाय, स्वधिष्ण्यां पश्चात् उपविश्य, शस्त्रं शंसेत् । अध्वर्युः पूर्ववत् प्रतिगरं ददाति ।

## शंसनप्रकारः[3] -

ओं शावोऽम्[4] आनोमित्रावरुणा० इति त्रिः (३) । प्रथमां तृचं त्रिवारं शंसेत् । शों सावो ३ मानोगन्तं[5] रिशादसा० ३ शों सावों म् प्रवो-मित्रायगायत०[6] ५, प्रमित्रयोर्वरुणयोः[7] स्तोमो० ८[8] । शों सावोऽम् ते स्याम देव० ९, इमां तृचं त्रिवारं परिधानीयारूपेण पठेत् ।

---

(१) अथापवपस्पृश्य बर्हिषो आदाय० - - - एणोकेति इति प्राहुः । आनोमित्रावरुणा० शांकां० २।१।१५ । बौ० श्रौ० ७।१८ ।

(२) मैत्रावरुणस्य - - - प्रतिगृणाति, बौ० श्रौ० ७।१८ ।

(३) मैत्रावरुणं मैत्रावरुणः प्रातःसवने शंसति० ऐ० ब्रा० ६।४, आ० श्रौ० ५।१०।२८ ।

(४) आनोमित्रा० । ऋ० सं० ३।६२।१६-१८ । आद्यां त्रिः शंसेत् । स्तोत्रिय तृचः ।

(५) आनोगन्तं० ऋ० सं० ५।७१ । अनुरूपस्तृचः ।

(६) प्रवोमित्रायगायत० ऋ०सं० ५।६८ । (७) प्रमित्रयोर्वरुणयोः ऋ० सं० ७।६६।१-८ ।



(८) ते० स्याम० ऋ० सं० ७।६६।९ । [illegible]

मैत्रावरुण ग्रहमादाय अध्वर्युः प्रायश्चित्तानि हुत्वा, ग्रहमादाय, आश्राव्याह - "उक्थशायजसोमानां" इति[1]। ततः मैत्रावरुणः - ये ३ यजामहे[2] आयातं मित्रावरुणा० - - - - - वृधा वौं ३ षट् सोमस्याग्ने वीही वौं ३ षट्। पूर्ववत् वषट्कृतानुवषट्कृते जुहोति, तथैव सर्वाश्चमसान् जुह्वति। यजमानः - मित्रावरुणाभ्यामिदं नमम। अग्नयेस्विष्टकृतेदं नमम। इति त्यागं कुर्यात्। अध्वर्युः प्रदक्षिणमावृत्य, मैत्रावरुणचमसे "हुतन्त्वै" ति मन्त्रेण ग्रहसंस्रावमवनयति। तत् पात्रं उत्तरस्यां हविर्धान्यां सादयित्वा, मैत्रावरुणचमसं "वसुमद्गण" इति मन्त्रेण मैत्रावरुणाध्वर्यु प्रतिप्रस्थातारो भक्षयन्ति[3]। ततः[4] मैत्रावरुणचमसं मैत्रावरुणः प्रशास्त्रि चमसान् तं तं चमसिनमुपहूय भक्षयति। मैत्रावरुणचमसं त्रयः पुनर्पुनः पूर्ववत् भक्षयन्ति। पात्राणि पूर्ववत् प्रक्षाल्य, ब्राह्मणाच्छंसि चमस प्रमुखान् सादयन्ति।

अध्वर्युः प्रेष्यति[5] - "प्रतिप्रस्थातग्रहं ते प्रचर" । ततः प्रतिप्रस्थाता प्राङ्मुखायन्नाह[6] - ब्राह्मणाच्छंसिनश्चमसमनून्नय ध्वमुन्नेतः सोमं प्रभावय। पूर्ववत्

---

(१) प्रसिद्धमुक्थं प्रतिगीर्य० - - - - - - - - - - - - - - - - - -
उक्थशायजसोमानामिति, बौ० श्रौ० ७।१८।

(२) आयातं मित्रावरुणा० आ०श्रौ० ५।१०।२८। ऋ० सं० ७।६६।१६।

(३) वषट्कृतानुवषट्कृते० - - - - त्रयःसमुपहूयभक्षयन्ति। बौ०श्रौ०७।१८।

(४) यथाचमसं चमसान्० । बौ० श्रौ० ७।१८।

(५) बौ० श्रौ० ७।१८ ।

(६) तच्छुत्वाप्रतिप्रस्थाता० - - - - - - - - - - - - - - - -
सोमं प्रभावय; बौ० श्रौ० ७।१८-१६ ।

पूतभृतोऽर्धं क्रमानुन्नीय उत्तरेषां सादयन्ति[1]। ततः प्रतिप्रस्थाता उक्थ्यस्थाल्या आँपश्यै - 'उपयामगृहीतोऽसि' इति मन्त्रेण उक्थ्यार्थं गृह्णाति। 'पुनर्हविरसीति' मन्त्रेण अभिमृशति। 'एषतेयोनिरिति' इति मन्त्रेण परिमृज्य-सादयति[2]। ततः स्तोत्रोपाकरणम्[3]।

ब्राह्मणाच्छंसिनः आज्यशस्त्रम्[4] -

---

ओं३सावो३ म्[5] आ याहि सुषुमा० ३। प्रथमां त्रिवारं पठेत्। ओं सावो३म्[6] आनो याहि सुताव्तो० ३। ओं सावो३म्[7] अयमुत्वाविचर्षणे० ७।

---

(१) ब्राह्मणाच्छंसिनश्चमस० - - - - - - - - - - - - - - - - उत्तरेषां संसादयन्ति, बौ० श्रौ० ७।१६।

(२) अथादत्तउक्थ्यस्थाल्या आँपश्यं पात्रं० - - - - - - - - परिमृज्य सादयन्ति एष०, बौ० श्रौ० ७।१६।

(३) अथाप्तउपस्पृश्य० - - - - - - - - - - ब्राह्मणाच्छंसिने एणोभा इति प्राहुः, बौ० श्रौ० ७।१६।
आयाहि सुषुमाहि० साकाँसं० २।१।१।६।

(४) आयाहि सुषुमाहित इति षट्० - - - - - - - - - - - - - - इन्द्रत्वा वृषभमुदेदमीति तिस्रः। बा० श्रौ० ५।१०।२८। ऐन्द्रं ब्राह्मणाच्छंसो प्रातः सवने शंसति० ऐ० ब्रा० ६।४।

(५) आयाहिसुषुमा० कृ० सं० ८।१७।१-३। आद्यां त्रिः शंसेत्। स्तोत्रियस्तृचः।

(६) आनोयाहि० कृ० सं० ८।१७।४-६। अनुरूपस्तृचः।

(७) अयमुत्वा० कृ० सं० ८।१७।७-१३।

इन्द्रत्वा[1] वृषभं० १ । उद्वेदभि[2] श्रुतामघं० २ । तौं सावौ ३, स नै[3] इन्द्रः शिव:० ४, इमां कुवं परिधानीयावद् पंक्त् ।

अध्वर्यु:[4] इस्त्रं प्रतिगोर्यग्रहमादाय, वागाव्याह - "उक्थशायजसोमानां" इति । ब्राह्मणाच्छंसि - यें ३ यजामहेन्द्रक्रतुविदंसुतं० - - - - - वौ ३ षट् सोमस्याग्नेवीही ३ वौं षट्[5] । अध्वर्यु:[6] पूर्ववत् जुहोति । हुतेषु वकोषु यजमान: इन्द्रायेदं नमम । अग्नयेस्विष्टकृत इदं नमम । इति त्यागं कुर्यात् । ततः अध्वर्यु: ब्राह्मणाच्छंसिनस्हस्ते "हुतंत्वे" ति मन्त्रेण संस्रावमवनयति । पात्रं निधाय, ब्राह्मणाच्छंसिनस्समस्तं - ब्राह्मणाच्छंस्यध्वर्युप्रतिप्रस्थातारौ "वसुमत्०" इति मन्त्रेण भक्षयन्ति । ब्राह्मणाच्छंसि चमसं पूर्ववत् उपहूय स्वं स्वं चमसान् भक्षयन्ति । अत्र नाप्यायनम् । ततः पूर्ववत् चमस पात्राणि प्रक्षाल्य, अच्छा-वाकचमसप्रमुखान् चमसान् सादयन्ति । प्रतिप्रस्थाताप्रा०यन्नाह - "अच्छा[7]-वाकस्य चमसमनून्नयध्वमुन्नेतः सर्व एव राजानमुन्नयमातिरीरिचः" । अध्वर्यु: प्रतिप्रस्थातरुपैतेन मन्त्रेण "स्पृहि यजमानं" इति वदति । अध्वर्यु:[8] यजमानेन सह

---

(१) अयमुत्वा० ऋ०सं० ८।१७।७-१३ । इन्द्रत्वावृषभं० ऋ०सं० ३।४० ।

(२) उद्वेदभि० ऋ० सं० ८।९३।१-२ ।

(३) सनइन्द्र:० । ऋ० सं० ८।९३।३ । परिधानीया ।

(४) प्रसितमुक्थप्रतिगोर्य० । बौ० श्रौ० ७।१६ ।

(५) इन्द्रक्रतुविदंसुतमिति याज्या । बा०श्रौ०५।१०।२८, ऋ०सं०३।४०।२ ।

(६) वषट्कृतानुवषट्कृते जुहोति - - सर्वभक्षा मार्जयन्ते, बौ०श्रौ०७।१६ ।

(७) अच्छावाकचमस०, बौ० श्रौ० ७।२० ।

(८) पूर्वयाद्वाराहविर्धानं प्रपाद्य०- - राजानमुपावहरतिदेत्वा०, बौ०श्रौ०७।२

हविर्धानं गत्वा, द्रोणकलशं दक्षिणस्य हविर्धानस्य पश्चादक्षं निधाय, ग्राव्ण: पृथक् कृत्वा, नीडे कृष्णाजिने कृत्वोपनन्तरेणैवे निधाय, अधिषवणफलकयो: "यज्ञप्रतितिष्ठे" ति मन्त्रेण प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तत: तस्मिन् सम्मुखान् ग्राव्ण: कृत्वा, दक्षिणस्य हविर्धानस्यान्तरेण "कृदेत्या०, सोम-राजन०" इति द्वाभ्यां मन्त्राभ्यां राजानमुपावहरति । ग्राव्णामुपरि निधाय उद्गातृभ्य: प्राह[1] - "उपावृत: सोम:" इति । आधवनीयपात्रमुत्तानं कृत्वा, वसतीवरीणां, एकधनानाञ्च अर्धमवनीय यथास्थानं सादयति । ततश्चमसाध्वर्यव: उन्नीयाच सर्वश आहुतेन पूतभृत् सोमिनमच्छावाकचमस मुख्याश्चमसानुन्नीयोत्तरवेद्यां सादयन्ति[2] । तत: प्रतिप्रस्थाता उक्थ्यस्थाल्या[3] आंपश्ये उक्थ्यस्थालीस्थं सर्वं राजानं गृह्णाति । नीक्थ्यस्थालीमभिमृशति । दशापवित्रेण मृष्ट्वान्मुञ्चति । ग्रहं परिमृज्य सादयति । दशापवित्रं द्रोणकलशेनिधाय, पश्चात् स्तोत्रोपाकरणं कुर्यात्[4] ।

अच्छावाकस्य आज्यशस्त्रम्[5] -

---

अच्छावाकस्तोत्रान्ते अध्वर्यु: अच्छावाकमभिमुखीभूत्वा प्रणवे

---

(१) अथोन्मुद्गातृभ्य: प्राहुस्तस्मिन्० - - - - - एकधनानां पुरोऽक्षं वसतिवरी: सादयति । बौ० श्रौ० ७।२० ।

(२) अच्छावाकचमसमेकप्रथममुन्नयन्ति० सर्वंह एव राजानं समुन्नीयोत्तर-वेद्यां सादयन्ति, बौ० श्रौ० ७।२० ।

(३) अथादत्त उक्थ्यस्थाल्या आंपश्यं पात्रं तस्मिन्नेतं सर्वंह एव राजानं गृह्णाति० - - - परिमृज्यसादयति, बौ० श्रौ० ७।२० ।

(४) बौ० श्रौ० ७।२० । "इन्द्राग्नी आगतं०" (गायत्रसाम) साकौ०सं०२।१।१

प्रणवे[1] प्रतिगरं ददाति । शों सावोश्मु इन्द्राग्नी[2] आ गतं सुतं० ३ । प्रथमा-कृत्त्रिवारं शंसेत् । शों सावोश्मु इन्द्राग्नो[3] अपसस्परि० ३ । शों सावोश्मु तोशावृत्रहणाहुवे[4]० ३ । इहेन्द्राग्नी[5] उपह्वये० ६ । इयंवामस्य मन्मन[6]० ८ । शों सावोश्मु गोमद्धिरण्यवद्वसु[7]० ग्मां कृवं परिधानीयामुत्तु पठेत् ।

शस्त्र शंसनान्ते अध्वर्युः ग्रहमादाय, आशाव्याह - "उक्थशायज-सोमानाम्[8] इति । ततः अच्छावाकस्य शस्त्रयाज्या - ये ३ यजामहे इन्द्राग्नी[9]

---

(१) इन्द्राग्नी आगतं० - - - - - - - - - - - - - - - - - - - -
इयं वामस्य मन्मन इति नव । आ० श्रौ० ५।१०।२८, ऐन्द्राग्न-मच्छावाकः प्रातःसवने शंसति० । ऐ० ब्रा० २।३६ ।६,४ ।

(१) प्रतिगृणाति । बौं० श्रौ० ७।२० ।

(२) इन्द्राग्नी० ऋ० सं० ३।१२।१-३ । आद्यां त्रिः शंसेत् ।
स्तोत्रियस्तृचः ।

(३) इन्द्राग्नोअपसस्परि० ऋ० सं० ३।१२।७-९ ।
अनुरूपस्तृचः ।

(४) तोशावृत्रहणाहुवे० ऋ० सं० ३।१२।४-६ ।

(५) इहेन्द्राग्नीउपह्वये० ऋ० सं० १।२१ ।

(६) इयं वामस्य० ऋ० सं० ७।९४।१-८ ।

(७) गोमद्धिरण्यवद्वसु० ऋ० सं० ७।९४,९ । परिधानीया ।

(८) प्रसिद्धमुक्थप्रतिगरं० - - - - - - - - - - - - - - - - - - - -
उक्थशायजसोमानामिति, बौं० श्रौ० ७।२० ।

(९) इन्द्राग्नीआगतं सुतमितियाज्या, आ० श्रौ० ५।१०।२८ ।
ऋ० सं० ३।१२।१ ।

वानतं सुतं० इति । वषट्कृतानुवषट्कृते जिहुहोति । तथैव सर्वांश्चमसान् जुहवति । यजमानः इन्द्राग्नीभ्यामिदं नमम । अग्नये स्विष्टकृतेदं नमेति त्यागं पठेत् । अध्वर्युः अच्छावाकचमसे "हुतं स्तौति" मन्त्रेण प्रसंस्रावमवनयति । पात्रं निधाय, अच्छावाकचमसं अच्छावाकाध्वर्यु प्रतिप्रस्थातारः परस्परं उपहूय भक्षयन्ति ।[1] अच्छावाकः प्रशास्ता चमसान् तं तं उपहूय, पुनरच्छावाकचमसं त्रयः पूर्ववत् भक्षयन्ति । प्रशादयोऽच्छावाकमुपहूय, इन्द्राग्नीभ्यां पीतस्य इति मन्त्रेण स्व-स्व चमसान् भक्षयन्ति । आत्मानं अभिमृशति । अत्र नाप्यायनम् । चमसाध्वर्यवः चमसान् प्रक्षाल्य, पूतभृदाधवनीयान्तरेण परिस्तुंना सह निदधाति । अध्वर्युः अग्निर्मूर्धा० । २- यन्मआत्मनः० । ३ - पुनरग्निः० ४- व्याहृतयश्च प्रायश्चित्ताहुतीर्जुहुयात् । ततोऽध्वर्युः मैत्रावरुणमुद्दिश्य[2] प्रेष्यति प्रशास्तः प्रब्रूहि । स आह्वयीत । सर्वे यथापूर्वं निः सर्पेति । इति प्रातः सवनम् ।

माध्यन्दिनसवनम् -

---

यजमानः सदः प्रवेशात् पूर्वं आग्नीध्रीयं प्रविश्य, धिष्ण्यस्य

---

(१) वषट्कृतानुवषट्कृते० - - - - - - - - - - - - - - - - -
सर्वेषामाकर्षन्ती । बौ० श्रौ० ७।२० ।

(२) प्रातःसवनं प्रतिनोयप्रशास्तः प्रब्रूहि० इतिच्छेप्रातःसवनम्, बौ०श्रौ० ७।२० ।

पश्चात् उदङ्मुख उपविश्य, लोकद्वारसामं[1] शृणोति । लोकद्वारसामान्ते होमः ।

माध्यन्दिनसवनमण्डपप्रवेशः -

ऋत्विजः यथाविहितसञ्चारेण मण्डपे प्रविशन्ति । ततः अध्वर्युः प्राह्णायन्नाह " अभिषोतार एतध्वम्, ग्रावस्तुतमे हि यजमानं यजमानेन अभिषोतृभिः सह पूर्वयाद्वारा हविर्धानं प्रविश्य, होतृचमसेनाधवनीयापोवनीय चर्मणि निधाय, ताः प्रेक्षमाणं यजमानं "निग्राभ्यस्थ" इति मन्त्रं वाचयति । ता यजमानाय चतुर्णामन्यतमं ग्रावाणं "देवस्यत्वे" ति मन्त्रेण आदत्ते । "ग्रावासी" ति मन्त्रेण अभिमन्त्रयते । ग्रावाणं चर्मणि प्राक्शिरसं निधाय, ग्राव्णाउपरि प्रातःसवनवद्भिरस्य राजानं मिमीत "इन्द्रायत्वे" ति पञ्चभिः मन्त्रकृत्वस्तूष्णीं एवैवचोत्तरां दशकृत्वोऽभिमानः सर्वं राजानं मिमीते । यजमानः अध्वरम्पुष्य, राजवासोऽध्वर्यवे प्रयच्छति । अध्वर्युर्मितं राजानं ", स्वाङ्कृतोऽसि" "सम्प्रयौती" ति वेधोऽमदिवी" ति मन्त्राभ्यां होतृचमसोयाभिरुपसृजति । "धिषणे वीडू" इति मन्त्रेण सिरस्वर्मंनु फलके अभिमृशति । यजमानं "वृषोयांचियत्स्व-बोधुपमिति । अभिषोतारः प्रातः सवनवत् पर्युपविशन्ति । अध्वर्युराह -

---

(१) पुरामार्ध्यं चिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुख-उपविश्य स रौद्रं सामाभिगायति । लोकद्वारसपावा ३३ ।।
छांउ० २, २४, ७-१० ।

"आहरोपप्लुतं" उन्नेता आधवनीयादुदचनेन होतृचमसे अवनयति[1]। "प्रागपागिति"
मन्त्रेण अभिषोतार उपर्यधि होतृचमसे अंशून् परिप्लावयन्ति। अंशुचर्मणि निधाय,
होतृचमसस्था अपो राजन्यासिच्य, राजानं विमृज्य, आकृष्य, "हता ३" हता ३"
इति शब्दं कुर्वन्तः यावत् सकृद्ग्रावमपरिमितमभिषुण्वन्ति। आहरोपप्लुतेत्यादि
ग्रावाणमूर्ध्वं प्रक्षिप्यनीचैः पतन्तीत्यादिक्रीडारूपेण अभिषुण्वन्ति। अपरिमित-
मभिषुत्य, राजानं हस्तेन निष्पीड्य, संभरणीये संभृत्यां तैरणीये उन्नेत्रे प्रयच्छति।
उन्नेता - आधवनीयापोंऽग्रणातैरवनीया धवनीयेपवित्रं वितत्यसंभरणीयमवनयति।
एष एकः पर्यायः, एवं द्वितीयं एवं तृतीयम्। अग्रणां तस्था आधवनीयापोहोतृ-
चमसेवनीयस्माश्रा इत्यादि कुर्यात्। तृतीय पर्यायस्य तृतीये अभिषवे "हता ३"
इत्यस्य स्थाने बृहत्-बृहत् शब्दं करोति। ऋजीषं दशापवित्रेण परिवेष्ट्यां
तैरणीये उन्नेत्रे प्रयच्छति। तदुन्नेता आधवनीये विक्षाल्य, प्रपीड्य, तेनैव मार्गेण
प्रयच्छति। अध्वर्युः ऋजीषं चर्मणि निधाय, सम्मुखान् ग्राव्णः कृत्वा, ग्रावमुखेषु
ऋजीषं चतुर्धा कृत्वा व्यपोहति। उद्गातृभ्यः प्राह: - "सोमोऽभिषुतः" इति।

---

(१) प्रवर्तन्ते माध्यंदिनायसवनाय० अभिषोतारस्तदध्वत० पूर्ववदाराहयित्वा
प्रपाय० तथावृतोर्वाचयति घोषवन्त एवाभिषुण्वन्तो हा ३ हता ३ कृति०
उन्नेताधवनीयेऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीयस्तृतीयस्य
बृहद्बृहदुपयन्तं० तदुन्नेताधवनीये० - - - - - - - - - - - -
तस्मिंस्तंधनोदीचीनदशं दशापवित्रं वितत्य०, बौ० श्रौ० ८।१ ।
एतस्मिन् ग्रावस्तुत् प्रपद्य० । आ० श्रौ० ५।१२ । देवाहंवसवैरीषत्रं
निषेदु० तेषांहस्म स माध्यं दिने मध्यंदिन एवोपोदा सर्पेत । ग्राव्णोऽ
भिष्टौति० एष एतामसं प्रेषितः प्रतिपद्यते, ऐ० ब्रा० ६।१-२ ।

तद्द्रोणकलशे निहिते दशापवित्रे च वितते उन्नेतारमाह - "अप्रमत्तः संततमान्यो-पांशुतान् ग्रहीष्यामीति" । स तथा करोति । धौम्यस्य ग्रहणात् शुक्रपात्रमादाय "अयं वेनः०" "उप० शुक्रायत्वाजुष्टं०" इति मन्त्राभ्यां धारायां गृह्णाति । "एषते योनिर्वीरतां पाहि" इति मन्त्रेण परिमृज्य सादयति । "तं प्रत्नथा०" "उप० मर्कायत्वाजुष्टं०" इति मन्त्राभ्यां मन्थिपात्रेण गृह्णाति । बर्हिषि जवाय सक्तुभिः श्रीत्वा, अपोद्धृत्य, "एष० प्रजाः पाहि" इति मन्त्रेण बर्हिषि परिमृज्य सादयति ।[1] "मरुत्वन्तं वृषभं वा०[2]" "उप० इन्द्रायत्वामरुत्वतेजुष्टं०" इति मन्त्राभ्यां दक्षिणतुंपात्रेण गृह्णाति । "एष० इन्द्रायत्वामरुत्वते" इति मन्त्रेण परिमृज्य सादयति ।

"इन्द्रमरुत्व इह पाहि०" "उप० इन्द्रायत्वामरुत्वतेजुष्टं०" इति मन्त्राभ्यामुत्तरर्तुपात्रेण गृह्णाति । "एष० इन्द्रायत्वा मरुत्वते०" इति मन्त्रेण परिमृज्य सादयति । आग्रयणस्थं सोमं पात्रांतरेऽवनीय, तेनोदवनांतरेण च उपरिष्टाद्दशापवित्रेऽवनीय, तिसृणां धाराणां अवस्तात् "ये देवा०" "उ० विश्वेभ्यस्त्वादेवेभ्योजुष्टं०" इति मन्त्राभ्यां आग्रयणं गृह्णाति । सवनस्थेण

---

(१) प्रसिद्धं शुक्रामन्थिनौ ग्रहौ गृह्णाति । बौ० श्रौ० ८।१ ।

(२) ऋतुपात्राभ्यां द्वौ मरुत्वतीयौ ग्रहौ गृह्णाति । मरुत्वन्तं० परिमृज्य सादयति । बौ० श्रौ० ८।१-२ । मरुत्वन्तं० । तै० सं० १।४।१७-१८ । मध्यन्दिने सवने मरुत्वतीया गृह्यन्ते० ऋतुपात्रेण मरुत्वतीया गृह्यन्ते० । तै० सं० ६।५।५ ।

"हिं, हिं, हिं, सोमः पवते ज्यैष्ठ्याय पवते अधिवदते । आग्रयणोऽसि । "स्रष ते० विश्वेभ्यस्त्वादेवेभ्यः" इति मन्त्रेण परिमृज्य सादयति । "उप० सोन्द्रायत्वा बृहद्वते वयस्वत उक्थ्यायुवेजुष्टं०" इति मन्त्रेण उक्थ्यं गृहाति । "एष० रिन्द्रायत्वोक्थ्यायुवे०" इति मन्त्रेण परिमृज्य सादयति । द्रोणकलशमुपर्यधं कृत्वा, पयसा हिरण्येन सक्तुभिः क्रमेण श्रीत्वा, परिप्लुपात्रं प्रास्य, "द्रप्स-श्चस्कं दयस्ते०" इति मन्त्रेण द्रप्सानु मंत्रयते [1] उन्नेतारमाह [2] - "अरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् ग्रहीष्यामि" । उन्नेता - पूतभृतिपवित्रं वितत्य आधवनीयात् द्वौ वा त्रीन्वोदचनानयति । अध्वर्युः अरिक्ती - पूतभृत् आधवनी-योपसासक्तुभिघृतेन श्रीत्वा द्रोणकलशं "उ० सोन्द्रायत्वा०" इति मन्त्रेण अभिमृशति [3] एतेनैवाधवनीयमेतेनैव पूतभृतं उन्नेतः प्रान्चं राजानं पूतभृतमभिसंप-वयतादशाभिराधवनीयं मृष्टवान्युञ्जतात् [4] उन्नेता - अवकाशोपस्थानां ते तथा कुर्यात् ।

माध्यन्दिनपवमाननिःसर्पणम् -

अध्वर्युर्बर्हिषो आदायोप निःसर्पति । उद्गात्रादिषु प्रातःसवनवत्

(१) तथोपर्यधं द्रोणकलशे परिप्लुपात्रं प्रास्य द्रप्सानुमन्त्रयतेद्रप्सश्चस्कन्द यस्तेद्रप्सो० इति । बौ० श्रौ० ८।२ ।

(२) तथोन्नेतारमाहारिक्तं पूतभृतं०, बौ० श्रौ० ८।२ ।

(३) तथारिक्तपूतभृति० द्रोणकलशमभिमृशतीन्द्रायत्वेत्याधवनीयमिन्द्रायत्वेति पूतभृतम्, बौ० श्रौ० ८।२ ।

(४) तथोन्नेतरित्याह प्रान्चं राजानं०, स तथा करोति । बौ० श्रौ० ८।२ ।

समन्वारब्धेषु आहवनीये "विश्वे देवामरुतइन्द्रो०" इति मन्त्रेण स्रुवाहुतिं जुहोति[1]। यजमानः - विश्वेदेवमरुदिन्द्रेभ्य इदं नमम इति त्यागः पठेत् । यथावेदमितरे । एतथैव प्रतिप्रस्थाता । अध्वर्युः प्रदक्षिणमावृत्त्य, प्रह्वोबर्हि-षोधून्वानः पवमानार्थं "वाग्ग्रं" इति मन्त्रेण सदः प्रसर्पति[2]। सदसि यथायतनं उपविश्य, "ऋक् सामयोरि" ति मन्त्रेण प्रस्तोत्रे बर्हिषो प्रयच्छति । "वायुर्हि-ङ्कर्ती" ति मन्त्रेण उपाकरणं जपति । पवमानस्याष्टम्यामृचि प्रस्तुतायां "सुपर्णोऽसि त्रिष्टुप्०" इति मन्त्रं यजमानं वाचयति । चतुर्होतारं व्याख्यायन्ते[3]।

दधिघर्मप्रचारः -
---

समाप्ते साम्नि सम्प्रैषमाह - "अग्नीदग्नीन् विहरबर्हिस्तृणाहि,

---

(१) तथापउपस्पृश्यबर्हिषो आदायोपनिःसर्पति तेषु तथैवसमन्वारब्धेष्वा-हवनीये स्रुवाहुतिं जुहोति विश्वेदेवा० यथावेदमितरेजुह्वति । बौ० श्रौ० ८।२ । विश्वेदेवा मरुत० तै० सं० ३।१।६।२ ।

(२) अथ प्रदक्षिणमावृत्त्य सदोऽभिपवमानं सर्पन्ति तथा सदसि यथायतन-मुपविशन्ति तथोद्गात्रे वा प्रस्तोत्रे वाबर्हिषो प्रयत्यृक्सामयोरुपस्तरण-मसि० । तथोपाकरणं जपति वायुर्हि ङ्कर्तेति । बौ० श्रौ० ८,२ ।

(३) स एष पञ्चदशो माध्यंदिनः पवमानोभवति० चतुर्होतारं व्याचष्टो माध्यंदिने पवमाने चतुर्होतारम्, तै० ब्रा० २,२,८,३ । सुपर्णोऽसि त्रिष्टुप् छन्दा अनुत्वारभे स्वस्ति मा सं पारय ।

पुरोडाशानलं कुरु प्रतिप्रस्थातर्दधिघर्ममधिवद व्याहर" । अप उपस्पृश्य, "इति यजमानं इति प्रैषं ददाति । ततः - यजमानेन सह पूर्वयाद्वारा हविर्धानं प्रविश्य, समस्तं राजानं, "विष्णोस्त्वं न०" इति मन्त्रेणोपतिष्ठते । यजमानोऽध्वर्युः प्रातःसवनवत् अवकाशः सर्वं "परिभूर० न्भूर्भे" इति मन्त्रेणोपतिष्ठते । "प्राणाय" त्युपांशुम् । "अपानाय" त्यन्तर्याममृ । "व्यानाय" त्युपांशुसवनम् । "चक्षुर्भ्या" मिति शुक्रामन्थिनौ । "आत्मान" इत्याग्रयणम् । "अङ्गेभ्य" इत्युक्थ्यम् "आयुष" इति ध्रुवम् । ऋतुपात्रे - "प्रतिक्षयेन्भे०" इति मन्त्रावृत्तिः । "विष्णो" रिति द्रोणम् । "इन्द्रस्य" त्याधवनीयम् । "विश्वेभ्या" मिति पूतभृतम् । "कोसो" ति सर्वम् उपतिष्ठन्ते[1] । उन्नेता - पूतभृति पवित्रं वितत्य, आधवनीयस्थं[2] सोममवनीय, आधवनीयमृष्ट्वा- न्युब्जति । प्रातःसवनवत् धिष्ण्याव्याधारणं - पुष्प्यास्तरणं च । अध्वर्युः - दधिघर्मस्य उभयतः शान्तिं कुर्वन्नं तरेण हविर्धाने उपविश्य, प्रतिप्रस्थात्रा दधि- घर्माधिहृतं दधि "ज्योतिरसि०"[3] इति मन्त्रेणावेक्षते । चमसे बर्हिषि अन्तर्धाय "यावतीद्यावापृथिवी०"[3] इति मन्त्रेण गृह्णाति । अपोहृत्य, बर्हिषि दध्यवेक्ष्य - "वाक्त्वा मनश्च श्रोणीताम्०"[4] इति मन्त्रं वदति । ततः - अध्वर्युः होतारं प्रति

---

(१) उद्धृते शम्भिसं प्रैषमाह अग्नीदग्नीन् विहर० - - - - निर्णिज्यपात्रं प्रयच्छति । बौ० श्रौ० ८,२-३ । दधिघर्मेण चरन्ति प्रवर्ग्यवांश्चेत् । तस्योक- मृगवानं घर्मेण । इज्याभक्षिणाश्च । आ०श्रौ० ५,१३,१-३ ।

(२) आग्नीध्रे सवने विहरति, तै० सं० ६,३,१ ।

(३) ज्योतिरसि० । यावतीद्यावापृथिवी० । तै० सं० ३,२,६ ।

(४) वाक्त्वामनश्च श्रोणीताम्० - - - शृतायत्वाशृतेभ्यस्त्वा, तै०ब्रा०३,७,६ ।

आह - "होतर्वदस्व" "यत्वार्यं" मिति । होता - "उत्तिष्ठतावपश्यतें"[1] ति मन्त्रं पठति । "शृतं हविरि"त्युक्ते होता - "शृतं हविरो ष्विन्द्रे"[1] ति मन्त्रं पठति ।
ततोऽध्वर्युः अत्याक्रम्य, आश्राव्याह - "दधिघर्मस्य यज" इति होता - ये ३ यजामहे शृतं मन्य ऊधनि इति याज्या मन्त्रं पठति । वषट्कृते जुहोति, अनुवषट्कारे - दधिघर्मस्याग्नेवीहीति विशेषः । ततोऽध्वर्युः - "यमिन्द्रमाहु-र्वरुण"[2] मिति जुहोति । यजमानः - इन्द्रायेदं नममेति त्यागः कुर्यात् । अध्वर्युः दधिघर्मपात्रं होत्रे ददाति । अध्वर्युः - "होतरुपह्वयस्व" इति उपह्वानं कुर्यात् ।
उपह्वाने - होत्रध्वर्युः, ब्रह्म, प्रतिप्रस्थात्राग्नीध्, प्रस्तोतृयजमानाः - क्रमेण परस्परं उपहूय "मयित्यदिन्द्रियं महत्०"[3] इति मन्त्रेण प्राणभक्षं भक्षयन्ति ।
यजमानः प्रत्यक्षं भक्षयति । निर्णिज्यपात्रं प्रयच्छति । तूष्णीं शालां, मेक्षणञ्च, प्रहृत्य, उपवेश निरसनं कुर्यात् । इति दधिघर्मप्रचारः ।

पशुपुरोडाशयागः -

---

आग्नीध्रः भिन्नपात्र्यां पशुपुरोडाशं पूर्ववत् सवनीयांश्चोद्धास्य वेर

---

(१) होतर्वदस्वेत्युक्त उत्तिष्ठतावपश्यतेत्याह । शृतं हविरित्युक्तः शृतं हविरित्यन्वाह । शृतं मन्य ऊधनि श्रातमग्नाविति यजति । अग्ने-वीहीत्यनुवषट्कारः । दधिघर्मस्याग्ने वीहीति वा । आ० श्रौ० ५,१३,४-६ । उत्तिष्ठता० । शृतंहविरो० । शृतंमन्यऊधनि० । ऋ० सं० १०,१७९।१-३ ।

(२) यमिन्द्रमाहुर्वरुण० । तै० ब्रा० ३,७,६ ।

(३) मयित्यदिन्द्रियं महत्० तै० ब्रा० ३,७,६ । मयित्यदिन्द्रियं बृहत् मयिद्युम्नमुतक्रतुः - - - भक्षजपः । आ० श्रौ० ५,१३,६ ।

सादयति । अध्वर्युः जुहूपभृतोः उपस्तृणन् आह - "अग्नयेपुरोडाशस्यावदीय-मानस्यानुब्रूहि" । ततः पशुपुरोडाशस्य पूर्वापरार्धात् अवदाय, अत्याक्रम्य, आश्राव्याह - "अग्नयेपुरोडाशं प्रस्थितं प्रेष्य" । ततो मैत्रावरुणः - प्रैषमन्त्रपाठं कुर्यात् । ततः अध्वर्युः - "अग्निं यज" इति होतारं प्रेष्यति । होता - ये ३ यजामहे यथाविप्रस्यमनुषोहविर्भिः०" इति याज्यां पठति । अध्वर्युः वषट्कृते जुहोति । यजमानः - अग्नये इदं नमम इति त्यागः । पशुपुरोडाशस्य स्विष्ट-कृद्यागः - अध्वर्युः स्विष्टकृदेत्युक्ते होता - ये ३ यजामहे स्वदस्वहव्या० इति स्विष्टकृद्याज्यां पठति । वषट्कृते जुहोत्यध्वर्युः ।

माध्यन्दिनस्य सवनीययागः[१] -

---

ततोऽध्वर्युः जुह्वाबु उपस्तृणन्नाह - "माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामवदीय मानानामनुब्रूहि" । अध्वर्युः - सवनीयानां द्विर्द्विरवत्य-भिघारयति । प्रत्यनवत्युपभृति पशुपुरोडाशावदानस्योपरि सकृत् - सकृदुत्तरार्धात् सवनीयानामवद्यति, द्विरभिघारयति प्रत्यनक्ति । अध्वर्युराश्राव्याह - "माध्यं दिनस्य सवनस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य" । ततो मैत्रावरुणः प्रैष-

---

(१) तेषां तथैव समवयन्नाह माध्यंदिनस्य० अत्याक्रम्य आश्राव्याह माध्यं दिनस्य सवनस्येन्द्राय० वषट्कृते जुहोति । बौ० श्रौ० ८।३ । माध्यं दिनस्य सवनस्य धाना इति माध्यं दिने । आ० श्रौ० ५।४।३ । माध्यंदिनस्य सवनस्य० कृ०सं० ३।५२।५ ।

मन्त्रं पठति[1]। अध्वर्युः "यज" इत्युक्ते होता - ये ३ यजामहे हरिवां इन्द्रोधाना०[2] वौषट्। वषट्कृते जुहोत्यध्वर्युः।

स्विष्टकृद्यागः[3] -

अध्वर्युः - "अग्नयेऽनुब्रूहि" इति होतारं प्रेष्यति। होता - माध्यंदिने[4] सवने जातवेदः इति पुरोनुवाक्यां पठति। अध्वर्युः - "अग्नये प्रेष्य" इति मैत्रावरुणाय प्रेषयति। मैत्रावरुणः होतायक्षदग्निं[5] पुरोडाशानां जुषतां हविर्होतर्यज" इति प्रैषमन्त्रपाठं करोति। होता - ये ३ यजामहे हविरग्नेवीहि वौषट्[6]। वषट्कृते उत्तरार्धपूर्वार्धे जुहोत्यध्वर्युः। यजमानः - अग्नये स्विष्टकृत इदं नमम इति त्यागः पठेत्। ततोऽध्वर्युः मेक्षणादौ अनुप्रहृत्य, अभिहुत्य, पशुपुरोडाशात् प्राशित्रमवदाय, इडां चावदाय, इडां होतुरग्रे निदध्यात्।

---

(१) होतायक्षदिन्द्रं हरिवां इन्द्रोधाना० - - - - - - - होतर्यज। खिलम् ५,७,४। नि० कु० प्रै० च०, पृ० २३,५५।

(२) उद्धृत्यादेशपदं तेनैवेज्या। आ० श्रौ० ५।४।४-५।

(३) तथासमावपमान आहाग्नयेऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति वषट्कृत उत्तरार्धपूर्वार्धे यजत्वेडेति वदन्तः।

(४) अथ स्विष्टकृतोऽग्ने जुषस्वनो हविर्माध्यंदिने सवने जातवेदः, आ० श्रौ० ५।४।६। माध्यंदिने सवने ऋ०सं० ३।२८।४।

(५) होतायक्षदग्निं० खिलम् ५।७।४।३। नि०कु०प्रै०च०, पृ० २३,५६।

(६) होतायक्षदग्निं पुरोडाशानामिति प्रैषो हविरग्नेवीहीति याज्या, आ० श्रौ० ५।४।७।

प्रस्थितयाज्या: -

---

अध्वर्यु: आश्राव्याह - माध्यं दिनस्य सवनस्य० - - - प्रेष्य[1]।
मैत्रावरुण[2]: होतायक्षदिन्द्रं माध्यं दिनस्य० - - - - - सोमं होतर्यज
इति प्रैषमन्त्रं पठति। होता ये ३ यजामहे पिबासोममभियमुग्रतर्द०[3] इति
प्रस्थितयाज्यां पठति। अध्वर्युर् वषट्कृते सानुवषट्कृते च जुहोति। यजमान: -
इन्द्रायेदं नममेति त्याग:। ततो ध्वर्यु: - अयाडग्नीत्[4] आग्नीध्र: - 'अयाट्'
इति प्रत्युक्ते होता - 'सम्द्रमकर्योन: सोमस्य पाययिष्यति' इति जपति[5]।

---

(१) समानं कर्माश्रावणादाश्रावण एवं० माध्यं दिनस्य सवनस्य० वषट्कृते
सहोमौ जुहुत: सप्रथम:। बौ० श्रौ० ८।४ ।

(२) होतायक्षदिन्द्रं माध्यं दिनस्य सवनस्य० होतर्यज। खिलम्
५,७,४ अ:। नि० कु० प्रै० च० पृ० २३,५७ ।

(३) पिबा सोममभियमुग्रतर्द इति। आ० श्रौ० ५,५,२०।
पिबासोममभिय० ऋ० सं० ६,१७,१ ।
ते वै खलु सर्व एव माध्यंदिने० पिबासोममभियमुग्रतर्द
इति होता यजति, ऐ० ब्रा० ६,११ ।

(४) होतासुपविशति अयाडग्नीत् इति। सम्द्रमक: इत्याह
होता यो न: सोमं राजानं पाययिष्यति इति।
बौ० श्रौ० ८।४, आ० श्रौ० ५,५,२७-२६ ।

(५) सम्द्रमकर्योन: सोमस्य पाययिष्यतीति होता जपति,
आ० श्रौ० ५।५।३० ।

इडोपाह्वानम् - अत्र कर्मस्मारिका कारिका :-

यदा तु प्रातः सवन एव सर्वेषां सवनीयानां निर्वापः तदापशु-पुरोडाशेन सह माध्यं दिनसवने प्राशित्रहरणान्तेन प्रचर्य, माध्यं दिन सवनीयैः प्रचर्य च इडां होतुरग्रे निदध्यात्[1]।

अत्र इडोपाह्वानं प्रातः सवनवत् नाराशंस सादनान्तं कुर्यात् । ततः सोमभक्षः । यजमानः - सन्नेषु नाराशंसेषु आग्नीध्रीयं गत्वा हविः शेषं प्राश्नाति । पत्नी स्वशालायां भक्षायां करोति[2]।

दक्षिणाहोमः -

ततोऽध्वर्युः अपूर्णाज्यस्थालीं ध्रुवां, स्रुचं, वासः, वासस्य अन्तिमायां दशायां ग्रथितो हिरण्यशल्कः इत्यादाय - 'एहियजमान' इति वदति । पश्चात् यजमानेन सह उत्तरेण आग्नीध्रीयं धिष्ण्यं सदः परीत्य, पूर्वद्वाराशालां प्रविश्य, शालामुखीये आज्यं विलाप्य, उत्पूय, स्रुचि चतुर्गृहीतं गृहीत्वा, यजमानपरिवार-ज्ञातिषु समन्वारब्धेषु वाससा संप्रच्छन्नेषु वैसर्जनवत् वसनस्यान्तं स्रुग् दण्डं उपसंगृह्य, हिरण्यं स्रुग् बिले धारयन् 'उदुत्यं जातवेदसं०' इति मन्त्रेण शाला-मुखीये जुहोति । अपरं चतुर्गृहीतं गृहीत्वा 'चित्रं देवानां' इति मन्त्रेण जुहोति ।

---

(१) ना० शे० प्र०, पृ० ६४ ।

(२) बौ० श्रौ० ८।४ ।

तथैव आग्नीध्रीये "अग्नेनयसुपथा०" इति मन्त्रेण जुहोति । ततः स्रुग् बिलात्
हिरण्यं उद्गृह्णाति "दिवं गच्छसुवः पत" इति मन्त्रेण । पूर्वमेव संचरेण
चात्वालोत्करौ प्रपाय, सदसोदक्षिणतस्थापिता दक्षिणान्चरेण सदः
शालामुखीयं वान्तरेण सदश्चाग्नीध्रीयं वान्तरेण चात्वालोत्करावुदीच्यां
गमयित्वोत्तरत एकत्र स्थापयित्वा, यजमानः ताः प्रदक्षिणं कृत्वा "रूपेणवे-
वोरूपमिति" मन्त्रेण अभ्यैति । यजमानः - कृष्णाजिनपुच्छेन त्रासयित्वा
"तुथो वोविश्ववेदा०" इति मन्त्रेण विभजति । [१]

दक्षिणायाः विभागः -

तं हिरण्यं चतुर्धा कृत्वा, अर्धिया: द्वादशप्रथमानाम्, षट् द्वितीयानाम्,

---

(१) अथ दाक्षिणानि होष्यन्यावत्याज्यस्थालीं सस्रुवां स्रुचं० - गार्हपत्ये-
जुहोत्युदुत्यं जातवेदसं० गार्हपत्य एव जुहोति चित्रं देवानां० आग्नी-
ध्रीये जुहोत्यग्ने नयसुपथा० अथ दिवंगच्छ सुवः पतेति हिरण्यं हुत्वोद्
गृह्णाति० ता० प्रदक्षिणं कृत्वाभ्यैति रूपेण वो० अथैना विभजति
तुथो वो० । बौ० श्रौ० ८।५ । उदुत्यं जातवेदसं० । चित्रं देवानां० ।
अग्नेनयसुपथा० । दिवं० । रूपेण वो० । तुथो वो० । तै० सं०
१,४,४३ । माध्यं दिने सवने दक्षिणानीयन्ते० । तै० सं० ६,१,६ ।
उत्तरेणाग्नीध्रं परीत्य जुहोति दक्षिणानि० ६,३,१ । सुवर्गाय
वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि । द्वाभ्यां गार्हपत्ये जुहोति०
आग्नीध्रे जुहोति० । सदोऽभ्यैति० वोरोभ्यामुग्भ्यां गार्हपत्ये जुहोति०
नयवत्यर्चाग्नीध्रे जुहोति० दिवंगच्छ सुवः पतेति हिरण्यं हुत्वोद्गृह्णाति०
हिरण्यं ददाति० आग्नीध्रे ददाति० ब्रह्मणेददाति० होत्रेददाति० ।
तै० सं० ६,६,१ ।

चतस्रः तृतीयानाम्, तिस्रः चतुर्थानामिति विभागः । निष्क्रमस्याप्येवमेव ।[1]

"एतत्ते अग्नेराध इति०"[क] इति मन्त्रेण सदः अभ्येति । सदसि पुरस्तात् आसीनं आत्रेयब्राह्मणमभ्येति "ब्राह्मणमद्यराध्यासमिति"[क] किञ्चित् गत्वा यजमानः पृच्छति क आत्रेयः ? उत्तरयति सोयमहमिति एवमेव प्रकारेण त्रिवारं पृच्छति, सोपि त्रिवारमुत्तरयति । ततो यजमानः - आत्रेयं सम्पूज्य तस्यपाणौ हिरण्यमाददाति । अन्यदपि यथासंभवं वस्त्रादि ददाति ।

ततः आग्नीध्रं गत्वा, यथाभागं आग्नीधे दक्षिणां ददाति । सदसि गत्वा ब्रह्मणे, होत्रे उद्गात्रे च दक्षिणां ददाति । हविर्धानं गत्वा यथासंभवं दक्षिणान्तो ददाति । ततः सद आगत्य, प्रस्तोत्रे, प्रशास्त्रे, ब्राह्मणाच्छंसिने, अच्छावाकाय, पोत्रे, नेष्ट्रे, ग्रावस्तोत्रे उन्नेत्रे, सुब्रह्मण्याय यथाभागं दक्षिणांते ददाति । सर्वे एव स्वशाखोक्तां मन्त्रं पठित्वा दक्षिणां प्रतिगृह्णन्ति । ततः अध्वर्युः यजमानेन सह आग्नीध्रं गत्वा, स्रुचि चतुर्गृहीतं गृहीत्वा - "यज्ञपति-

---

(१) अथैष आत्रेयोऽग्रेण सद आस्ते० - - - - - अथ दक्षिणाः समनुदिशत्यस्मद्दात्रा देवत्रा० संस्कृतमिति, बौ० श्रौ० ८।६ । मध्यं दिने दक्षिणानीयन्ते० । ऐ० ब्रा० ३,२५ । अश्वं निविदां संस्रवणात् अथैव ब्रह्मण आसाधेमितरेणामृत्विजाम् । ऐ० ब्रा० ५, ३४, तदाहुः कस्मादस्माकृष्णं दक्षिणामभ्याजन्तीति० दक्षिणा अनु सुब्रह्मण्या संतिष्ठते० । ऐ० ब्रा० ६,३ ।

(क) एतत्ते अग्ने० । ब्राह्मणमद्य० । तै० सं० १, ४, ४३ ।

मृषय०" इति मन्त्रेण आग्नीध्रीये जुहोति । अपरं चतुर्गृहीतं गृहीत्वा "अन्यान्त्सोमपानिति" मन्त्रेण जुहोति । पुनः "येमदायन्ती०" इति मन्त्रेण तथैव जुहोति । पुनः तथैव गृहीत्वा "नमः पितृभ्यो०" इति मन्त्रेण जुहोति ।

यजमानः - विश्वकर्मण इदं नममेति त्यागः कुर्यात् । ततः शालामुखीयं गत्वा - (१) ये देवा यज्ञहनः, (२) ये देवायज्ञमुषः, इति मन्त्रद्वयेन पूर्ववत् जुहोति । अग्नय इदं नममेति त्यागः पुनः आग्नीध्रमभिप्रैति, पुनः पूर्ववत् गृहीत्वा १- ये देवायज्ञहनः० २- ये देवायज्ञमुषः०" इति मन्त्राभ्यां जुहोति । वायव इदं नममेति त्यागः । ततः आहवनीयमभिप्रैति "यास्तेरात्रीः०" इति मन्त्रेण । पुनः पूर्ववत् तथैव द्वाभ्यां मन्त्राभ्यां जुहोति । सूर्यायेदं नममेति त्यागः । "येनेन्द्रायसमभर०" इति मन्त्रेण आहवनीयं उपतिष्ठते । "विभुवः" इति मन्त्रेण यजमानं प्राञ्चं ईक्षयति । "यतस्व सदस्यैः०" इति मन्त्रेण सदसि उपविशति । यजमानः "अस्मदात्रा देवत्रा गच्छते" ति मन्त्रेण दक्षिणाः समनुदिशति ।

मरुत्वतीयग्रहप्रचारः -

---

तत: अध्वर्युः प्राङ०ायन्नाह - "इन्द्राय मरुत्वतेऽनुब्रूहि" प्रतिप्रस्थात्रा

---

(ख) यज्ञपतिमृषय० । अन्यान्त्सोमपान्० । ये मदायन्ती० ।
नमः पितृभ्यो० यद्विश्वकर्मणानि जुहोति० । तै० सं० ३,२,८ ।

(ग) ये देवा यज्ञहनः । ये देवायज्ञमुषः० । यास्तेरात्रीः० । येनेन्द्राय० ।
तै० सं० ३,५,४ ।

(घ) विभुवः० । अस्मद्दात्रा० । तै० सं० १,४,४३ ।

मरुत्वतीयौ ग्रहावादायोपनिष्क्रामति । अध्वर्युः दक्षिणेन प्रथमम्, सव्येन द्वितीयम्, ग्रहमादायोत्तरतस्तिष्ठते[1] । प्रतिप्रस्थात्रे द्वितीयं प्रदायाश्राव्याह - "इन्द्रायमरुत्वते प्रेष्य" । मैत्रावरुणः प्रैषमन्त्रं पठति[2] । ततः होता - ये ३ यजामहे "सजोषाइन्द्रसगणो मरुद्भि०" इति सानुवषट्कार पूर्वकं याज्यां पठति[3] । अध्वर्युः - वषट्कृतानुवषट्कृते सह उभौ जुहुतः । यजमानः - इन्द्रायेदं नमम, अग्नयेस्विष्टकृत इदं नममेति त्यागः कुर्यात् । ततः प्रतिप्रस्थाताऽध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति । अध्वर्युस्तमाह - "प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहाण" । ततः प्रतिप्रस्थाता तस्मिन् द्रोणकलशात् परिप्लुतापात्रेण "मरुत्वां इन्द्रो वृषभोरणाय०" उप० इन्द्रायत्वा - मरुत्वतेजुष्टं०" इति

---

(१) अथ प्राङ्आयन्नाहेन्द्राय मरुत्वतेनुब्रूहीति० इन्द्राय मरुत्वते प्रेष्येति । वषट्कृते सहोभौ जुहुतोऽथ प्रतिप्रस्थाता० तमाहप्रतिप्रस्थातो तेन पात्रेण तेन प्रतिप्रस्थाता तृतीयं मरुत्वतीयं ग्रहं गृह्णाति० उपयामगृहीतोऽसीन्द्रायत्वा० परिमृज्य सादयत्येष तेयोनिरिन्द्रायत्वामरुत्वत इति । बौ० श्रौ० ८।७ । मरुत्वतीयेन ग्रहेण चरन्ति । आ० श्रौ० ५,१४,१ ।

(२) होता यक्षदिन्द्रं मरुत्वन्तमिन्द्रो मरुत्वान्जुषतां वेतु पिबतु सोमं होतर्यज । नि० कु० प्रै० न० पृ०२४,५८ । सिल्ट ५,७,४ (ड) ।

(३) इन्द्रमरुत्व इह पाहि सोमं होतायक्षदिन्द्रं मरुत्वन्तं सजोषाइन्द्र सगणोमरुद्भिरिति महायित्वैतत्पात्रं मरुत्वतीयं शस्त्रं शंसेत् । सजोषाइन्द्रसगणो० ऋ० सं० ३,४७,२ । आ० श्रौ० ५।१४।२ । इन्द्रमरुत्व इह० ऋ० सं० ३,५१,७ पुरोनुवाक्या ।

(४) मरुत्वां इन्द्रो० । उप० इन्द्रायत्वा० । एषतेयोनि० ।तै०सं०१,४,१६ ।

मन्त्राभ्यां गृह्णाति । "एषते योनिरि" ति मन्त्रेण तं मरुत्वतीयं ग्रहं परिमृज्य सादयति ।

मरुत्वतीय ग्रहभक्षणम्[१] -

ततोऽध्वर्युः होत्रे पात्रं प्रदाय, ततो होताऽध्वर्युरुपहूयस्व ? प्रतिप्रस्थातरुपहूयस्व ? इत्युपहूय ह्रिर्भक्षयेत् । तेन भक्षिते तं प्रतिप्रस्थातारं चोपहूय "रुद्रवत्० स इन्द्रेण" ० इति मन्त्रेण द्विवारं भक्षयेत् । एवं तावुपहूय प्रतिप्रस्थाता भक्षयेत् । ततः अध्वर्युः पात्रं निगृह्य, आवृत्त्य, "इडादेवहूः" ० इति जपति । ततः मरुत्वतीय स्तोत्रम्[२] । मरुत्वतीय स्तोत्रे स्तुते होता मरुत्वतीयं शस्त्रं शंसेत् । शस्त्र शंसने अध्वर्युः प्रतिगरं ददाति ।

मरुत्वतीयशस्त्रशंसनविधिः -

होताः - हिं भूर्भुवस्वरोम् अध्वर्यो शों ३ सावो ३ म् "मात्वारथं

---

(१) अध्वर्युः प्रदक्षिणमावृत्त्य प्रत्यङ्ङुदङ्ङावृत्त्य होतृत्पात्रं संभक्षयन्तीन्द्रेण० अथनिगृह्यपात्रं पराङावर्तत इडा-देवहूरिति व्यावदेतस्य यजुषः० - पर्याप्नोति तावज्जपत्यथैनमाह्वयते होता प्रत्याह्वयतेऽध्वर्युः - शंसति प्रतिगृणाति, बौ० श्रौ० ८।७ ।

(२) अभित्वाशूरनोनुमो० सा० जै० सं० ३,४,१-२ ।

यथोत्थे[2]० ३ तोम्, इयं कृ त्रिवारं पठति । हिरण्ययो ३ म् --

शौं सावो ३ म् [2]इदं वसो सुतमन्धः पिबा०[3] ३ मादो ३म् ।

शौं सावो ३ म् [3]प्रनूनं ब्रह्मणस्पतिर्मन्त्रं० देवाओकांचक्रिरी ३ म् देवाओकांचि
चक्रिरेष मन्त्रं देवाजनेह्यो ३म् मन्त्रं देवा अनेहस मिमां वाचं०
वो ३ म्[4] ।

शौं सावो ३ म् - [5]इन्द्रनेदीय एदिहिं, ३, वानुषो ३ म् ।

शौं सावो ३ म् - अग्निर्नेतामगत्व[6]दिहातोनाम् । देवोनां देवकृतुवा क्तावो ३ म्
मन्त्रं देवा अनेहसमिमां च वाजं प्रतिहर्यथानरः । विश्वेदामा
वो अश्नवो ३ म् ।

---

(१) अध्वर्यो शौं सावोमिति माध्यंदिने श्स्त्रादिष्वाहावः । ०
- - - - - - - - - - - - - - - - - - - - - अर्थं वाचि
कृण्वतेत्येति शस्त्वा जपेत् । आ० श्रौ० ५।१४।३-२६ । बलोयस्या
वाचा माध्यंदिने शंसेत्० । ऐ० ब्रा० ३,४४ । अध्वर्यो शौं सावोश्म्
इत्याहूवयते मध्यं दिने षडक्षरेण । शंसामो दैवोम् इत्यध्वर्युः
प्रतिगृणाति पञ्चाक्षरेण । ऐ० ब्रा० ३,१२ ।
इन्द्रो वै वृत्रं हत्वा नास्तृणोति मन्यमानः पराः परावतोऽगच्छत्०
स वाचं प्रविश्या शयत्० ऐ० ब्रा० ३,१५-२६ । गर्भा वा एत उक्थानां
यन्निविदः यन्मध्यतो मध्यं दिने धोयन्ते० । ऐ० ब्रा० ३,१० ।
अनिष्ठाउग्रः सहसे तुरायेति सूक्तं शंसति० ऐ० ब्रा० ३,१९-२० ।

(२) आत्वारथं यथोतये० । ऋ०सं० ८,६८,१-३ । आद्यां त्रिराहंत्रिः शंसेत् ।

(३) इदं वसो० । ऋ०सं० ८,२,१-३, प्रतिपतृचः । अनुचरस्तृचः ।

(४) प्रनूनं ब्रह्मणस्पतिः० ऋ० सं० १,४०,५-६,ब्राह्मणस्पत्यः प्रगाथः ।

(५) इन्द्रनेदीय एदिहि० ऋ० सं० ८,५३,५-६ । इन्द्रनिहवः प्रगाथः ।

(६) अग्निर्नेता०  । ऋ० सं० ३,२०,४, धाय्या ।

शौं सावो ३ मु[1] - त्वं सोमक्रतुभिः सुक्रतुर्भूः । त्वं दक्षैः सुदक्षो विश्ववेदो ३ मु
त्वं वृषावृषत्वेभिर्महित्वा । द्युम्नेभिर्द्युम्न्यभवो नृचक्षो ३ मु ।

शौं सावो ३ मु[2] - पिन्वन्त्यपो मरुतः सुदानवः । पयोघृतवद्विदथेष्वाभुवो
३ मु अत्यं न मिहे विनयन्ति वाजिनम् । उत्सं दुहन्ति
स्तनयन्तमक्षितो ३ मु -

शौं सावो ३ मु[3] - प्रवइन्द्राय बृहते० - - - - श्यास्वौं ३ मु ।

शौं सावो ३ मु[44] - जनिष्ठाउग्रः सहसे तुराय । मन्द्र ओजिष्ठो बहुला
भिमानो ३ मु अवर्धन्निन्द्रं मरुतश्चिदत्र माताचद्वी रंदधनद्ध-
निष्ठो ३ मु० द ।

शौं सावो ३ मु[5] - इन्द्रो मरुत्वान् सोमस्य पिबतु० । वसागमो ३ मु ।

शौं सावो ३ मु[6] - त्वं जघन्थनमुचिं मखस्युम् दासं कृण्वान् ऋषये विमायो ३ मु
त्वं च कर्थमनवे स्योनान् । पथो देवत्राञ्जसेव यानो ३ मु ।

शौं सावो ३ मु[7] - वयः सुपर्णा उपसेदुरिन्द्रम् । प्रियमेधाऋषयो नाधमानो ३ मु
अपध्वान्तमूर्णुहि पूर्धि चक्षुः । मुमुग्ध्यस्मान् निधयेव

---

(१) त्वं सोमक्रतुभिः । ऋ० सं० १, ९१,२ ।

(२) पिन्वन्त्यपोमरुतः । ऋ० सं० १, ६४,६ ।

(३) प्रवइन्द्रायबृहते० । ऋ० सं० ८,८९,३-४ । मरुत्वतीयः प्रगाथः ।

(४) जनिष्ठाउग्रः सहसे० । ऋ०सं० १०,७३,१-६ । निविद्धानीयं सूक्तम् ।

(५) इन्द्रोमरुत्वान् सोमस्य पिबतु० खिलम् ५,५२ ।
नि० कु० प्रे० च०, पृ० १,२ - निर्विड् ।

(६) त्वं जघन्थ० । ऋ० सं० १०,७३,७-१० ।

(७) वयः सुपर्णा० । ऋ० सं० १०,७३,११ । परिधानीया ।

वदो ३ मु० । एवं कृत्वा अनेनैव प्रकारेण त्रिवारं पठेत् । पश्चात् उक्थं वाचीन्द्राय शृण्वते त्वा [1]। ततोऽध्वर्युः [2] तत्रैव मरुत्वतीय ग्रहपात्रन्निधाय शस्त्र प्रायश्चित्तानि हुत्वा, तृतीयं मरुत्वतीयग्रहमुपोपच्छते । तथैव क्रमशाध्वर्यवौ नाराशंसान् क्रियते । ततः अध्वर्युराश्राव्याह - "उक्थशायज सोमस्य" इति । ततो होता - मरुत्वतीय शस्त्र याज्यां पठेत् ।

शस्त्रयाज्याः -

ये ३ यजामहे "ये त्वाहि हत्ये० [3] - - - - - मरुद्भिर्वौषट्, सोमस्याग्नेवीहो ३ वौषट् । अत्र द्विर्वाजेज: । वषट्कृतानुवषट्कृते द्विर्जुहोत्यध्वर्युः । तथैव द्विवारं नाराशंसान् अनुप्रकम्पयति [4]। यजमानः - इन्द्राय मरुत्वत इदं नमम । पूर्वेभ्यः पितृभ्य इदं नमम अपउपस्पृश्य, अग्नयेस्विष्ट कृत इदं नमेति अध्वर्युः होत्रे पात्रं प्रदाय, तेन भक्षिते भक्षयति । होतृचमसं - होत्रध्वर्युप्रतिप्रस्थातारो नाराशंसपीतेन भक्षयन्ति । ब्रह्मादयो होतारमुपह्वय,

---

(१) आ० श्रौ० ५,१४,२६ ।

(२) प्रसिद्धमुक्थं प्रतिगीर्य प्राङिऽत्योपच्छत एतं तृतीयं मरुत्वतीयं ग्रहमनुप्रकम्पे नाराशंसानुया आव्यस्योआव्यास्तु श्रौषडुक्थशा यजसोमस्येति, बौ० श्रौ० ८।७ ।

(३) ये त्वाहित्येमघवन्नवर्धन्निति याज्या । आ० श्रौ० ५,१४,२६ । ऋ० सं० ३,४७,४ ।

(४) बौ० श्रौ० ८।७ ।

स्व स्व चमसं नाराशंस पीतेन भक्षयन्ति । ततः आत्मानमभिमृश्य, आप्याय्य, नाराशंसान् चमसान् सादयन्ति । अध्वर्युः पात्रं निधापयति[1] ।

माहेन्द्रग्रहप्रचारः[2] -

अध्वर्युः प्राङ्०त्य, शुक्रपात्रमाददानः उन्नेतारं प्रेषयति । प्रैषः - उन्नेतर्यदिमं माहेन्द्रं ग्रहं गृह्णाम्यथोदन्वं राजानं पूतभृतमभिसंपवयताद् - दशाभिद्रोणकलशमृष्ट्वा न्युब्जतात् । द्रोणकलशात् परिप्लुतापात्रेण 'महां इन्द्रोय[क] ओजसा०' उप० महेन्द्रायत्वाजुष्टं०' मन्त्राभ्यां माहेन्द्रं ग्रहं गृह्णाति । 'एष ते योनिः' इति मन्त्रेण तं परिमृज्य सादयति । उन्नेता - पूतभृति पवित्रं वितत्य, द्रोणकलशमवनीयमृष्ट्वा न्युब्जति । अध्वर्युः - वाचं यमः, प्रत्यङ्०Tवृत्य, निष्केवल्यस्तोत्रमुपाकरोति । प्रस्तुते रथन्तर साम्नि सम्प्रैषमाह - अभिषोतारोभि कृणुतात्, अग्नीदाशिरं विनय, उलूखलमुद्वादय, प्रतिप्रस्थातः वारुणमेककपालं निर्वप सौम्यस्य विद्धि । आस्तोत्रसमाप्तेः प्रतिप्रस्थातृनेष्ट्रादयो-

---

(१) अनुहवनमत्ता इन्द्रेण मरुत्वता पीतस्येति होतावेवाध्वर्युश्चैतत् पात्रं संभक्षान्तो नराशंसपीतेन नाराशंसान्नराशंसपीतस्य०
बौ० श्रौ० ८।७ ।

(२) अथ प्राङ्०त्य शुक्रपात्रमाददान आह उन्नेतर्यदिमं माहेन्द्रं० स शुक्रपात्रेण माहेन्द्रं द्रोणकलशात् गृह्णाति महां इन्द्रोय ओजस्व० प्रस्तुतेसाम्नि सप्रैषमाह अभिषोतारो० । बौ० श्रौ० ८।८ ।
यन्माहेन्द्रो गृह्यते० शुक्रपात्रेण गृह्णाति० । तै० सं० ६,५,५ ।

क - महां इन्द्रोयओजसा० । उपयाम० । एषतेयोनि० । तै० सं० १,४,२०-२१ ।

भिषीतार: कर्माणि ग्रावभि: सुत्याभिषवं कुर्वन्ति स्तोत्रमाप्त्यनन्तरं अध्वर्युः आह - उद्गातः परं ददामि । अध्वर्युः प्रैषयति "अग्नीत् सवनीयान्निर्वप" । आग्नीध्र: - आभिघावर्जं प्रातःसवनस्य सवनीयान् पुरोडाशान्निर्वपति" अध्वर्यु: - "इडादेवहू" रिति जपित्वा प्रणवे-प्रणवे प्रतिगरं ददाति ।

निष्केवल्यशस्त्रशंसनविधि: -[1]

होता - हिम् भूर्भुवस्वरो ३ म्, अध्वर्यो शों सावोम् अभित्वाशूरनोनुमोऽ[2] दुग्धा इव धेनव: । ईशानमस्य जगत: स्वर्दृशमीशान् मिन्द्र तस्थुषो ३ म् ईशानमिन्द्र तस्थुषो नत्वावां अन्यो दिव्योनपार्थिव: । न जातोनजनिष्यतो ३ म् न जातो न जनिष्यते स्वायन्तो मघवन्निन्द्रवाजिन: । गव्यन्तस्त्वाहवामहो ३ म् । शों सावो ३ म्[3] - अभित्वा पूर्वपीतय इन्द्रस्तोमे भिरायव: । समीचीनास ऋभव: समस्वरन् रुद्रागृणन्तपूर्व्यो ३ म् रुद्रागृणन्त पूर्व्यमिस्येदिन्द्रोवावृधे-वृष्ण्यं शव: । मदेसुतस्य विष्णवो ३ मदेसुतस्य विष्णव्यधा तमस्य महिमानमायव: ।

---

(१) निष्केवल्यस्य । अभित्वा० । आ० श्री० ५,१५,१-२३ ।
स्तोत्रियं शंसति० - - - - - -वाचाशंस्तव्यम् । ऐ०ब्रा० ३,२४ ।
तस्मादेषानानापि शस्यते० - - - - - स्येत्येतया० । ऐ०ब्रा० ३,२२ ।
(२) अभित्वा० ऋ० सं० ७,३२,२२-२३ । आर्षां नि: इर्षेत् ।
स्तोत्रिय: प्रगाथ: ।
(३) अभित्वापूर्व० ऋ० सं० ८,३,७-८ । अनुरूप: प्रगाथ: ।

अनुष्टुवन्ति पूर्वथो ३ म् ।

शौं सावौं ३ म्[1] - यज्ञावानपुरुतमं पुराषाट् । आवृत्रेन्द्रोनामान्यो ३ म्
अवेति प्रा सहस्पतिस्तु विघ्वान् । यदीमुश्मसिकर्त्तविकरचो-
३ म् ।

शौं सावो ३ म्[2] - पिबासुतस्य रसिन: २, थामयो ३ म् ।

शौं सावो ३ म्[3] - इन्द्रस्यनुवीर्याणि प्रवोचम् । यानि चकार प्रथमानि-
वज्रौं ३ अहन्नहि मन्वपस्ततर्द । प्रवक्षणा अभिनत्
पर्वतानाँ ३, ८ ।

शौं सावो ३ म्[4] - इन्द्रो देव: सोमं पिबतु० । (खिलम् ५,५,३) ।

शौं सावो ३ म्[5] - नीचावया अभवद् वृत्रपुत्रा । इन्द्रो अस्या अवववर्धारो ३ म् ।
उत्तरासूरधर: पुत्र आसीत् । दानु: शये सहवत्सानधेनो म्० 
६ । एशां सो ३ म् ।

शौं सावो ३ म्[6] - इन्द्रो यातोऽवसितस्य० श्यं ऋक् । त्रिवारं शंसेत् । पश्चात
उक्थं वाचेन्द्रायोपशृण्वतेत्मा जपेत् । अध्वर्यु: प्रा०इ०त्य
माहेन्द्रग्रहमुपच्छते, चमसाध्वर्यवो नाराशंसान् । अध्वर्युरा-

---

(१) यज्ञावानपुरुतमं० ऋ० सं० १०,७४,६ । धाय्या ।

(२) पिबासुतस्य० ऋ० सं० ८,३,१-२ । सामप्रगाथ: ।

(३) इन्द्रस्यनुवीर्याणि० ऋ० सं० १,३२,१-८ । निविद्धानीयं सूक्तम् ।

(४) इन्द्रो देव: सोमं पिबतु० खिल ५,५,३ । निविद ।

(५) नीचावया० ऋ० सं० १,३२,६-१४ ।

(६) इन्द्रोयातो० ऋ० सं० १,३२,१५ । परिधानीया ऋक् ।

आव्याह - उक्थशायजसोमस्यें ति । होता - निष्केवल्यशस्त्र याज्यां पठति ।

शस्त्रयाज्या[1] - ये ३ यजामहे पिबासोममिन्द्र० - नार्वा ३ वौषट् सोमस्याग्ने

वीहि ३ वौषट् । अध्वर्युः वषट्कृतानुवषट्कृते जुहोति, नारा-

शंसान् अनुप्रकम्पयतिद्विर्वारम् ।

यजमानः - माहेन्द्राय इदं नमम । ऊर्वेभ्यः पितृभ्य इदं नमम । अध्वर्युः

अपउपस्पृशति । ततः प्रतिप्रस्थातानेष्टोन्नेता अतिग्राह्यान् ग्रहान् गृह्णन्ति ।

ततः प्रतिप्रस्थाता[2] - 'अग्नेतेजस्विन्०' इति मन्त्रेण जुहोति । 'तेजो विदसी' ति

मन्त्रं यजमानं वाचयति । नेष्टा[3] - 'इन्द्रौजस्वि' न्निति मन्त्रेण जुहोति, ऐन्द्रं

होष्यन्नवेक्षतो 'ओजो विदस्योजो०' इति मन्त्रं यजमानं वाचयति ।

उन्नेता[4] - 'सूर्यभ्राजस्विन्०' इति मन्त्रेण जुहोति, सौर्यं होष्यन्नवेक्षते 'सुव-

विंदसि०' इति मन्त्रं यजमानं वाचयति । ततोऽध्वर्युः होतरनुवषट्कृते

माहेन्द्रं जुहोति । नाराशंसान् अनुप्रकम्पयन्ति । यजमानः -

---

(१) पिबासोममिन्द्र० ऋ० सं० ७,२२,१ । आ० श्रौ० ५,१५,२३ ।

(२) माहेन्द्रस्यैव होममनुहूयन्ते । अथैनं होष्यन्नवेक्षते अग्नेतेजस्विन्०

हुत्वा वाचयति तेजोविदसि० भक्षयति मयिमेधां मयिप्रजां मय्यग्निस्तेजो

दधातु इति बौ० श्रौ० ११।११ ।

अग्ने तेजस्विन्० । तेजोविदसि० । तै० सं० ३।३।१ ।

(३) अथैनं होष्यन्नवेक्षते इन्द्रौजस्विन् जुहोति ब्रह्मणस्पत्वा० हुत्वा

वाचयति ओजोविदस्योजो० बौ० श्रौ० १४।११ । इन्द्रौजस्विन्० ।

ओजोविदस्योजो० तै० सं० ३।३।१ ।

(४) बौ० श्रौ० १४,११ । तै० सं० ३,३,१ ।

अन्येस्विष्टकृत इदं नमम । एतत् पात्रं नाराशंसा: अतिग्राह्यास्त्वान्वायन्ति[1]।

अध्वर्युः[2] - होत्रे पात्रं प्रदाय, होतृचमसं नाराशंसपीतेन ब्रह्मादयो होतारमुपहूय स्व स्व चमसान् भक्षयन्ति ।

यजमानः[3] - अध्वर्युमुपहूय, 'मयिमेधा' मिति आग्नेयम्, 'मयि० मयीन्द्र' ऐन्द्रम् 'मयि० सूर्यो०'[3] सौर्यं भक्षयति । अत्र नाप्यायनम् । चमसान् प्रक्षाल्य, यवेन सूर्यो मैत्रावरुणचमसप्रमुखान् चमसान् सादयन्ति । अध्वर्युः प्रतिप्रस्थातारमादिशति - 'इमानि पात्राणि मार्जालीये प्रक्षाल्य, पात्रेष्वपि कुरुते । प्रतिप्रस्थाता - ऋतुपात्रं, शुक्रपात्रं, अतिग्राह्यांश्च मार्जालीये प्रक्षाल्य स्थाने सादयन्ति ।

अध्वर्युः उक्थ्यस्थालीमभिमृशति, ग्रहं परिमृज्य 'एषतेयोनिरिन्द्रायत्वा०' इति मन्त्रेण सादयति । ततः वामदेव्यस्तोत्रोपाकरणम्[4]। स्तोत्रान्ते मैत्रावरुणशस्त्रम् ।

---

(१) वषट्कृतानुवषट्कृते जुहोति तथैव द्विर्द्विर्नाराशंसाननु प्रकम्पयन्त्येतत्पात्रं नाराशंसा अन्वायन्त्यनुवचनमदो महेन्द्रेण पोतस्येति होताचैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन नाराशंसान्नराशंस पीतस्य सोम० कौ० श्रौ० ८।८ ।

(२) होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथा चमसं चमसान् । आत्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान् । सर्वभक्षामार्जयन्ते, कौ० श्रौ० ८।८ ।

(३) मयिमेधां मयिप्रजां मय्यग्निस्तेजो दधातु । तै० सं० ३।३।१ ।

(४) सा० कौ० सं० १,२,२,३,५, २,१,१,१२ ।

मैत्रावरुणशस्त्रशंसनप्रकार: [1] -

मैत्रावरुण: दण्डं निधाय, उपविश्य शंसेत् ।

अध्वर्यो शोंसावो ३ म् कयानश्चित्र आभुवदूतीसदा० [2] ३ - - - - - - - - ।

शिमो ३ म् शोंसावो ३ म् कयात्वं न ऊत्याभि० [3] ३ - - - - - दाशुषो ३ म् ।

शोंसावो ३ म् कस्तमिन्द्र [4] त्वा वसु० २ - - - - दुरितो ३ म् ।

शोंसावो ३ म् सद्योहजातो० [5] - - - - - - - - - धनानो ३ म् ।

[6] एवा त्वामिन्द्रवज्रिन्नत्र० - - - - - - - - - - नर्यां विवेषो ३ म् ।

शोंसावो ३ म् नूष्टुत [7] इन्द्रनू गृणान:० - - - - - - - सदासो ३ म् ।

अध्वर्यु: शस्त्रान्ते प्रायश्चित्तानि हुत्वा, ऐन्द्रग्रहमादाय, आश्राव्याह - उक्थशायक्षोमानाम् इति । मैत्रावरुणस्य शस्त्रयाज्या - ये ३ यजामहे

उशन्नुषण: [8] सुमना० पृष्ठ्यैना ३ वौषट् - सोमस्याग्ने वीही ३ वौषट् ।

अध्वर्यु: वषट्कृतानुवषट्कृते जुहोति । तथैव चमसाध्वर्यव: द्विवारं

---

(१) होत्रकाणां कया नश्चित्र आभुवत्कयात्वं न ऊत्याकस्तमिन्द्रत्वावसुं सद्योहजात एवात्वामिन्द्र:, आ० श्रौ० ५।१६।१ ।

(२) कयान० ऋ० सं० ४,३१,१-३ । आद्यां त्रि: शंसेत् । स्तोत्रियस्तृच: ।

(३) कया त्वं न० ऋ० ८,९३,१९-२१ । अनुरूपस्तृच: ।

(४) कस्तमिन्द्र० ऋ० सं० ७,३२,१४-१५ । प्रगाथ: ।

(५) सद्योहजातो० ऋ० सं० ३,४८ ।

(६) एवात्वामिन्द्र० ऋ० सं० ४,१९,१-१० ।

(७) नूष्टुत० ऋ० सं० ४,१६-२१ । परिधानीया ।

(८) उशन्नुषण: सुमना उपाक इति याज्या । आ० श्रौ० ५,१६,१ ।

ऋ० सं० ३,४,२०,४ ।

प्रकम्पयन्ति । यजमानः इन्द्रायेदं नमम, अग्नये स्विष्टकृतेदं नममेति त्यागः वदेत् । अध्वर्युः प्रदक्षिणमावृत्त्य, मैत्रावरुणचमसेग्रहसंस्रावमवनयति । प्रातः सवनवत् मैत्रावरुणः ब्रह्मादि चमसान् तं तं चमसिनं उपहूय भक्षयति । ब्रह्मादयः मैत्रावरुणमुपहूय भक्षयन्ति । पूर्ववत् प्रक्षाल्य, ब्राह्मणाच्छंसि प्रमुखान् ग्रहान् सादयन्ति । ततोऽध्वर्युः प्रतिप्रस्थातारमाह - "ग्रहौ ते प्रचर" ।

ततः प्रतिप्रस्थाता प्राङ्गयन्नाह - ब्राह्मणाच्छंसिनश्चमसमनून्नयध्व-मुन्नेतः सोमं प्रभाव्य" । ततः उन्नेता - चमसानुन्नीय, उत्तरवेद्यां सादयन्ति । ततः प्रतिप्रस्थाता "उ० इन्द्रायत्वाजुष्टं०" इति मन्त्रेण ग्रहं गृह्णाति । "एष० रिन्द्रायत्वा" इति मन्त्रेण परिमृज्य सादयति । ततः स्तोत्रोपाकरणम् । उद्गाता - नौधसं साम्नायेत् ।

ब्राह्मणाच्छंसिशस्त्रम्[१] -

---

ब्राह्मणाच्छंसिनः - अध्वर्यो शों सावो ३ म् [क] तंवोदस्ममृतीषहं २ मीमहो ३ म् । शों सावो ३ म् [ख] तत्त्वायामिसुवीर्यं० २ - - - - कृदो ३ म् ।

---

(१) तं वो दस्ममृतीषहं तत्त्वायामि सुवीर्यमिति प्रगाथौस्तोत्रियानुरूपा-उदुत्ये मधुमत्तमाइन्द्रपूर्भिंदुद्ब्रह्माणि । आ० श्रौ० ५।१६।२ ।

(क) तं वो दस्म० ऋ० सं० ८, ८८, १-२ ।
आद्यां त्रिः शंसेत् । स्तोत्रियः प्रगाथः ।

(ख) तत्त्वायामि० ऋ० सं० ८, ३, ६-१० । अनुरूपः प्रगाथः ।

शों सावो ३ म् (ग) उदुत्त्ये मधुमत्तमा०२- - - - - - - - - अस्वरोम् ।

शों सावो ३ म् (घ) इन्द्रः पूर्भिदा० - - - - - - - - - धनानो ३ म् ।

(ङ०) उदु ब्रह्माण्यैरत श्रवस्या० ५ - - - - - - - - - मादयस्वो ३ म् ।

शों सावो ३ म् (च) एवेदिन्द्रं० - - - - - - - - - सदानो ३ म् ।

अध्वर्युः शस्त्रान्ते प्रायश्चित्तानि हुत्वा, ग्रहमादाय, आश्राव्याह - उक्थशा यजसोमानाम् ।

ब्राह्मणाच्छंसिनः शस्त्रयाज्या[१] -

---

ये ३ यजामहे वृष्णोर्णो वज्री० वौषट्, सोमस्याग्ने वीही ३ वौषट् । अध्वर्युः वषट्कृतानुवषट्कृते जुहोति । तथैव चमसांश्चमसान् जुहवति । हुतेषु चमसेषु यजमानः - इन्द्रायेदं नममेति त्यागः पठेत् । अध्वर्युः ब्राह्मणाच्छंसिन-श्चमसे संस्रावमवनयति । पात्रं निधाय, ब्राह्मणाच्छंसिनश्चमसं ब्राह्मणाच्छंस्यध्वर्यु-प्रतिप्रस्थातारो भक्षयन्ति । ततः ब्राह्मणाच्छंसिनः - ब्रह्मादिचमसान् तं तं

---

(ग) उदुत्त्ये० ऋ० सं० ८,३, १५-१६ । प्रगाथः ।

(घ) इन्द्रः पूर्भिदा० ऋ० सं० ३,३४ ।

(ङ०) उदुब्रह्माण्यैरत० ऋ० सं० ७,२३,१-५ ।

(च) एवेदिन्द्रं० ऋ० सं० ७,२३,६ । परिधानीया ।

(१) वृष्णोर्णो वज्री वृषभस्तुराषाडिति याज्या ।
आ० श्रौ० ५,१६,१, ऋ० सं० ५,४०,४ ।
अथ इन्द्रायत्वेन्द्रायत्वा इत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति ।
बौ० श्रौ० ८।८ ।

उपहूय भक्षयति । पूर्ववत् प्रक्षाल्य, अच्छावाकचमसप्रमुखान् ग्रहान् - सादयति प्रतिप्रस्थाता । ततः प्रतिप्रस्थाता प्राङ्ण्धायन्नाह[1] - "अच्छावाकस्य चमसमनून्नयध्व-मुन्नेतः सर्वंस एव राजानमुन्नयमातिरीरिचः" "ततोऽध्वर्युः प्रातः सवनवत् मन्त्रेण गत्वा प्रतिप्रस्थातारमादिशति । ततः प्रतिप्रस्थाता यथा प्रैषं प्रातः सवनवत् कृत्वा, उक्थ्यस्थाल्या औपश्ये उक्थ्यस्थालीस्थं सर्वं राजानं "उप० इन्द्रायत्वाजुष्टं" इति मन्त्रेण गृह्णाति । नोक्थ्यस्थालीमभिमृशति । ग्रहं परिमृज्य सादयति । दशापवित्रं द्रोणकलशे निधाय, स्तोत्रोपाकरणम्। अत्र कालेसामगायेदुद्गाता[2] । स्तोत्रान्ते अच्छावाकशस्त्रशंसनं भवति ।

अच्छावाकशस्त्रशंसनप्रकारः[3] -

---

अच्छावाकः - अध्वर्यो शोंसावो ३ म्[4] तरोभिर्वो विदद्वसु० -----

--------------------------------उक्थ्यो ३ म् ।

शोंसावो ३ म् तरणिरित्[5] सिषासति० २ ----- दिवो ३ म् ।

---

(१) तं तथैवोक्तेऽतिशिष्ट आह अच्छावाकस्य० पूर्वयाद्वारा हविर्धानं प्रपाद्य० अथादत्त उक्थ्यस्थाल्या औपश्यं पात्रम्० स उ वा ऐन्द्र एव भवति । बौ० श्रौ० ८।८ ।

(२) सा० कौ० सं० १,३, १,५,५ २,१,१,४ । तरोभिर्वो० ।

(३) तरोभिर्वो विदद्वसुं तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपा उदिन्वस्यरिच्यतेंश इदिमामूष्वित्युपौक्यामुदेरत्सर्वत्र । आ० श्रौ० ५।१६।१ ।

(४) तरोभिर्वो० ऋ० सं० ८।६६।१-२ । बार्हतं त्रिः शंसेत् ।

(५) तरणिरित्० ऋ० सं० ७,३२,२०-२१ । स्तोत्रियः प्रगाथः ।

शौं सावो ३ मु उदिन्न्वस्य रिच्यतें० ---------- मुवो ३ मु । [4]

शौं सावो ३ मु भूय इद्वावृधे० ------------ मुणासो ३ मु । [5]

इमामूषु०१-------------------- प्रयन्वो ३ मु । [6]

शौं सावो ३ मु शुनं हुवेम० -------------- कानो ३ मु । [7]

अध्वर्युः शस्त्रान्ते प्रायश्चित्तानि हुत्वा, ग्रहमादाय, आश्राव्याह -

उक्थशायज सोमानामुँ इति ।

[8]

अच्छावाकस्य शस्त्र याज्या - ये ३ यजामहे पिबावर्धस्व तवधा०

------- वौंषट्, सोमस्याग्ने वीहो ३ वौंषट् । अध्वर्युः वषट्-कृतानुवषट्कृतेजुहोति । चमसाध्वर्यवः तथैव सर्वांश्चमसान् पूर्ववत् जुह्वति । यजमानः - इन्द्रायेदं नमम, अग्नये स्विष्ट कृत इदं नममेति त्यागःपठेत् । अध्वर्युः अच्छावाकचमसंग्रहसंप्रावमवनयति । पात्रं निधाय, अच्छावाकचमसं - अच्छावाकाध्वर्युप्रतिप्रस्थातारः परस्परमुपहूय भक्षयन्ति । ततः पुनः अच्छा-वाकः ब्रह्मादि चमसान् तं तं उपहूय भक्षयन्ति । सर्वे आत्मानमभिमृशंति । अत्र नाप्यायनम् । चमसाध्वर्यवः चमसान् प्रक्षाल्य, पूतभृत् आधवनीयावन्तरेण परिस्तुना सह निदधति । अध्वर्युः - १- भुवोयज्ञस्य० । २- यन्मआत्मनः० ।

---

(४) उदिन्न्वस्य० ऋ० सं० ७,३२,१२-१३ । अनुरूप: प्रगाथः ।

(५) भूय इद्वावृधे० ऋ० सं० ६,३० ।

(६) इमामूषु० ऋ० सं० ३,३६,१-९ ।

(७) शुनं हुवेम० ऋ० सं० ३,३६,११, परिधानीया ।

(८) पिबावर्धस्व० ऋ० सं० ३,३६,३ । आ० श्रौ० ५,१६,१ ।

पुनरग्निः० । ४- व्याहृतयश्च प्रायश्चित्ताहुतीर्जुहोति । अध्वर्युः मैत्रावरुण-मुद्दिश्य प्रेष्यति[1] - "प्रशास्तः प्रसुहि" ति । मैत्रावरुणः - "सर्पत" इति कथयति । सर्वे यथाक्लृप्तं निः सर्पन्ति । इति माध्यन्दिनसवनम् ।

तृतीय सवनम् -

तृत्याहे माध्यं दिन सवनावसाने कानिचित् क्षणानि व्यतीत्य, सर्वे ऋत्विजः स यजमानः यथासन्वरं स्वं स्वं स्थानं विधियुक्तं तृणनिरसनादि कृत्वा उपविशन्ति । ततोऽध्वर्युः छन्दोभिः सह उत्तरवेदेः पश्चात् उदङ्मुखोपविश्य, लोकद्वारगानं गायति[2] । लोकद्वार गानान्ते "देविद्वारौ" विति उत्तरार्द्धस्य ईक्षणां करोति ।

ऋजीषाभिषवः[3] -

अध्वर्युः प्राङ्मायन्नाह - "अग्नीत् परिश्रयणमाहरप्रतिप्रस्थात-

---

(१) प्रशास्तः प्रसुहि इति । सर्पत इत्याह प्रशास्ता संतिष्ठते माध्यं दिनं सवनम्, बौ० श्रौ० ८।८ ।

(२) पुरातृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यं स वैश्वदेवं सामानि गायति । छां०उ० २,२४,११-१५ ।

(३) प्रसर्पन्ति तृतीय सवनाय - - - नीडउत्सादयति । बौ० श्रौ० ८।६ उपांशुं हुत्वोपांशु पात्रे अंशुमवास्य तं तृतीयसवनेऽपि सृज्याभि षुणुयात्० तै० सं० ३,२,२,१ । तृतीयसवनऋजीषमभिषुण्वन्ति०, तै० सं० ६,१,६,४; मन्त्रभागः । तै० सं० १,४,१ ।

राशिरपानय, कृतातंक्ममादित्यग्रहाय दध्याहरें ति यजमाना यथासम्प्रैषं ते कुर्वन्ति । ततः अध्वर्युः यजमानेन सह हविर्धानं प्रविश्य, उपांशुपात्रस्थमंशुं माध्यंदिनीय कृजीषे प्रदिाप्य, होतृचमसे आधवनीयापः अवनीय, उपांशुग्रहं चर्मणिनिधाय, "निग्राभ्यास्थे" ति मन्त्रेण यजमानाय सम्प्रदाय, "देवस्यत्वे" ति मन्त्रेण ग्रावाणमादाय, "श्वात्रास्थे" ति मन्त्रेण कृजीषं होतृचमसायाभिरुपसृज्य, "येषामि" ति मन्त्रेण सम्प्रयौति । "अभिषवणीवोड०" इति मन्त्रेण चर्मान्तरिते फलके अभिमृश्य, वृद्धोर्वाचयित्वा, "ग्रावभ्योऽनुब्रूहि" इति प्रैषं दत्वा, कृजीषं चर्मणि निधाय, आप्याय्य, अध्वर्युरेव यावत् रसनिस्रावं अभिषुणोति । उन्नेत्रादयः प्रातः सवनवत् यथासम्प्रैषं कर्मकुर्वन्ति ।

आदित्यग्रहप्रचारः[१] -

---

अध्वर्युः परिश्रयणासाभ्यां हविर्धानद्वारोपरिश्रित्य, आदित्यस्थाल्याः औपशयमादाय, तस्मिन् आदित्यस्थाल्याः तृतीयं "कदाचन०" "उप०" "आदित्येभ्यस्त्वा जुष्टं" इति मन्त्राभ्यां गृह्णाति । बर्हिषिरन्तर्धाय "कदाचन-

---

(१) परिश्रयन्ति पूर्वां द्वारमपरां चाधादय आदित्यस्थाल्या औपशयं पात्रं तस्मिन्नेतस्य० - - - - - - - - - - - - - - - - - -
उरोरन्तरिक्षास्याध्यक्षोम्य: प्रैषेति । बौ० श्रौ० ८।६-१० ।
द्विदेवत्येभ्य आदित्योनिर्गृह्यते० तै० सं० ६,५,६ ।
आदित्यग्रहोभूयिष्ठाभिर्ऋग्भिर्गृह्यते, तै० सं० ६,५,१०,
मन्त्रविभागः । तै० सं० १,४,२२,

प्रयुच्छसि उप० आदित्येभ्यस्त्वाजुष्टं० इति मन्त्राभ्यां पूतभृतमानयति ।
अपोद्धृत्य, बर्हिर्षि आदित्यस्थाल्या: "यज्ञो देवानां०" इति मन्त्रेण दधि
गृह्णाति । उपांशु सवनस्य स्थूलप्रदेशेन "विवस्वा आदित्यैषते०" इति मन्त्रेण
ग्रहमालोडयति । उपांशुसवनमुद्गृह्णाति । उपांशुसवनं दशापवित्रेण परिवेष्ट्य,
यथा सोमस्य ऊर्मिर्भवति तथा पात्रस्य अवस्तात् द्विरचतुर्वा सोममपातयन् -
"आसमुद्रा[1] दिति मन्त्रेण उद्धन्ति । तत: उपांशुसवनं, दशापवित्रेण परिमृज्य,
ग्रावसु प्रक्षिप्य, द्वारौ विवृत्त्य बर्हिर्मुष्टीना ग्रहमपिधाय, उपोत्तिष्ठन्नाह -
"आदित्येभ्य: प्रियेभ्य: प्रियधामभ्य: प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्त-
रिक्षस्याध्यक्षेभ्योनुब्रूहि । मैत्रावरुण: - प्रैषमन्त्रपाठं[2] करोति । अध्वर्यु:
अत्याक्रम्य, आश्राव्याह, होता - ये ३ यजामह आदित्यासो[3] अदितिमादयन्तां०
वा ३ वौषट्[4] । वषट्कृते जुहोत्यध्वर्यु: । अत्र नानुवषट्करोति[5] । नेनं आदित्य-

---

(१) आसमुद्रा० तै० सं० ३,५,५ ।

(२) होतायक्षदादित्यान्० - - - - होतर्यज । खिल ५,७,४ (ग) ।

(३) आदित्यासो अदितिमादयन्तां० आ० श्रौ० ५,१७,३, ऋ० सं० ७,५१,२ ।
यदाशिरमवनयन्ति० तै० ब्रा० ३,२७, आदित्यारम्भणं तृतीयसवनम्०
यजति आदित्यासो अदितिमादयन्तामिति मद्वत्यारूपसमृद्धया० ।
ऐ० ब्रा० ३,२९ ।

(४) वषट्कृत औषधो: प्रास्याग्नावादित्यं जुहोति सकृदेव न हुत्वान्वीक्षेत ।
बौ० श्रौ० ८।१० । औषधो: प्रास्याग्नावादित्यं जुहोति० तै० सं०
३, ५,५ ।

(५) नानुवषट्करोति । न भक्षयति । ऐ० ब्रा० ३,२९ ।
नेतं ग्रहमीक्षेत हूयमानम् । आ० श्रौ० ५,१७,३ ।

प्रसमीक्षेत । हूयमानं न भक्षयति । अध्वर्युः वषट्कृते बर्हिर्मुष्टिः अग्नौ प्रहित्य, आदित्यग्रहग्रावमवशेषयन् सकृत् जुहोति । नान्वीक्षते पर्यावृत्त्याध्वर्युः । प्रतिप्रस्थाताऽतं आदित्यग्रहमादत्ते । शालामेधार्णं चानुप्रहृत्य, प्रतिहर्ता उन्नेताच आधवनीयात् पूतभृतिः अवनयति ।[1]

अध्वर्युः - आग्रयणस्थं सोमं पात्रान्तरे अवनीय तदादत्ते ।[2]

प्रतिप्रस्थाता - आदित्यस्थालीं सोपश्यां आदत्ते ।[3]

उन्नेता - आधवनीयादुदञ्चनमिति[4] चतुष्टयं उपर्यवनीयं चतुर्णां धाराणामधस्तात् आग्रयणं प्रातःसवनवत् गृहीत्वा अभिहिंकृत्य, अधिवदनं कृत्वा, परिमृज्य सादयति ।

ततः दशापवित्रमपनीय, बर्हिषि अन्तर्धाय सक्षिपमाशिरं अन्वारब्धायां पत्न्यां "अस्मेदेवासोवपुष०" इति प्रत्यृचं पूतभृतिः अवनयति । अपोद्धृत्य, बर्हिषि पूतभृति परिप्लुपात्रं प्रास्य, "द्रप्सश्चस्कन्दे"ति मन्त्रेण द्रप्सान् अनुमन्त्रयते ।[5]

---

(१) पर्यावृत्तस्यैव प्रतिप्रस्थाता पात्रमादत्ते० - - - बौ० श्रौ० ८।१० ।

(२) एतस्मिन् काले० - - - - - - - - - - उदचनानयत्याग्रयणमेवाध्वर्यु-रादत्त, बौ० श्रौ० ८।१० ।

(३) आदित्यस्थालीं - - - - - - - - - - - - - प्रतिप्रस्थाता सोपश्यां संप्रगृह्णाति, बौ० श्रौ० ८।१० ।

(४) तिसृणां चतसृणांवा० - - - - - - - - - - अन्वारब्धायां पत्न्यामस्मेदेवासो० बौ० श्रौ० ८।१० । अस्मेदेवासो० तै० सं० ३,२,८ । आशिरमवनयति, तै० सं० ६,१,६ ।

(५) अपोद्धृत्य० द्रप्साननुमन्त्रयते । बौ० श्रौ० ८।१० ।

'उप० इन्द्रायत्वे' ति मन्त्रेण आधवनीयमभिमृशति । 'विश्वेभ्यस्त्वा देवेभ्य०' इति मन्त्रेण पूतभृतमभिमृशति[1] । उन्नेता[2] - प्रान्चं राजानं पूतभृतमभिसंपवयतात् - दशाभिराधवनीयंमृष्ट्वा न्युब्जतात् ।

आर्भवपवमान नि:सर्पणम्[3] -

---

उद्गाता अपउपस्पृश्य, बर्हिषि आदाय, उपनि: सर्पति । तेणु तथैव समन्वारब्धेषु आहवनीये 'इदं तृतीयसवनमिति मन्त्रेण स्रुवाहुतिं जुहोति, यथावेदमितरे जुह्वति । तथा प्रदक्षिणं आवृत्य, सतोभिपवमान सर्पन्ति । सदसि यथायतनं उपविशन्ति ।

तत: अध्वर्यु: 'ऋक्सामयोरुपस्तरणमसि' इति मन्त्रेण उद्गात्रे प्रस्तोत्रेवा[4] बर्हिषि प्रयच्छति । तत: स्तोत्रोपाकरणजप: 'वायुर्हिंकर्ता'[5] इति ।[6]

---

(१) इंपवमानस्य ग्रहं गृह्णाति ।
(२) तथोन्नेतरित्याहप्रान्चं०, बौ० श्रौ० ८।१० ।
(३) तथापउपस्पृश्य बर्हिषो० - - - इदं तृतीयं अभिपवमानं सर्पन्ति तथा सदसि यथायतनमुपविशन्ति, बौ० श्रौ० ८।१०-११,तै०सं० ३,१,६ ।
(४) तथोद्गात्रे वा प्रस्तोत्रेवा० - - - तूष्णीं वा । बौ० ८।११ ।
(५) गायत्रम् - साकौसं० १,५,२,४,२, २,१,१,१५ (१-३ स्तोम) संहितम् - तथैव (४-६) ।
सफम् - साकौसं० १,६,२,४,१, २,१,१,१६ (७ स्तोम) ।
पौष्कलम् - साकौसं० १ -६, २।३।१, २।१।१।१७ (८ स्तोम) ।
श्यावाश्वम् - साकौसं० १,६,२,१,१, २,१,१,१८ (९-११ स्तोम) ।
आन्धीगवम् - उपरोक्ता एव (१२-१४)
काव्म् - साकौसं० १, ६,२,२,१, २,१,१,१६ (१५-१७ स्तोम) ।
(६) तथोपाकरणं जपतिवायुर्हिं कर्तेति, बौ० श्रौ० ८।११ ।

आर्भवपवमान स्तोत्रम्[1] - स एष सप्तदश आर्भवः पवमानो भवति ।

तृतीयसवने सवनीयपशुयागः[2] -

ततोऽध्वर्युः मनोतासंज्ञक सूक्तपठनार्थं मैत्रावरुणाय प्रैषं ददाति ।
मैत्रावरुणः - 'त्वं ह्यग्ने प्रथमो मनोता०' इति सूक्तं[3] पठति ।
अध्वर्युराशाव्याह - 'अग्नयेछागस्य हविषोऽनुब्रूहि ।
मैत्रावरुणः - 'पाहिनो अग्ने०'[4] इति पुरोनुवाक्यां पठति । अध्वर्युः प्रेष्यति ।
मैत्रावरुणः - 'होतायक्षदग्निं छागस्य० हविर्होतर्यज' इति प्रैषमन्त्रं पठति ।
होता[5] - ये ३ यजामहे 'प्रकारवो मननावच्यमाने०' इति याज्या मन्त्रं पठति ।
अत्र याज्यामन्त्रस्य अर्धर्चान्ते अध्वर्युकर्तृकवसाहोमः । वसाहोमान्ते याज्यायाः उत्तरार्धमुक्त्वा वषट्कारः ।

वनस्पतियागः -

अध्वर्युः पुरोनुवाक्यापठनार्थं मैत्रावरुणाय 'देवेभ्यो हवींषि०' इति

---

(१) बौ० श्रौ० ८।११ ।
(२) अथ पशुना चरति मनोताप्रभृतिनेडान्तेन, बौ० श्रौ० ८।१२ ।
(३) मनोतायै संप्रेषितस्त्वं ह्यग्ने प्रथम इत्यन्वाह ।
आ० श्रौ० ३,६,१ ।
(४) पाहिनो अग्ने० ऋ० सं० १,१८९,४ ।
(५) प्रकारवो मनना०, ऋ० सं० ३,६,१ ।

प्रेष्यति । अध्वर्युः - वनस्पतियागार्थं प्रेष्यति । मैत्रावरुणः - "होतायक्षद् वनस्पतिं०" इति प्रैषमन्त्रं पठति । अध्वर्युः आश्राव्याह - होता - ये ३ यजामहे वनस्पतेरशनया निबूय०" इति याज्यां पठति ।

सवनीयपशोः स्विष्टकृद्यागः -

---

"पिप्रीहि देवान्०" इति स्विष्टकृतस्य पुरोनुवाक्या । "होतायक्षदग्निं स्विष्टकृतं०" स इति प्रैषः । अग्नेयदद्यविषो अध्वरस्य इति याज्या । पशुइडाः - प्राशनं मार्जनं च, इडानिगदे "उपहूतोयं सुन्वन् यजमानोऽस्य[1] यज्ञस्ये"ति विशेषः । इडा भक्षणान्ते सवनीययागः । सवनीयप्रचारः - अध्वर्युः - "पुरोडाशानामनुब्रूहि" इति प्रेषयति । अत्र उन्नेता इदानीमेव पूतभृति पवित्रं वितत्य, आधवनीयचमसं आदाय, तिष्ठति । मैत्रावरुणः[2] - "तृतीयेधाना०" इति पुरोनुवाक्यां पठति । पुरोनुवाक्यान्ते अध्वर्युः प्रेष्यति[3] । मैत्रावरुणः[4] - होतायक्षदिन्द्रं० तृतीयस्य सवनस्य पुरोडाशां इन्द्रः प्रस्थितान्० होतर्यज । होता - ये ३ यजामहे "हरिवां इन्द्रोधाना०" इति याज्यां पठति । अग्ने ये ३ यजामहे हविरग्नेवीहो ३ वौषट् इत्यनुवषट्कारः । होतुर्वषट्कृते "श्येनायत्येनस्वाहा,

---

(१) तेषां समवयन्नाह तृतीयस्य० अनुब्रूहि०, बौ० श्रौ० ८।१२ ।

(२) तृतीयेधाना० ऋ० सं० ३,५२,६ ।

(३) अत्याक्रम्याश्राव्याह तृतीयस्य सवनस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य, बौ० श्रौ० ८।१२ ।

(४) होतायक्षदिन्द्रं० खिलानि ५,७,४ ।

इति जुहोति । यजमानः - इन्द्रायेदं नममेति त्यागं वदेत्[1]। अनुवषट्कृते "तृम्पन्तां होत्रा मधोर्घृतस्य" इति मन्त्रेण अध्वर्युर्जुहोति ।

सवनीयस्विष्टकृद्यागः -

---

अध्वर्युः - प्रेष्यति[2]।

मैत्रावरुणः - "अग्निं तृतीये०"[3] इति पुरोनुवाक्यां पठति ।

पश्चात् अध्वर्युणा प्रेषिते[4] "होतायक्षदग्निं स्विष्टकृतं पुरोडाशानां जु० हविर्होतर्यज[5]।

होता - ये ३ यजामहे हविरग्नेवोहो ३ वौषट् । इति स्विष्टकृद्याज्यां पठति ।

उन्नीयमानसूक्तपाठस्वरूपम्[6] -

---

अध्वर्युः - "उन्नीयमानेभ्योनुब्रूहि"[7] इति प्रेषमन्त्रं पठति ।

---

(१) आ० श्रौ० ८।१२ । श्येनायत्वेन०, तृम्पन्तां होत्रा०, तै० सं० ३।२।८ ।

(२) आ० श्रौ० ८।१२ ।

(३) अग्नेतृतीये०, ऋ० सं० ३,२८,५ ।

(४) अग्नये प्रेष्य, आ० श्रौ० ८।१२ ।

(५) होतायक्षदग्निं स्विष्टकृतं० खिलसू ५,७,४ (उ०) ।

(६) इहोपयातशवसो नपात इति तृतीयसवनउन्नीमानेभ्योऽन्वाह० ।
ऐ० ब्रा० ६,१२ ।

(७) आ० श्रौ० ८।१२ ।

मैत्रावरुणः - "इहोपयातशवसोनपात॰" इति उन्नीयमानसूक्तपाठं करोति ।[1]

प्रस्थितयाज्याः -[2]

---

अध्वर्युः होतृचमसमादाय, आश्राव्याह - प्रस्थितान् प्रेष्य ।[3] मैत्रावरुणः - होतायक्षदिन्द्रं तृतीयस्य सवनस्य ऋभुमतो - विभुमतो॰" इति[4] प्रैषमन्त्रं पठति । होता - ये ३ यजामहे "इन्द्रऋभुभिर्वाजवद्भि" रिति सानुवषट्कार पूर्वकं याज्यां पठति ।[5] अध्वर्युर्जुहोति ।

मैत्रावरुणयाज्या -[6]

---

होता - "प्रशास्तर्यज" इत्युक्ते मैत्रावरुणः उपविश्य, ये ३ यजामहेन्द्रा वरुणा सुतपा॰" इति सानुवषट्कारपूर्वकं याज्यां पठति । अध्वर्युर्जुहोतीतिद्विवारम् । ब्राह्मणाच्छंसियाज्या - ये ३ यजामहेन्द्रश्च सोमं[7]

---

(१) इहोपयात॰ ऋ॰ सं॰ ४।३५ ।

(२) ऐन्द्राभैव्या यजति इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमितिहोतृका॰ ऐ॰ ब्रा॰ ६,१२ ।

(३) अथ प्राडे॰त्य होतृचमसमादाय आश्राव्याह तृतीयस्य॰ तथा सम्प्रैषमाह प्रैतुहोतुश्चमसः प्रब्रह्मणः, बौ॰ श्रौ॰ ८।१२ ।

(४) होतायक्षदिन्द्रं तृतीयस्य॰ खिलम् ५,७, ४ (क) ।

(५) इन्द्रऋभुभिः॰ ऋ॰ सं॰ ३,६०५ ।

(६) इन्द्रावरुणासुतपा॰ ऋ॰ सं॰ ६,६८,१०, ऐ॰ ब्रा॰ ६,१२ ।

(७) इन्द्रश्चसोमं॰ ऋ॰ सं॰ ४,५०,१० । ऐ॰ ब्रा॰ ६,१२ ।

पिबत० इति सानुवषट्कारपूर्वकं याज्यां पठति । अध्वर्युर्जुहोतिपूर्ववत् ।

पोतृयाज्या[1] -

पोता - ये ३ यजामहे आवोवहन्तु सप्तयोरघुष्यदो० इति सानुवषट्कारपूर्वकयाज्यां पठति । पूर्ववत् जुहोति ।

नेष्टृयाज्या[2] -

नेष्टा - ये ३ यजामहे अमेषनः सुहवा आहि गन्तन० इति सानुवषट्कारपूर्वकं याज्यां पठति । पूर्ववत् जुहोति ।

अच्छावाकयाज्या[3] -

अच्छावाकः ये ३ यजामहेन्द्राविष्णूपिबतं० इति अनुवषट्कारपूर्वकं याज्यां पठति । अध्वर्युर्जुहोति पूर्ववत् ।

आग्नीध्रयाज्या[4] -

आग्नीध्रः - ये ३ यजामहेमं स्तोममर्हते० इति सानुवषट्कारपूर्वकयाज्यां

---

(१) आवोवहन्तु०, ऋ० सं० १,८५,६ । ऐ० ब्रा० ६,१२ ।

(२) अमेवनः सुहवा० ऋ० सं० २,३६,३ । ऐ० ब्रा० ६,१२ ।

(३) इन्द्राविष्णू० ऋ० सं० ६,६९,७ । ऐ० ब्रा० ६,१२ ।

(४) इमं स्तोममर्हते० ऋ० सं० १,९४,१ । ऐ० ब्रा० ६,१२ ।

पठति । अध्वर्युर्द्विवारं जुहोति । प्रति अनुवषट्कारसमये समन्त्रकमध्वर्युर्जुहोति ।[1]

मन्त्राः[2] -

(१) विष्टं भायधर्मणे स्वाहा ।
(२) परिध्येजनप्रथनाय० ।
(३) ऊर्जे होत्राणां स्वाहा ।
(४) पयसे होत्राणां स्वाहा ।
(५) प्रजापतयेमनवेस्वाहा ।
(६) ऋतमृतपाः सुववाट् स्वाहा ।
(७) तृप्यन्तां होत्रामधोर्घृतस्य स्वाहेति ।

प्रस्थितयाज्यान्ते होतान्वारंभः चमसोपमनन्च । प्रथमं चमाख्यामचाः प्रातः सवनम् । अध्वर्युर्मैत्रावरुणं प्रस्थितयाज्यानिमित्तेभक्षाः । ततश्चमस आप्यायनम् । आप्यायितान् नाराशंसान् यथास्थानं सादयन्ति ।[3]

सवनीयपुरोडाशशेषेण पिण्डदानम्[4] -

अत्र सर्वे स्वेषु चमसेषु समीपमागत्य, ब्रह्मादयः सर्वे चमसिनः प्राचो-

(१) वषट्कृते जुहोति विष्टम्भाय धर्मणे स्वाहेति० बौ० श्रौ० ८।१२ ।
(२) विष्टम्भायधर्मणेस्वाहा० तै० सं० ३,२,८ ।
(३) सप्तहोत्राः यथाज्यप्रदक्षिणमावृत्त्य० सीदन्तिनाराशंसा, बौ०श्रौ० ८।१२ ।
(४) चमसाय चमसायैव त्रींस्त्रीन् पुरोडाशशकलानुपास्यति । नवहोतृचमसे । बौ० श्रौ० ८।१२ ।

नावीति कृत्वा, सवनीयपुरोडाशशेषणात् त्रीन् शकलान् गृहीत्वा, स्व स्व चमससमीपे पिंडाकारं दत्वा प्रक्षिपन्ति । अध्वर्युप्रतिप्रस्थातारौ होतृचमसनिकटे पिंडान् प्रक्षिपन्तीतिविशेषः । पश्चादनुमन्त्रणम् ।

अनुमंत्रणमन्त्रः[1] -

अत्र पितरोमादयध्वं यथाभागमावृषायध्वमित्याश्वलायनः अत्र पितरो यथाभागं मन्दध्वमिति बोधायनः ।

सावित्रग्रहप्रचारः[2] -

अध्वर्युः हविर्धानात् प्राङ्ङायन्नाह - देवाय सवित्रेऽनुब्रूहि इति प्रेषं ददाति[3]। प्रतिप्रस्थाता - 'वाममद्यसवितः' 'उप० सवित्रेजुष्टं०' इति मन्त्राभ्यां अन्तर्यामपात्रेण सावित्रमाग्रयणात् गृह्णाति । परिमृज्य, अनासादितमध्वर्यु-[4][5]

---

(१) बौ० श्रौ० ८।१२, आ० श्रौ० २,७,१ ।

(२) सावित्रेण ग्रहेण चरन्ति । आ० श्रौ० ५,१८,१ ।

(३) आ प्राङ्ङायन्नाह देवाय सवित्रेऽनुब्रूहि, बौ० श्रौ० ८।१३ ।

(४) प्रतिप्रस्थाता अन्तर्यामपात्रेण० ग्रहं गृह्णाति वाममद्य०, बौ० श्रौ० ८।१३ ।
अन्तर्यामपात्रेण सावित्रमाग्रयणात् गृह्णाति० तै० सं० ६,५,७, वाममद्य० उप० सवित्रे० तै० सं० १,४,२३ ।

(५) न सादयति० तै० सं० ६,५,७ ।

रादाय, आश्राव्याह - मैत्रावरुण: - "अभूद्देव: सविता०" इति पुरोनुवाक्यां [1]

पठति । अध्वर्यु: - "देवाय सवित्रे प्रेष्य" इति प्रैषं ददाति [2] ।

मैत्रावरुण: [3] - "होतायक्षद्देवं सवितारं० - - - - - - - - सोमं होतर्यज"

इति प्रैषमन्त्रपाठं करोति ।

होता - ये ३ यजामहे "दमूनादेव: सवितावरेण्यो०" इति याज्यां पठति । [4]

अत्र नानुवषट्कार:, भक्षणमपि न भवति । इति सावित्रग्रहप्रचार: ।

वैश्वदेवग्रहप्रचार: [5] -

---

अध्वर्यु: परिप्लुपात्रेण "उप० विश्वेभ्यस्त्वा देवेभ्योजुष्टं०" इति

---

(१) अभूद्देव: सवितावन्द्यो होतायक्षद्देवं सवितारं, आ० श्रौ० ५,१८,२, ऋ० सं० ४,५४,१ ।

(२) आश्राव्याह देवायसवित्रे प्रेष्येति, बौ० श्रौ० ८।१३ ।

(३) होतायक्षद्देवं खिलम् ५,७,४ (घ) ।

(४) दमूनादेव: सवितावरेण्यो दधद्रत्ना दक्षंपितृभ्य आयुनि, आ० श्रौ० ५,१८,२ । सावित्रोप्रतिपद्भवति वैश्वदेवस्य सावित्रग्रह: पुरस्तात् तस्य यजति दमूनादेव: सवितावरेण्यो इति नानुवषट् करोति न भक्षयति, ऐ० ब्रा० ३,२९ । नानुवषट् करोति० यत् तृतीयसवने-सावित्रो गृह्यते०, तै० सं० ६,५,७ ।

(५) अथ वै भवति सवितृ पात्रेण वैश्वदेवं कलशात् गृह्णाति सोमि० परिमृज्य सादयति एष ते योनिर्विश्वेभ्यस्त्वादेवेभ्य: इति, बौ० श्रौ० ८।१३ । सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति० सोमिसोममभि गृह्णाति तै० सं० ६,५,७ । सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नम:, तै० सं० १,४,२६ ।

मन्त्रेण वैश्वदेवं पूतभृतः गृह्णाति । तं परिमृज्य "एष० योनि० सादयति ।
वैश्वदेवस्तोत्रोपाकरणम् । स्तोत्रान्ते सदो गत्वा, होतारं समीक्ष्य, आवृत्त्य,
"इडादेवहू" रिति जपति । शस्त्रं प्रतिगृणाति च[1] । शस्त्रशंसने प्रतिप्रस्थाता "एकया
च दशभिश्च" इति श्रुत्वा, द्विदेवं पात्राणि मार्जालीये प्रक्षाल्य पात्रेषु यथा-
स्थानं निदधाति[2] ।

तृतीय सवने होतुर्वैश्वदेवशस्त्रविशेषः -

---

विधानानुपलंभात् । अत्र तृतीय सवने होतृकाणां शस्त्राणि न भवन्ति ।
अत्र "तत्सवितुर्वृणीमहे" इति प्रतिपदः पच्छः शंसनम्, प्रतिपत् - तृचस्य आद्यां
ऋचां त्रिर्विगृह्य शंसेत् । वैश्वदेवशस्त्रे अध्वर्युः "प्रधाना यज्ञः पृथिवी०" इत्यादि
यावत् आहावं अन्यतोमदं प्रतिगृणाति । "तत्राद्यो अर०" इत्यादि यावदाहा-
वमुभयतोमदं प्रतिगृणाति । तथा च अवसाने प्रणवे च अध्वर्युः "मदामो दैवेति"
प्रतिगृणाति इति विशेषः[3] ।

---

(१) अध्वर्युः प्रदक्षिणमावृत्त्य प्रत्यङ्०ावृत्य० - - - - - - प्रतिगृणाति ।
शंसामो दैवो ३ म् इत्यध्वर्युः प्रतिगृणाति पंचाक्षरेण,
ऐ० ब्रा० ३,१२, बौ० श्रौ० ८।१३ ।

(२) अथ यत्र होतुरभि जानाति एकया च दशभिश्च - - - - - -
पात्रे तत् प्रतिप्रस्थाता द्विदेवत्य पात्राणि मार्जालीये मार्जयित्वा पात्रे-
ष्वपि सृजति । बौ० श्रौ० ८।१३ ।

(३) अथ यत्र होतुरभि जानाति प्रधावायज्ञः - - - - - - - मदामोद इव
मदा मोद इवेत्याव्याहावात् । बौ० श्रौ० ८।१३ ।

वैश्वदेवशस्त्रशंसनविधिः[1] -

---

होता: - हिम् भूर्भुवस्वरो ३ म् अध्वर्यों[2]शोशों सावो ३ म् तत् सवितुर्वृणीमहे । वयं देवस्य भोजनं । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहो[3] ३ म् इति त्रिर्वारम् अस्य हि स्वयशस्तरं० २ चित्रमीमहो ३ म् -

शौं सावो ३ म् अपानो[4] देवसवित:० ३ - - - - - - - धी महो ३ म्

शौं सावो[5] ३ म् अभूद्देव: सविता० ५ - - - - - - सवायतो ३ म्

शौं सावो[6] ३ म् सवितादेव: सोमस्य पिबतु० - - - - भवद्ब्रह्मण्याव-

---

(१) तत्सवितुर्वृणीमहेऽपानो देवसवितरिति वैश्वदेवस्य प्रतिपदनुचरावभूत० - - - - - - - - - - - नव वैश्वदेवम् । आ० श्रौ० ५,१८,५, बह्वृच: प्रातर्वायव्या शस्यन्त एकातृतोयसवने० द्यावापृथिवीयं शंसति० आर्भवं शंसति० वैश्वदेवं शंसति० द्वि: पच्छ: परिदधाति सकृदर्धर्चश:० सदेव पन्वजनीयया परिदध्यात् । ऐ० ब्रा० ३२६-३१ ।

(२) अध्वर्योशोशों सावो ३ म् इत्याह्वयते तृतीयसवनेऽभ्यासकारेण, ऐ०ब्रा० ३।१२, बलिष्ठतमया वाचा तृतीयसवने शंसेत्०, ऐ० ब्रा० ३।४४ । अध्वर्योशो शोंसावोमिति तृतीयसवने शस्त्रादिष्वाहाव:,

- आ० श्रौ० ५,१५,४ ।

(३) तत्सवितुर्वृणीमहे० ऋ० सं० ५,८२,१-३ । आद्यां त्रिर्विग्राहं शंसेत् । प्रतिपत्तृच: ।

(४) अपानो० ऋ० सं० ५,८२,४-६ । अनुरूपस्तृच: ।

(५) अभूद्देव: सविता० ऋ० सं० ४,५४,१-५ । निविद्धानोयं सूक्तम् ।

(६) सवितादेव: सोमस्य पिबतु० । खिलम् ५,५,४ । निविद् ।

सागमो ३ मु -
शों सावो ३ मु येते[1] त्रिरहन्त्सवित: - - - - - - - - शर्म यंसो ३ मु
शों सावो ३ मु स्कथाव[2] दशभिश्चस्वभूते० - - - - - - - विभुन्नो ३ मु
शों सावो ३ मु प्रवावायज्ञ:[3] पृथिवी० - - - - - - - - - सुदोतयो ३ मु ।
शों सावो ३ मु धावा[4] पृथिवीसोमस्यमत्सताम् । - - - - ऋतां ब्रह्माण्या-
वसो ३ मु -
शों सावो ३ मु तद्रारायो०[5] - - - - - - - - शतग्विनो ३ मु
शों सावो ३ मु सुरूपकृत्नुमूतेय[6] - - - - - - - - धविषवो ३ मु
शों सावो ३ मु तक्षानूरथं[7] सुवृतं० - - - - - - - - धियेजिषो ३ मु
शों सावो ३ मु ऋभवोदेवा:[8] सोमस्य मत्सन्० - - - - - ब्रह्माण्यावसो ३ मु
ऋभुर्मराय० - - - - - - - - - - - -[9] - - - - उत्तथोम्

---

(१) ये ते त्रिरहन्० ऋ० सं० ४,५४,६ ।
(२) स्कथवा च दशभिश्च स्वभूते० आ० श्रौ० ५,१८,५ । धाय्या ।
धाय्याश्चाग्निपातिनी: । आ० श्रौ० ५,१८,११ ।
(३) प्रवावा यज्ञ:० ऋ० सं० १,१५६,१-४ । निविद्धानीयं सूक्तम् ।
(४) धावापृथिवी० खिलम् ५,५,५ । निविद् ।
(५) तद्रायो० ऋ० सं० १,१५६,५ ।
(६) सुरूप० ऋ० सं० १,४,१ । धाय्या ।
(७) तक्षानूरथं० ऋ० सं०१,१११,१-४ । निविद्धानीयं सूक्तम् ।
(८) ऋभवोदेवा:० खिलम् ५,५,६ । निविद् ।
(९) ऋभुर्मराय० ऋ० सं० १,१११,५ ।

शौं सावो ३ मु अयं वेनश्चोदयत्० - - - - - - - - - - - - रिहन्तीमु[1]

शौं सावो ३ मु येभ्योमाता० - - - - - - - - - - स्वस्तयो ३ मु[2]

शौं सावो ३ मु स्वा पित्रे० - - - - - - - - - - स्योनाम् ।[3]

शौं सावो ३ मु आनोभद्रा: क्रतवो० - - - - - - - - - - - यदायो ३ मु[4]

शौं सावो ३ मु विश्वेदेवा: सोमस्यमत्सन् । ० - - व्रताण्यावसागमो ३ मु ।[5]

शतमिन्नुशरदो० - - - - - - - - - - रोरिषतायुर्गन्तो ३ मु ।[6]

शौं सावो ३ मु अदितिर्द्यौ० - - - - - - - - बनित्वो ३ मु त्रि: ।[7]

"उक्थं वाचोंद्राय देवेभ्य आमुत्थंत्वा" शस्त्वा जपेत् ।[8]

अध्वर्यु: शस्त्रायश्चित्तं हुत्वा, वैश्वदेव ग्रहमादाय, आशाव्याह - "उक्थशायज-

---

(१) अयं वे नश्चो० ऋ० सं० १०।१२३।१ । धाय्या ।

(२) येभ्योमाता० ऋ० सं० १०,६३,३, । धाय्या ।

(३) स्वा पित्रे० ऋ० सं० ४,५०,६ । धाय्या ।

(४) आनोभद्रा:० ऋ० सं० १,८९,१-८ । निविद्धानीयं सूक्तम् ।

(५) विश्वेदेवा: सोमस्य मत्सन्० खिल० ५,५,७ । निविद् ।

(६) शतमिन्नु० ऋ० सं० १,८९,९ ।

(७) अदितिर्द्यौ:० ऋ० सं० १,८९,१० । परिधानीया । त्रि: पच्छ:, सकृत् अर्धर्चश: । तदुपस्पृशन् भूमिं परिदध्यात्० ऐ० ब्रा० ३,३१, अदितिर्द्यौ-रदिति० - - - - - - - - - - - - त्रि: पच्छोऽर्धर्चश: सकृद्भूमिमुप-स्पृशन् । आ० श्रौ० ५,१८,१२ ।

(८) उक्थं वाचोन्द्राय० - - - - - - शस्त्वा जपेत्० । आ० श्रौ० ५,१८,१३, उक्थं वाचोन्द्राय देवेभ्य: इत्याह शस्त्वैका दशाक्षरम् । ओम् इत्यध्वर्युरेकाक्षरम्० । ऐ० ब्रा० ३,१२ ।

सोमस्य[1] इति ।

होतुर्वैश्वदेवग्रहस्याज्या[2] -

---

होता - ये ३ यजामहे "विश्वेदेवाः शृणुतेमं०" वौषट्, सोमस्याग्ने वीही वौषट् । अध्वर्युः - वषट्कृतानुवषट्कृते जुहोति । तथैव चमसाध्वर्यवः जुह्वति सम्प्रकम्पयन्ति । एतपात्रं चमसाध्वर्यवः अन्वायन्ति[3] । अध्वर्युः होत्रेपात्रं प्रदाय, होत्रा भक्षितं "आदित्यवते०" इति मन्त्रेण भक्षयति । प्रातःसवनवत् नाराशंसभक्षः । भक्षणमन्त्रः - "नराशंस पीतस्य सोमदेवते०[4] ।

सौम्यचरुयागः कृतयागश्च -

---

सौम्योनाम कर्मविशेषश्चरुहविष्कः सोमदेवत्यः । तं सौम्यमभितो

---

(१) अथा शाक्यति० बौ० श्रौ० ८,१३ ।

(२) विश्वेदेवाः० ऋ० सं० ६,५२,१३ । आ० श्रौ० ५,१८,१३, । ऐ० ब्रा० ३,२६,३१ ।

(३) वषट्कृतानुवषट्कृते जुहोति - - - - - - - - - - - नाराशंसा अन्वायन्ति, बौ० श्रौ० ८।१३ ।

(४) नराशंस पीतस्य सोमदेवते० तै० सं० ३,२,५ । बौ० श्रौ० ८।१३, सकृन्नाराशंसं तृतीयसवनमु०, ऐ० ब्रा० २,२४ ।

(५) यत् सौम्यो भवति० दक्षिणार्धे जुहोति० उद्गातृभ्यो हरन्ति० अवेक्षन्ते० य आत्मानं न परिपश्येदितासुः स्यादभिदिदं कृत्वा वेक्षते० आग्नावैष्णव्यचाघृतस्य यजति० उपांशुयजति० ।
- तै० सं० ६,६,७ ।

घृतयाज्याभ्यामुपांशु परियजन्ति । अध्वर्युः होतृचमसमुखान् जघनेन ध्रुवः सादयन्ति । एतस्मिन् काले यदा चरुशृतो भवति तदा प्रतिप्रस्थाता प्रेषानन्तरं यथावकाशं मन्त्रवत् तूष्णीं वा सौम्यचर्वर्थं पात्रा सादनादि कृत्वा, सौम्यं चरुं शाला-मुखीये निरुप्य, इदानीमभिघार्य, उद्वास्य, "यन्तेऽग्ने०" इति मन्त्रेण आसादयति । (सौम्यां न परियक्ष्यति) परियक्ष्यन् तं सौम्यमागत्य ध्रुवाज्यात् चतुर्गृहीतं गृहीत्वा, अत्याक्रम्य, आश्राव्याह - "घृतस्य यजें" ति [1]।

होता - ये ३ यजामहे "घृता हवनी घृतपृष्ठो अग्निः" पूर्वाघृत याज्यां पठति [2]। होतुर्वषट्कृते अध्वर्युर्जुहोति [3]। यजमानः - विष्णव इदं नममेति त्यागं पठेत् । तथा च "दध्विरसि०" इति मन्त्रेण अनु-मन्त्रणं करोति ।

अध्वर्युः[4] - पुनरुपस्तीर्य, द्विश्चरोरवदाय, अभिघारयति न प्रत्यनक्ति च । अत्याक्रम्य आश्राव्याह - "सौम्यस्ययजें" ति ।

---

(१) अथ होतारं विपृच्छति परियक्ष्यसि सौम्यां ३ न परियक्ष्यसी ३ इति । स यथैनं होता प्रत्याह० - - - - - - आश्राव्याह घृतस्य यजेति, - बौ० श्रौ० ८।१४ ।

(२) आग्नेयी प्रथमा घृत याज्या सोमीसौम्य याज्या वैष्णवी घृत याज्या त्वं सोम पितृभिः संविदा न इति सौम्यस्य पितृमत्या यजति० । घृताहवनी घृत पृष्ठो० - - - - - - - - - देवानिति पुरस्तात्, आ० श्रौ० ५,१६,३, ऐ० ब्रा० ३,३२ ।

(३) वषट् कृते जुहोति, बौ० श्रौ० ८,१४ ।

(४) अथोपस्तीर्य द्विश्चरोरवद्यति० - - - - - - - - - - - - - सौम्यस्य यजेति, बौ० श्रौ० ८।१४ ।

होता - ये ३ यजामहे "त्वं सोमपितृभिः सवि०" - - - - - वौषट्[1]
इति याज्यां पठति ।

अध्वर्युः - होतुर्वषट् कृते प्राचीनावीति भूत्वा, दक्षिणार्द्ध पूर्वार्द्धे जुहोति ।[2]
यजमानः - सोमायेदं नममेति त्यागं वदेत् । अध्वर्युः पुनः यज्ञोपवीति भूत्वा, अपउपस्पृश्य, मेक्षणमनुप्रहृत्य, स्रुचि चतुर्गृहीतं गृहीत्वा अत्याक्रम्य, आश्राव्याह - "घृतस्य यजेति ।

होता - ये ३ यजामहे "उरुविष्णो विक्रमस्व०" इति द्वितीयां घृतयाज्यां उपांशु स्वरेण पठति ।[3]

अध्वर्युः - होतुर्वषट् कृते पूर्ववत् जुहोति ।

यजमानः - विष्णव इदं नममेति त्यागं पठेत् ।

अत्र द्वितीय घृतयागे चतुर्गृहीताभावे अध्वर्युः - स्रुवाहुत्या "विष्णोस्त्वं न" इति मन्त्रेण अभिजुहोति ।[4]

---

(१) त्वं सोम पितृभिः संविदान इति सौम्यस्य याज्या । तं घृत याज्याभ्यामुपांशुमयतः परियजन्ति । आ० श्रौ० ५,१६,१-२, त्वं सोम पितृभिः ऋ० सं० ८।४८।१३ ।

(२) वषट् कृते दक्षिणार्धे पूर्वार्धे प्राचीनावीती सौम्यं जुहोति ।
बौ० श्रौ० ८।१४ ।

(३) उरुविष्णो विक्रमस्व० - - - - - - - - - - - - - -
उपरिष्टात्, आ० श्रौ० ५,१६,३ ।

(४) अथैनं वैष्णव्यर्चा स्रुवाहुत्याभि जुहोति विष्णोत्वं० नाद्रियेत्,
बौ० श्रौ० ८।१४ ।

अत्र आश्वलायनमतम्[1] - यद्यन्यतरो यजति तदा 'अग्नाविष्णू मदिषाम प्रियं वा' इति कृत्वा यजेत् ।

सौम्यचरुमध्ये छायावेक्षणम्[2] -

---

अध्वर्युः चरुमध्ये गर्तं कृत्वा, प्रभूतलौकिकमाज्यं आदाय, उद्गातृव्यतिरिक्ताः स्वशरीरच्छायामाज्यमध्ये 'यन्मेमनः परागतम्०' इति मन्त्रेण अवेक्षन्ते । अत्र होतुः 'यँद्वचक्षुर्दिवि०' इति स्वसूत्रोक्त मन्त्रेण सौम्य चरुमध्ये अवेक्षेत् । यदि होता स्वच्छाया तस्मिन् सौम्यं न पश्येत्तर्हि 'अपश्यन् तुदिस्पृक्०' 'भद्रं कर्णेभिः शृणुयामदेवाः०' इति मन्त्रद्वयं ब्रूयात्[3] । चरोः - अवेक्षणानन्तरं अंगुष्ठोपकनिष्ठिकाभ्यां आज्येनाक्षिणी अज्य, चरुमुद्गातृभ्यः प्रयच्छेत् । इति कृतयागः ।

---

(१) अन्यतरश्चेदग्नाविष्णूमदिषाम प्रियं वामित्युपांश्वेव ।
आ० श्रौ० ५,१६,३ ।

(२) तस्मिन्नाज्यमानीयावेक्षते० तस्मिन् भूय आज्यमानीयावेक्षते-
यन्मेमनः० । बौ० श्रौ० ८।१४ ।

(३) आहृतं सौम्यं पूर्वमुद्गातृभ्यो गृहीत्वाऽवेक्षेत यच्चक्षुर्दिवियत्
सुपर्णो० - - - - - - - - - - - - - - - - - - - - - - - -
भद्रं कर्णेभिः शृणुयामदेवा इति च भद्रं कर्णेभिः ऋ० सं०
१,८६,८ । आ० श्रौ० ५,१६,४-६ ।

पात्नीवतग्रहप्रचारः[1] -

पात्नीवतग्रहप्रचारोऽपि उपांशुरेव भवति । अध्वर्युः प्राङ्गणायन्नाह - प्रतिप्रस्थातरुपांशु पात्रेण पात्नीवतमाग्रयणात् ग्रहं गृहीत्वोपास्वमासीपद:" इति प्रैषं ददाति । ततः प्रतिप्रस्थाता - "उप० बृहस्पतिसुतस्य०[2]" इति मन्त्रेण उपांशुपात्रेण पात्नीवतमाग्रयणात् ग्रहं गृह्णाति । तं बर्हिषि अन्तर्धाय "अहं परस्तादहमवस्तात्[3]०" इति मन्त्रेण घृतेन श्रीणाति । अपोद्धृत्य, बर्हिषि-परिमृज्य अनासादितं पात्नीवतग्रहमध्वर्युरादाय, आश्राव्याह - "अग्नीत् पात्नीवतस्य यजे" ति । आग्नीध्रः - "ये ३ यजामहे ऐभिरग्ने सरथंयाह्यर्वाङ्०" ति पात्नीवतग्रहस्य याज्यां पठति । वषट्कृते आग्नीध्रे अध्वर्युः "सजूर्देवेनत्वष्ट्रा सोमं पिबस्वाहा" इति मन्त्रं पठित्वा जुहोति । यजमानः - अग्नये पात्नीवत

---

(१) अथ प्राङ्गणायन्नाह प्रतिप्रस्थातरुपांशुपात्रेण० तत् श्रुत्वा प्रतिप्रस्थातोपांशु पात्रेण पात्नीवत० अपोद्धृत्य बर्हिषि न सादयतीति ब्राह्मणम् । असादयित्वोपनिष्क्रम्या श्राव्याह अग्नीत्० वषट् कृते जुहोति सजूर्देवेन० उपांश्वनुवषट् कृते हुत्वा हरति भक्षम्० नीत्येव संभक्षयतः ।
बौ० श्रौ० ८।१४ ।

उपांशु पात्रेण प्रथमचोत्तमश्च ग्रहौ गृह्यते० यदुपांशु पात्रेण पात्नीवतमाग्रयणाद् गृह्णाति० यद् घृतेन पात्नीवतं श्रीणाति० न सादयति०; तै० सं० ६,५,७ ।

(२) बृहस्पतिसुतस्य०, सजूर्देवेनत्वष्ट्रा० । तै० सं० १,४,२७ ।

(३) अहं परस्तादहमवस्तात्०। तै० सं० ३,५,५,२ ।

इदं नमम इति त्यागं पठेत् । अध्वर्युः - तं ग्रहं अग्नीधे हरति न संमर्शयति च । अग्नीधे पात्रं प्रदाय सम्प्रैषं ददाति ।[1]

सम्प्रैषस्वरूपम्[2] -

---

'अग्नीनेष्टुरुपस्थमासीद, नेष्टः पत्नीमुदानय, उद्गात्रा संख्यापय उपप्रवर्तयतात्, वरुणीपप्रवर्तयतात्, नग्नं कृत्वोरुमुपप्रवर्तयतात् होतुश्चमसमनून्नयध्वं, उन्नेतः सर्वश एव राजानमुन्नयमातिरीरिचः प्रतिप्रस्थातर्होतृचमसे ध्रुवायावकाशं कुरुतात् एहि यजमान' इति ।

होतृचमसोन्नयनम्[3] -

---

अध्वर्युः पूर्वयाद्वारा हविर्धानं प्रपाय 'भूतमसिभूतेमाधा०' इति मन्त्रेण

---

(१) विहृतेषु शालाकेष्वाग्नीध्रः पात्नीवतस्य यजत्यभिरग्ने सरथं याह्यर्वाङि०त्युपांश्वेव, आ० श्रौ० ५,१६,७ । उपांशु पात्नीवतस्याग्नीध्रो यजति० नानुवषट् करोति, ऐ० ब्रा० ६,३, ऐभिरग्नेसरथं० ऋ० सं० ३,६,६ ।

(२) बौ० श्रौ० ८।१४ ।

(३) पूर्वयाद्वारा० - - - - - - - - - - - - - - - - - - - - संसादयन्ति । बौ० श्रौ० ८।१४, अग्नीनेष्टुरुपस्थमा सीदनेष्टः पत्नीमुदानय इत्याह०, तै० सं० ६,५,८, भूतमसिभूतेमाधा मुखमसि मुखं भूयासम् । तै० सं० ३,२,८,५ ।

यजमानं ध्रुवमुपस्थापयति । चमसाध्वर्यव: पूतभृतस्थेन सर्वेण सोमेन होतृचमसमुख्यां श्चमसानुन्नीयमुत्तरवेद्यां सादयन्ति । होतृचमसे अल्पमुन्नयति ।

आश्वलायनमतम् [1]

---

नेष्टुर्विसंस्थित सन्चरेण नेष्टारमनुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत् पात्नीवतग्रहम् । नेष्टर्यधिकृत उपस्थ इति वचनात् तस्यैवेत्यकर्ता सत्यं तस्येति वचनं शास्त्रान्तरे "नोपस्थ आसीत्" इति प्रतिषेधे सत्युपस्थ एवोपविशेदित्येवमर्थम् ।

अग्निष्टोमस्तोत्रम् [2] -

---

तृतीय सवनगत द्वितीयस्तोत्रमुपाकरणम् । अध्वर्युः अपउपस्पृश्य,

---

(१) नेष्टारं विसंस्थितसन्चरेणानुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत् ।
आ० श्रौ० ५,१९,८ ।

(२) साकौसं० १,१,१,४,१, २,४,१,२०, यज्ञायज्ञियं साम । अथापउपस्पृश्य० सप्तहोतारं व्याचष्टे प्रस्तुते साम्नि नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति विश्वस्येत० स य देवनामुद्गातोपमोचति तदेषा-पत्न्यूरुणा० - - - प्रवर्तयति, बौ० श्रौ० ८।१४ । यज्ञायज्ञिस्य सप्तहोतारम् । तै० ब्रा० २,२,८,३, विश्वस्यत० तै० सं० ३,५,६ उद्गात्रा संख्यापयति० अपउप प्रवर्तयति० ऊरुणोप प्रवर्तयति, नग्नं कृत्यौ समुपप्रवर्तयति० । तै० सं० ६, ५, ८ ।

बर्हिषिरादाय, वाचं यमः प्रत्यङ्०ाद्धृत्य स्तोत्रमुपा करोति । उपाकरणं जपित्वा, सप्तहोतृसंज्ञकमन्त्र पाठान्ते नेष्टा प्रस्तुते साम्निपत्नीमुद्गात्रा सहायित्वा, "विश्वस्यै विश्वावती वृष्ट्याक्तः" इति मन्त्रं वाचयति । मन्त्रवाचनानन्तरं यदा उद्गाता संज्ञांकरोति तदा पत्नी - "ईषद् वस्त्रमपसार्य उरुमूलात् पत्नीजनो प्रावयति । वापोहिष्ठीय संज्ञनादासीत् । होतास्तोत्रोपाकरणा-दारम्य प्रावृतशिरस्का भवेयुः । इति स्तोत्रोपाकरणम् ।

अग्निमारुतशस्त्रशंसनेविशेषः[१] -

अध्वर्युः "इहादेव हूँ" रिति जपति । शस्त्रशंसने प्रतिप्रणवे प्रति-गृणाति । "स्वादुष्किलाय" मिति वतप्रमुष्यतो मोदं प्रतिगृणाति । अवसाने "मदामो दैवं" प्रणवे मोदामो दैवो ३ मिति ।

शस्त्रशंसनेहोतृनियमाः -

होतास्वभ्यग्रं शस्त्रं शंसेत् । वाचस्तिस्रो वृत्यो विलम्बिता, मध्यमा

---

(१) होतुः कालात् पराङ्०ावर्ततेऽध्वर्युः शंसति । प्रतिगृणाति । अथ यत्र होतुरभि जानाति स्वादुष्किलायं० तदुष्यतोमोदं प्रतिगृणाति मोदा० इत्याव्याहावात् । बौ० श्रौ० ८।१५, अथ यथेतम् । तस्याऽऽर्भां पच्छ कृावानं पच्छः शस्याचेत् । अर्धर्चश इतराम् । संतानमुखेन वचेन । एवान इन्द्रो० भूमिमुपस्पृशन् । उक्तेन वचनेन ध्रुवावनयनं कांक्षेत् ।

- आ० श्रौ० ५,२०,१-७ ।

द्रुता चेति । तत्र विलंबितायां य एकमात्रः स मध्यमायां द्विमात्रः, एवं द्रुतायां त्रिमात्रमिति । एवं श्रूयते - "तेनासंत्वरमाणाश्चरेयुः" इत्यारभ्य "त्रिषु सवनेष्व संत्वरमाणाश्चरेयुः" इति स्थितेऽसंत्वरमाणा इति संत्वराप्रतिषेधादन्तरा मध्यमावृत्तिर्विहिता भवति । तत्राग्नि मारुते मध्यमामपोह्य द्रुता विधीयते । उच्चनीचभावेनैवं शंस्तव्यम् । त्रिषु सवनेषु मन्द्रादयो यमा आरोह क्रमेणैव प्रतीकाव्या: । तस्याग्निमारुतस्यापामूचमृणावानं शंसेत् । यदि स: पच्छ: शस्या भवेत्ता पादे-पादे अवसाय अनुष्वसन्नेव शंसेत् । यदि साऽर्धर्चशस्या स्यात् तदा अर्धे अवसाय अनवानं शंसेत् । कृणावानवचनात्त्रिषु सवनेष्वसंताने प्राप्ते उक्तेन वचनेन द्वितीयाया: सन्तानं विधीयते । "परिधानीयाया उक्तेन वचनेन ध्रुवावनयनं प्रतीक्षेत" । ध्रुवो नाम ग्रहः तस्यावनयनमवसेचनं होतृचमसे, तस्मिन् शस्त्रेऽसमाप्त एव कर्तव्यम् । तत् पूर्वमनवनीतं चेत् परिधानीयाया मध्यमे वचन उत्तमपादमवशिष्य स्थित्वा तस्मिन्नवनीते शेषं समापयेत् । आग्निमारुतशस्त्रान्तपरिधानीया कृतपाठे भूमिमुपस्पृशन्निति परिदध्यात् इति ।

आग्निमारुतशस्त्रशंसनप्रकार:[१] -

होता हिम् भूर्भुवस्वरो ३ मध्वर्यो शो शों सावो३ म् वैश्वानराय[२]

---

(१) वैश्वानरो येणाग्नि मारुतं प्रतिपद्यते० ऐ०ब्रा० ३,३५-३८ वैश्वानराय पृथुपाजसे० - - - भिरश्नोति परिदध्यात्, आ० श्रौ० ५,२०,६ ।
(२) वैश्वानराय० ऋ० सं० ३,३,१-१० । आद्यां विग्राहं त्रि: शंसेत् । निविद्धानीयं एकम् ।

पृथुपाजसे विपः । रत्नाविवन्त परुणेषु गातवो ३ मग्निर्हि देवां अमृतो दुवस्यति । अथा कर्माणि सनतान दूडुणो ३ मु अन्तर्दूतो रोदसी दस्म ईयते० -------- परिभूरसित्मनो ३ मु । शौं सावो ३ मु अग्निर्वैश्वानर:[1]
सोमस्यमत्सत्० ------------------------ गमो ३ मु
वैश्वानरस्य०[2] ------------------------रेतसो ३ मु
शौं सावो ३ मु शंनः[3] करत्यर्वते० -------------- गवो ३ मु
शौं सावो ३ मु प्रत्यक्षस:[4] प्रतवसो०५-------------- दधिरो ३ मु
शौं सावो ३ मु मरुतो[5] देवा: सोमस्य मत्सन्त्० --- भवन् ब्रह्माण्यव-
सानमो ३ मु । श्रियसेकं०[6] -------------- धाम्नो ३ मु ।
शौं सावो ३ मु यज्ञायज्ञावो०[7] २ ----------------- वनुनो ३ मु
शौं सावो ३ मु देवो वो द्रविणोदा:०[8] २ -------- दाशुषो ३ मु
शौं सावो ३ मु प्रत्यस्मै०[9] ७ -------------- यंसते धियो ३ मु

---

(१) अग्निर्वैश्वानर:० खिलम् ५,५,८ । निविद् ।
(२) वैश्वानरस्य० ऋ० सं० ३,३,११ ।
(३) शंनः करत्यर्वते० ऋ० सं० १,४३,६ ।
(४) प्रत्यक्षस:० ऋ० सं० १।८७।१-५ । निविद्धानीयं सूक्तम् ।
(५) मरुतो० खिलम् ५,५,६ ।
(६) श्रियसेकं० ऋ० सं० १,८७,६ ।
(७) यज्ञायज्ञावो० ऋ० सं० ६,४८,१-२ । स्तोत्रिय: प्रगाथ: ।
(८) देवो वो० ऋ० सं० ७,१६,११-१२ । अनुरूप: प्रगाथ: ।
(९) प्रत्यस्मै० ऋ० सं० १,१४३,१-७ । निविद्धानीयं सूक्तम् ।

औं सावो ३ मु अग्निर्जातवेदाः सोमस्य मत्सत्० [1] - - - - - - - - गमी ३ मु

अप्रयुच्छन्नप्र० [2] - - - - - - - - - - - - - - - - - - - - नी जौ ३ मु ।

औं सावो ३ मु आपोहिष्ठा० ३ [3] - - - - - - - - - - - - - - वनो ३ मु ।

औं सावो ३ मु उतनोऽहिर्बुध्न्यः शृणोतु० [4] - - - - - - अवन्ती ३ मु ।

औं सावो ३ मु देवानां पत्नी० २ [5] - - - - - - - - - ऋतुर्जनीनी ३ मु ।

औं सावो ३ मु राकामहं सुहवां० २ [6] - - - - - - - - - - - - - रराणी ३ मु ।

औं सावो ३ मु पावीरवीकन्या० [7] - - - - - - - - - - - - - यं सौ ३ मु ।

औं सावो ३ मु इमं यमप्रस्तर० [8] - - - - - - - - - - - - मादयस्वौ ३ मु ।

औं सावो ३ मु मातलीकव्यैर्यमो० [9] - - - - - - - - - - - - मदन्ती ३ मु ।

औं सावो ३ मु उदीरतामवर० [10] - - - - - - - - - - हवेणी ३ मु ।

औं सावो ३ मु आहं पितृन्० [11] - - - - - - - - - - - - - गमिष्ठौ ३ मु ।

---

(१) अग्निर्जातवेदाः खिलम् ५, ५,१० ।

(२) अप्रयुच्छन्० ऋ० सं० १,१४३।८ ।

(३) आपोहिष्ठा० ऋ० सं० १०,९,१-३ ।

(४) उतनो० ऋ० सं० ६,५०,१४ ।

(५) देवानां पत्नी० ऋ० सं० ५,४६,७-८ ।

(६) राकामहं० ऋ० सं० २,३२,४-५ ।

(७) पावीरवी० ऋ० सं० ६,४९,७ ।

(८) इमं यम० ऋ० सं० १०, १४,४ ।

(९) मातली० ऋ० सं० १०,१४, ३ ।

(१०) उदीरता० ऋ० सं० १०,१५,१ ।

(११) आहं पितृन्० ऋ० सं० १०,१५,३ ।

शौं सावो ३ मु इदं[1] पितृभ्यो० - - - - - - - - - - - - विक्षो ३ मु ।

शौं सावो ३ मु स्वादुष्किलायं[2]० ४ - - - - - - - - र्वन्तरिक्षो ३ मु ।

शौं सावो ३ मु ययोरोजसा[3]० - - - - - - - - - - - पूर्वहूतौ ३ मु ।

शौं सावो ३ मु विष्णोर्नुकं[4]० - - - - - - - - - - - रुगायो ३ मु ।

शौं सावो ३ मु तन्तुं तन्वन्[5]० - - - - - - - - - - दैव्यं जनो ३ मु ।

शौं सावो ३ मु एवा न इन्द्रो[6]० - - - - - - - यज्ञरित्रोम् ।

प्रतिप्रस्थाता तन्तुं[7] तन्वन्निति शस्त्रपाठे श्रुत्वा, * ध्रुवं हस्ताभ्यां द्यावा-

---

(१) इदं पितृभ्यो० ऋ० सं० १०,१५,२ ।

(२) स्वादुष्कि० ऋ० सं० ६,४७,१-४ ।

(३) ययोरोजसा० वा० सं० ५,२०,६ ।

(४) विष्णोर्नुकं० ऋ० सं० १,१५५,१ ।

(५) तन्तुं तन्वन्० ऋ० सं० १०,५३,६ ।

(६) एवानइन्द्रो० ऋ० सं० ४,१७,२० । परिधानीया ।

(७) अथ यत्र होतुरभि जानाति तन्तुं तन्वन्० तत्र प्रतिप्रस्थातः - ध्रुवं परिगृह्णाति द्यावापृथिवी० अथैनं प्रच्यावयति विश्वेभ्यस्त्वा० अथ न माहरति दिवि देवान्० अथैनं होतृचमसे अवनयति० प्रसिद्धमुक्थं प्रतिगीर्यं० - - - - - - - - - - - - - - उक्थशायजसोमानामिति बौ० श्रौ० ८।१५, द्यावापृथिवीभ्यांत्वा० प्रारभ्य ध्रुवं ध्रुवेण पर्यन्त मन्त्रभागः, तै० सं० ४ ३,२,८ ।

यद्धोतृचमसे ध्रुवमवनयति० पुरस्तादुक्थस्यावनीय इत्याहुः मध्यतोऽवनीय इत्याहुः० उत्तरार्धेऽवनीय इत्याहुः वैश्वदेव्यामृचि०,

- तै० सं० ६,५,२ ।

पृथिवीभ्यां त्वा गृह्णामि" इति मन्त्रेण गृह्णाति । "विश्वेत्यादेवा०" इति मन्त्रेण स्थानाच्चालयति । "दिवि देवानुहं०" इति मन्त्रेण आहरति । "ध्रुवं ध्रुवेणहविषा०" इति मन्त्रेण होतृचमसे अवनयति । एवं सम्पादिते अध्वर्युः होतृचमसमादाय, आगत्याह - "उक्थशायजसोमाना"मिति ।

आग्निमारुतशस्त्रयाज्या[1] -

---

होहोता - ये ३ यजामहे "अग्नेमरुदिभं०"[2] वौंषट् सोमस्याग्ने वीहो ३ वौंषट् । अत्र द्विदेवेगोजो भवति । अध्वर्युः वषट् कृतानुवषट् कृते द्विर्जुहोति । तथैव चमसाध्वर्यवः द्विर्द्विः सर्वांश्चमसां जुह्वति । यजमानः - अग्नयेवैश्वानराय मरुद्भ्य इदं नमम, अग्नये स्विष्टकृत इदं नममेति त्यागं पठेत् । अत्र मैत्रावरुणशस्त्रवत् भक्षविधिः । सर्वे आत्मानमभिमृशन्ति । अत्र नाप्यानम् । चमसाध्वर्यवः चमसान् मार्जालीये प्रक्षाल्य उत्तरेणाहवनीयं अद्भिः पूरयित्वा, होतृचमसप्रमुखानुदीचः स्थापयन्ति । अध्वर्युः शालामेढ्रणं चानु-प्रहृत्य, उपवेशनिरसनं करोति । ततः सवनीय प्रायश्चित्तं जुहोति । मंत्रः - १- जनस्य गोपा अजनिष्ट० । यन्मआत्मनो० इत्यादि समानम् । ततः एके-

---

(१) अग्ने मरुद्भिः० ऋ० सं० ५,६०,८ । अग्ने मरुद्भिः शुभयद्भि० अग्निमारुत्यायजति, ऐ० ब्रा० ३,३८, अग्नेमरुद्भिः शुभयद्भिर्कृक्वभिरितियाज्या, आ० श्रौ० ५,२०,८ ।

(२) वषट् कृतानुवषट् कृते० - - - - - - - - सर्पत इत्याह प्रशास्ता इतिष्ठतो तृतीयसवनम् । बौ० श्रौ० ८।१५ ।

कस्मिंश्चनसे त्रींस्त्रींदूर्वा ग्रन्थीं, एकं दर्भपुञ्जालं, प्रास्य, "प्रशास्त: प्रसुहि" इत्यध्वर्युवचनं श्रुत्वा, मैत्रावरुण: "सर्पत" इति वदति तं श्रुत्वा सर्वे यथा पूर्वं नि: सर्पन्ति । इति तृतीयसवनम् । अग्नीषोमीयवत् आग्नीध्रीयात् औपयजाना हरति । अनूयाजादि शंयुवाकान्तं कर्म अग्नीषोमीयवत् भवति ।

सूक्तवाके विशेष:[1] -
---

सूक्तवाके आज्यभागानन्तरं "वनस्पतिरिदं हविर्जुषतावीवृधत महोज्यायो कृत । इन्द्रोवसुमानिदंह विर्जुषता वोवृधतमहोज्यायोकृत, इन्द्रो- रुद्रवानिदं हविर्जुषतावोवृधतमहोज्यायो कृत, इन्द्रआदित्यवां ऋभुमान् विभुमान् वाजवान् बृहस्पतिवान्, विश्वदेव्यावानिदं हविर्जुषतावोवृधतमहोज्यायो कृत । देवा आज्यपा इत्यादय: । आशास्ते सुन्वन्यजमानो दीक्षित यजमानस्य लौकिक नक्षत्र च नाम ग्रहनं भवति । शंयुवाकान्तो वाजिनयागो भवति ।

हारियोजनयाग: -
---

वाजिन यागानन्तरं अध्वर्यु: उन्नेतारमुद्दिश्य - "उन्नेतर्ग्रहस्तेप्रचरं"

---

(१) प्रागाज्यपेभ्य: सवनदेवता आवाहयेदिन्द्रं वसुमन्तमावहेन्द्रं रुद्रवन्त- मावहेन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमावहेति । आ० श्रौ० ५,३,१० । ऊर्ध्वं शंयु- वाकाद्धारि योजन:, आ० श्रौ० ६।११।८ ।

इति प्रैषं[1] ददाति । उन्नेता द्रोणकलशे आग्रयणस्थं सर्वं सोमं 'उप० हरिरसि-[2]
हारियोजन०' इति मन्त्रेण गृह्णाति । अपोद्धृत्य, बर्हिषि द्रोणकलशमादाय,
उपोत्तिष्ठन्नाह - 'इन्द्राय हरिवते धानासोमानामनुब्रूहि'[3] इति । मैत्रावरुणः
'[4]अपाः सोममस्तमिन्द्रप्रयाहि०' इति पुरोनुवाक्यां पठति । उन्नेता[5] - 'शिरसि
वस्त्रे द्रोणकलशं च विधाय, पृष्ठ्याया दक्षिणतो दक्षिणं पादं सव्यं अपसृतः
प्राङ्मुखः आश्राव्याह - 'इन्द्राय हरिवते धानासोमान् प्रस्थितान् प्रेष्य' इति ।
मैत्रावरुणः[6] - 'धानासोमानामिन्द्राद्विवपिबन्तु० - - - - होतर्यज' इति

प्रैषं ददाति ।

होता - ये ३ यजामहे 'युनज्मिते ब्रह्मण केशिनाहरी०' - - - वौषट्

सोमस्याग्ने वीही ३ वौषट् । इति सानुवषट्कारपूर्वकं याज्या

---

(१) शंयुना० - - - - - - - - - - - - - - - - उन्नेतारमाह ग्रहस्वे प्रचर, बौ० श्रौ० ८।१६ ।

(२) तच्छ्रुत्वोन्नेताद्रोणकलश आग्रय०, तृतीयं ग्रहं गृह्णाति उप० हरिरसि हारि याजन० तै० सं०१,४,२८ । बौ० श्रौ० ८।१६ धानाभिर्हारियोजनं श्रीणाति० बह्वीभिः श्रीणाति० प्रवृत्य परियोन्नुहोति० उन्नेता जुहोति०, तै० सं० ६,५,६ ।

(३) अपोद्धृत्य बर्हिषो अर्थं न मादायोपोत्तिष्ठन्नाह इन्द्राय० बौ० श्रौ० ८।१६ ।

(४) अपाः सोम० ऋ० सं० ३,५३,६ । आ० श्रौ० ६,११,६ ।

(५) शीर्षन्निधाय विक्रम्या आश्राव्याह इन्द्राय हरिवते० बौ०श्रौ० ८।१६ ।

(६) धाना सोमानामिन्द्राद्वि च० - - - - - - होतर्यज ।
खिलम् ५,७,४ (च); नि० कु० प्रै० च०, पृ० २६,६६ ।

मन्त्रं पठति ।[1]

उन्नेता[2] - होतुर्वषट् कृते 'सहसोमाइन्द्राय स्वाहा' इति मन्त्रेण जुहोति ।
यजमानः - इन्द्रायहरिवत इदं नमम त्यागः वदेत् । अनुवषट् कृते हुत्वा,
भक्षं हरति । यावन्तः ऋत्विजः तेभ्यः तिस्रस्तिस्रो धाना ददाति । ततः
उन्नेता[3] द्रोणकलशमाहृत्य, इडामिवप्रतिगृह्य होतुःसमीपमागत्य, होता -
उन्नेतरुपह्वयस्वं इति तथा च सर्वे उन्नेतारमुपहूय एकैकामुखे प्रक्षिपन्ति न
संभिन्दति, अत्र भक्षणमन्त्रः स्व स्व शाखोक्तो भवति[4] । सर्वे आत्माप्यायनम्
करोति । मुखहृदयाभिमर्शनं स्व स्व शाखोक्त मन्त्रपाठः । ततो होता[5]

---

(१) युनज्मितेब्रह्मणा० ऋ० सं० १,८२,६, आ०श्रौ० ६,११,६ । अथ हारि-
योजनेन चरन्ति० त्रिष्टुभं हारियोजनस्य पुरोनुवाक्यामनूच्य जगत्या-
यजति० महतीयाज्या० अनुवषट् करोति० शां० ब्रा० १८,६ ।

(२) वषट्कृते जुहोति सहसोमा० अनुवषट्कृते हुत्वा हरति भक्षान् स यावन्त-
ऋत्विजस्तेभ्य उन्नेताधानाव्यावपति, बौ० श्रौ० ८।१६ ।

(३) त उन्नेतर्युपह्वमिष्ट्वैकैका मन्वस्यन्ते, बौ० श्रौ० ८।१६, उन्नेतर्युप-
ह्वमिच्छन्ते०, तै० सं० ६,५,६ । आहृतमुन्नेत्रा द्रोणकलशमिडामिव
प्रतिगृह्योपह्वमिष्ट्वाऽवेक्षेत । आ० श्रौ० ६।१२।१ ।

(४) हरिवतस्ते हारियोजनस्य० - - - - - - - - - - - - - - - - -
आ० श्रौ० ६।१२।२ ।

(५) यथा प्रसृप्तं विनिःसृप्याऽऽग्नीध्रीये विनिःसृप्ताहुती जुहवत्ययं
पीतइन्दुरिन्द्रं इदं राधोऽग्निना - - - - - - - - - - -
वीययिस्वाहेति, आ० श्रौ० ६,१२,२ ।

आग्नीध्रीये यथा प्रसृप्तं विनिःसृप्य, 'अयं पीत इन्दु०' । 'इदं रात्रीअग्निना दत्ताऽगात्०' इति मन्त्राभ्यां विनिःसृप्ताहुतीर्जुहोति । विनिःसृप्ताहुतिरिति होमनामेति । होतुः धानाभक्षणानन्तरं अध्वर्युः 'इष्टयजुस्ते देवसोम०'[(१)] इति मन्त्रेण धानान् भक्षयति । धानामुखादवगीर्य, प्रक्षाल्य, उत्तरवेद्यां सह निवपन्ति 'आपूर्याः[क] स्थामापूरयत०' इति मन्त्रेण । यजमानः द्रोणकलशात् तिस्रो-धाना आदाय, स्फ्यमुदपात्रं बर्हिश्च आदाय, सदोहविर्धानयोर्मध्येन दक्षिणतो गत्वा - मार्जालीयस्य दक्षिणतो दक्षिणामुखो भूत्वा, प्राचीनावीति कृत्वा स्फ्येन दक्षिणायतरेखारूपेण सकृदुद्धृत्य, अवोक्ष्य, दक्षिणाग्रं बर्हिस्तीर्त्वा, १- मार्जयन्तां[क] पितरः । २- मा० पितामहाः । ३- मार्जयन्तां पितामहाः' इति प्रतिमन्त्रं दक्षिणापवर्गं अद्भिः मार्जयति । त्रिषु स्थानेषु एकैकां धानां 'एतत्ते[क] तत अमुकशर्मन् ये चत्वामनु' इति प्रथमां धानां ददाति । द्वितीयाधानां गृहीत्वा एतत्ते पितामह० इति धानां ददाति । पुनः तृतीयां धानां गृहीत्वा एतत्ते प्रपितामहः०' इति धानां ददाति । ततः 'अत्र पितरो[क] यथाभागं मन्दध्वम्' इति मन्त्रमुच्चार्य यज्ञोपवीती भूत्वा, उदङ्पर्यावृत्य सुर्येत्०' इति षड्ढोतारं

---

(१) मनसा संवाधते इष्टयजुषस्ते० अथैना निष्णिज्योत्तरवेद्यां संनिवपन्ति आपूर्याः स्था० निवपन्त्येव यजमानास्तिस्रो धानाः - सक्ते अथ याचति स्फ्यमुदपात्रं बर्हिरिति० जघनेन दक्षिणेन हविर्धाने० अद्भिर्मार्जयति मार्जयन्तां पितरो० अथ तिस्रो धाना ददाति एतत्ते ततासौ० षड्ढोतारं व्याचष्टे० द्वे स्रुवाहुती जुहोति यन्म आत्मनो०, बौ० श्रौ० ८।१६-१८ ।

क - तै० सं० ३,२,५ ।

व्याचष्टे । पुन: प्राचीनावीति भूत्वा, पूर्ववत् मार्जयित्वा "नमोव: पितरो रसाय०"[क] इति मन्त्रै: उपतिष्ठते । तत: यज्ञोपवीति भूत्वा, अपउपस्पृश्य - "प्रजापतेन०"[क] इति मन्त्रं पठन् यथेतं गच्छति । तत: अध्वर्यु: - "यन्म आत्मन:०"[क] "पुनरग्नि-श्चक्षु०"[क] रिति मन्त्राभ्यां आग्नीध्रे द्वे स्रुवाहुती र्जुहोति ।

होता[१] षट् शकलानि गृहीत्वा १- देवकृतस्यैनसो० । २- पितृ-कृतस्यैनसो । ३- मनुष्यकृतस्यै नसो० । ४- आत्मकृतस्यै० । ५- एनसएनसो० "वयजनमसिस्वाहा । ६- यद्वो देवाश्चकृम०" प्रतिमन्त्रं आहवनीये अभ्यादधाति । तत: द्रोणकलशात् धाना गृहीत्वा - अवेक्ष्यन् "आपूर्यास्थामापूर्य०" ति मन्त्रेण अवघ्राय, तान् धानान् अन्त: परिधिदेशे निवपेयु: । तत: प्रत्येत्य, आतीर्थदेशे अपां पूर्णाश्चमसास्तान् सव्यावृतौ वृजन्ति । हस्ति तृणानि विसृज्य प्रति स्वं चमसेभ्य: त्रि: प्रसव्यमुदकै: आत्मन: अप्रदक्षिणं दक्षिणै: पाणिभि: "स्वधापितृभ्यस्वधा, २- स्वधापितामहाय, ३- स्वधाप्रपितामहायेति मन्त्रेण पर्युक्षन्ते । स्वधापित्र इत्यादिभि: सहहारियोजन भक्षणप्रभृति ग्रावस्तोत्रासह सर्वै: कार्यं पाणौ चमसेषु अवधाय, "अप्सुधूतस्य देव०" इति मन्त्रेण प्राणभक्षं भक्षयित्वा, "माहं प्रजां पराक्षिच०" मिति मन्त्रेण स्वकीयं चमसं अभ्यात्मं निनीय-

---

(१) आहवनीये षट् षट् शकलान्यभ्या दधाति देवकृतस्यैनसोऽव यजनमसि-स्वाहा० - - - - - - - - - - - - - - - - - - -
दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधि द्रप्सान्प्राश्य सख्यानि विसृजन्त उभाकवो०, आ० श्रौ० ६,१२, ३-१२ ।

क - यद्वो देवाश्चकृम० ऋ० सं० १०,३७,१२ ।

"अच्छायं वो मरुत०" इति मन्त्रेण[क ख] अभिमृशन्ति । "दधिक्राव्णो०" इति मन्त्रेण[ग] आग्नीध्रीये दधि द्रप्सान् प्राश्य - "उभाकवी युवा०" इति मन्त्रेण सत्थानि विसृजन्ति ।

ततोऽध्वर्युः[१] अग्नीषोमीयवत् शालामुखीये पत्नीसंयाजैः चरित्वा, अन्वाहार्यपचने प्रायश्चित्तहोमं, फलीकरणहोमं च कृत्वा, ध्रुवामाप्याय्य, प्रायश्चित्तानि जुहोति । अत्र प्रायश्चित्तहोमे होत्रैरन्वारब्धः प्रायश्चित्तानि जुहुयात् । एवं प्रकृतानि मंत्रैः प्रायश्चित्त होमं कृत्वा, भूः भेषजमिति भूरिति शालामुखीये हुत्वा "यजुष्टो भुवं" इत्याग्नीध्रे हुत्वा, सामतः सुवरिति आहवनीये जुहुयात् । ततोऽध्वर्युः ध्रुवाज्यात् जयान्, अभ्यातानान्, राष्ट्रभृद्धोमांश्च जुहोति । एतद्धोमान्ते समिष्टयजुर्होमः - १- यज्ञयज्ञं गच्छ[०] २- एषते यज्ञो० इति द्वितीयम्, । ३- ध्रुवया[०] तृतीयं "देवागातुविदो०" इति ततः अपूर्वाज्यात्

---

ख - अच्छायंवो मरुत०, ऋ० सं० ७,३६,६ ।
ग - दधिक्राव्णो० ऋ० सं० ४,३९,६ ।
(१) अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङुपविश्य पत्नीसंयाज्य प्राङुपेत्य ध्रुवामाप्याय्य षडाज्यानि जुहोति धाता-रातिः सवितेदं जुषन्तामिति त्रीणि यजूंषि यज्ञयज्ञं गच्छैषते यज्ञोयज्ञपते देवागातुविद इत्यथ स्रुचि चतुर्गृहीतं गृहीत्वायुर्दा दक्षमी जुहोत्यायुर्दा अग्नेहविषो जुषाण इति । बौ० श्रौ० ८,१८ । समिष्ट यजूंषि जुहोति० नवजुहोति० षड् ऋग्मियाणि जुहोति० त्रीणि यजूंषि० । तै० सं० ६,६,२ । (०) तै० सं० १,४,४४ ।

चतुर्गृहीतेन जुहूवोपविश्य "आयुर्दाअग्ने हविषो०" इति मन्त्रेण जुहोति । इति प्रायश्चित्तहोमः । ततो ब्रह्मप्रायश्चित्तं जुहोति । ब्रह्मप्रायश्चित्तानन्तरं यजमानः विष्णुक्रमान् क्रमते । ततोऽध्वर्युः स्रुचमुदपात्रं, बर्हिः, हृदयशूलं च आदाय, "एहि यजमान" इति आकारयति । यजमानः - अनूच्य अपत्न्यासह ऋत्विग्भिरन्तरेण चात्वालोत्करावुदङ० निष्क्रामति । ततोऽध्वर्युः अग्रेण यूपं स्रुचेनोद्धत्य, अवेक्ष्य शुष्काद्रयोः सन्धौ हृदयशूलं "शुगसीतमभिशोच योऽस्मान् द्वेष्टि यं च" इति मन्त्रेण उपगूहति । सर्वैः मन्त्रं वदन्ति । होता[१] - स्वसूत्रोक्त "शुगसीत्योऽस्मान्०" इति मन्त्रपाठं करोति । पश्चात् अपउपस्पृश्य "वीपैराजो वरुणस्ये" ति मन्त्रापाठः । ततोऽध्वर्युः ऋत्विजश्च उपगूहनस्थानं "धाम्नो-धाम्नो०" इति मन्त्रेण अद्भिः प्रोक्षन्ति । यजमानः "सुमित्रियान आप-ओषधयः सन्तु" इति मन्त्रस्योत्तरभागं पठित्वा, ता आपः नैर्ऋत्यां दिशि निरस्यति । अपउपस्पृश्य प्रतीक्षमाणाः सर्वे आगच्छन्ति । ततः अर्धमार्गे सपलाशाः - आर्द्राः तिस्रः समिधः आदत्ते । ततः आहवनीये ग्रहणक्रमेण - समिदसि०, तेजोऽसि०, तेजोमयिधेहि०" प्रतिमन्त्रेण अभ्यादधाति । ततः सर्वे "आपोअद्यान्वचारिषं०" इति मन्त्रेण आहवनीयं उपतिष्ठन्ते । ततो यजमानः

---

क - आयुर्दाअग्ने हविषो० तै० सं० ३,३,८ ।

(१) शुगसीत्योऽस्मान्० । वीपैराजो० । धाम्नो० धाम्नो० अपस्पृश्याऽनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तः समिधः कुर्वते० । अग्नेः समिदसि० । इत्योपतिष्ठन्त आपोअद्यान्वचारिषं०, आ० श्रौ० ३,६,२३-२७ ।

(क) तै० सं० १,४,४५ ।

चात्वाले कृष्णविषाणं "ऐन्द्रस्य योनिरसि०" इति मन्त्रेण प्रास्यति । ततः प्रतिप्रस्थाता पत्नीमुदानयति सा चात्वाले तूष्णीं शङ्कुं प्रास्यति । ततो अवभृथेष्टिः ⁰ ।

१

अवभृथेष्टिः -

अवभृथेष्ट्यर्थं पात्रासादनानि कृत्वा, अध्वर्युप्रैषानन्तरं प्रतिप्रस्थाता वारुणं पुरोडाशं एककपालं शालामुखीये गार्हपत्ये वा निर्वपति । परिभोजनीयान् वेदञ्च कृत्वा पाणीसम्मृश्य, चतुरोऽग्नीन् परिस्तीर्य, उपभृत्, ध्रुवा प्राशित्र हरणेडाप्र योक्त्रान्वाहार्यस्थाली फलीकरणवर्जं, पात्राणि निर्णिज्य अत्र पात्रासादनं कुर्यात् । ततः आहवनीयस्य दक्षिणतो ब्रह्मयजमानौ उपविश्य, पृष्ण्यां स्तोत्र्यां अपः प्रणयनादि हविर्निर्वापपर्यन्तं कर्म कुर्यात् । ततोऽध्वर्युः अवभृथेष्ट्यर्थं वरुणाय वरुणाय जुष्टं निर्वपामि, वरुणाय वो जुष्टं प्रोक्षामि, वरुणायजुष्टमधिवपामि, भृगूणामंगिरसांतपसा तप्यस्व, वरुणायजुष्टं संवपामि,

---

(०) एतस्मिन् काले चात्वाले यजमानः कृष्णविषाणां प्रास्यतीन्द्रस्य योनिरसि० अथ प्रतिप्रस्थाता पत्नीमुदानयति सा चात्वाले शङ्कुं प्रास्यति तूष्णीम्, बौ० श्रौ० ८।१८ ।

(१) बर्हिरभि जुहोति० अबर्हिषः प्रयाजान् यजति० आज्यभागौ यजति० वरुणं यजति० अग्नीवरुणौ यजति० अबर्हिषावनूयाजौ यजति० पशवो वै सोमः । यद्बिन्दूनां भक्षयेत् पशुमान्त्स्यात् - वरुणस्त्वेनं गृह्णीयात् । यन्नभक्षयेदपशुः स्यान्नैनं वरुणो गृह्णीयात् । उप-स्पृश्यमेव० अप्रतीक्षमा यान्ति० । तै० सं० ६,६,३ । पत्नीसंयाजे-श्चरित्वाऽवभृथं व्रजन्ति, आ० श्रौ० ६,१३,१ ।

वरुणा यत्येति मन्त्रेण  वारुण पुरोडाशमग्नौ अधिश्रित्य, आज्यं निर्वपति । आज्यनिर्वापानन्तरमध्वर्युः "प्रोक्षणीरादाय स्रुवं च स्रुचं च सम्मृड्ढ्या ज्येनो देहि" इति सम्प्रेष्यति । आग्नीध्रः स्रुचः स्रुवौ सम्मार्ष्टि । प्रतिप्रस्थाता - पत्नीगार्हपत्या वेक्षणादि यजमानं अवेक्षयति । अध्वर्युः स्वयमाज्यमवेक्ष्य, उत्पूय, "विष्णावसि वैष्णवम्", इति मन्त्रेण आज्यमभि मन्त्रयते । पुरोडाशमुद्वास्य, स्मार्ताज्येन अभिः पृष्ठं कृत्वा सादयति । स्रुवमाज्यस्थाल्यामवदाय[१], "यन्मे अग्न०" इति मन्त्रेण अग्रेण आग्नीध्रमुखायां चर्मणि वा आसादयति । वारुणमाज्यस्थालीं सस्रुवां - स्रुचं, बर्हिः, प्रतिवसनीये वाससी, राजासन्दीं, औदुम्बरीं, स्थूणां मैत्रावरुणदण्डं, हविर्धानाभ्यां पूतभृदाधवनीयौ, वसतीवरीकलशं एकधनां चमसान्, परिप्लुपात्रं, अधिषवणं चर्म, अधिषवणे फलके, षट्शङ्कून्, ग्राव्णो वायव्यानि, आग्रयणादि स्थालीः, द्रोणकलशं, दशापवित्रं, ऋजीषं सह कृष्णाजिनेन अन्यदपि अग्रेण, उदन्चनसंभरणीयानि सोमलिप्त पात्राणि गृहीत्वा, मार्ते सोमलिप्तं परास्य आसन्द्यां कृष्णाजिने ऋजीषं निधाय, दध्ना पयसा वा मधु-मिश्रेण औदुम्बरशाखया पलाशशाखया वा ऋजीषस्योपरि जुहोति । ततः यजमानो ब्रह्मोद्गाता, होता, प्रतिप्रस्थाता, आग्नीध्रश्च अध्वर्युमन्वारभन्ते, होमकाले अन्वारब्ध इति । सर्वत्र सोमायेदं नममेति त्यागं पठेत् ।

---

(१) वैकल्पमवभृथं संसादयन्त्यग्रेणाग्नीध्रमुखाभ्यां वा चर्मणि वा पत्नीशाला-दाददे वारुणमुपस्तीर्याभिघारितमाज्यस्थालीं सस्रुवां० स्रुचं बर्हिः प्रतिवसनीयेवाससी० एतत् समादाय, बौ० श्रौ० ८।१६ ।

होममन्त्रा:[1] -

(१) यं॑त्वाव्णा० । (२) यत्त्वर्क० । (३) अक्रा च्छरीरं० । (४) नृवक्षा: सोम:० । (५) उपजरन्ति० । (६) सं प्राणापाना० । (७) एतं जानीतात्० । (८) अरिष्टोराजन्० । (९) अमूदेव:० । (१०) उपनोमित्रावरुणा० । (११) आप्यायस्व० । (१२) सं ते पयांसि० (१३) आभिर्गीर्भि:० । एभिर्मन्त्रै: ध्रुवेणाज्येन जुहोति । एतदन्तं कृत्वा, अध्वर्यु: प्रस्तोतारं प्रेष्यति । प्रैष: - "प्रस्तोत: सामगाय"[2] ।

अवभृथार्थं गमनम्[3] -

अवभृथ गमने त्रिषु स्थानेषु "र विर्वं समत्रिणं दह" इति निधनं

---

(१) "यं॑त्वाव्णा" इत्यादिमन्त्रा: तै० ब्रा० ३,७,१३ ।
(२) प्रस्तोतारमाह प्रस्तोत: सामगायेति । बौ० श्रौ० ८।१९ ।
अग्निं होतारं मन्ये० सा० कौ० सं० १, ५, २, ३, ६ ।
(३) साम्ना प्रस्तोतान्ववैति त्रिर्निधनमुपैति० अथान्तरेण चात्वालोत्करा-वुदङ्०उपनिष्क्रामन्त्युरुं हि राजा० विष्णुवति द्वितीयं निधनमुपयन्त्यप: पराक्ष्याय वाक्यति शतं ते राजन्० उदकान्ते तृतीयं निधनमुपयन्त्यथा-पामन्तमभितिष्ठन्त्यभिष्ठितो वरुणस्य० अथाप्सु बर्हि: प्रास्यत्यग्ने-रनीक०अवैतत् ध्रुवाहुत्याभिजुहोति प्रतितेजिह्वा० प्रयाजान् यजति । बौ० श्रौ० ८।१९ । अवभृथ यजूंषि जुहोति० अपोऽवभृथमवैति० साम्ना प्रस्तोतान्ववैति० त्रिर्निधनमुपैति० पुरुष: पुरुषो० निधनमुपैति, तै० सं० ६,६,३ ।

प्रत्यावृत्तौ त्रिर्थितृ[1] । सर्वे निधनमुपयन्ति । ऋत्विजः - सर्वे सम्भारमादाय, अन्तरेण चात्वालोत्करावुदङ्मुख 'उरुं[क] हि राजा वरुणश्चकार०' इति मन्त्रं पठित्वा निष्क्रामन्ति । अपो दृष्ट्वा - 'शतं ते राजन् भिषजः सहस्रं' इति मन्त्रं यजमानं वाचयत्यध्वर्युः । उदक समीपे स्थित्वा, प्रस्तोतृकर्तृकसामगानानन्तरं तीर्थं प्रविश्य उदके प्राङ्मुखाः '[क]अभिष्ठितो वरुणस्य पाशः' इति मन्त्रं पठित्वा तिष्ठन्ति । 'अग्नेरनीकमप आविवेश०' इति मन्त्रेण अप्सु बर्हिः प्रास्यति । 'प्रतिते जिह्वा०' इति मन्त्रेण स्रुवाहुत्याभि जुहोति । यजमानः अग्नयेदं नममेति त्यागं पठेत् । यां दिशमवभृथं प्रतिगच्छन्ति सा दिगेव तत्र प्राची भवति । आग्नीध्रः अपः - त्रिः सम्मृड्ढि । ततोऽध्वर्युः वेदमुपभृतं कृत्वा 'स्त्रुं त्वेति' चतुर्गृहीतं गृहीत्वा, तेन अपबर्हिषा प्रयाजान् यजति । आज्यग्रहण-प्रयाजानुयाजादि याजमानं च प्रकृतिवत् भवति । इयमिष्टिः - अनूयाजान्ताः सन्तिष्ठते । ततो होता स्थानाचमने कृत्वा, तीर्थेन प्रविश्य, 'अग्निहोता-वेत्वित्यादि बर्हिर्वर्जं चतुरः प्रयाजान् यजति । उभे प्रयाजे ये यजामहे स्वाहाग्निं, स्वाहा सोमं, स्वाहा वरुणं, स्वाहा देवा आज्यपा इत्यादि समानम् । अप्सुमन्ता-आज्यभागौ - याज्यापुरोनुवाक्ये -

---

(क) तै० सं० १,४,४५ ।

(१) ऋजन्तः साम्नो निधनमुपयन्ति । अवभृथेष्ट्या तिष्ठन्तश्चरन्ति । आ० श्रौ० ६,१३,२-३ ।

(२) प्रयाजाद्यनुयाजान्ता नास्याभिधान बर्हिष्मन्तौ प्रयाजानुयाजौ, अप्सुमन्तौ, आ० श्रौ० ६,१३,४ ।

अग्नि - "अप्स्वग्ने सधिष्टव[१]०" इति पुरोनुवाक्या ।

ये यजामहेऽग्निं जुषाणो अग्निराज्यस्य वे तू ३ वौषट्" इति याज्या ।

सोम - अप्सु[२] मे सोमो अब्रवी०" इति पुरोनुवाक्या । ये यजामहे सोमं जुषाण सोमआज्यस्य हविषो वे तू ३ वौषटं याज्या एवं आज्यभागान्तं कृत्वा, अध्वर्यु[३]: पुरोडाशस्य पूर्वार्धादिवमन्वाह - "वरुणायानुब्रूहि" इति ।

होता[४] - "अवते हेडो[क]०" इति पुरोनुवाक्यां पठति ।

अध्वर्यु[५]: - द्विरवदाय, "बर्हिस्त्वै" त्यभिघार्य, आश्राव्याह वरुणं यजां ।

होता - ये ३ यजामहे "उदुत्तमं[क] वरुणपाश०" वौषट् । इति याज्यां पठति ।

अध्वर्यु: - वषट् कृते यजति । यजमान: - वरुणायेदं नममेति त्यागं पठेत् ।

[illegible] - "बर्हिस्त्वै" त्युपस्तीर्य, सर्वं पुरोडाशं स्रुचि अवद्याह - अग्नी-
अध्वर्यु: -[६]
वरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि इति ।

---

(१) अप्स्वग्ने० ऋ० सं० ८,४,३,९ ।

(२) अप्सुमे० ऋ० सं० १०,९,६ ।

(३) अथोपस्तीर्य पूर्वार्धात् पुरोडाशस्यावद्यन्नाह वरुणायानुब्रूहि,बौ०श्रौ० ८,१९-२० ।

(४) अवते हेडो वरुण नमोभिरिति द्वे । अग्नीवरुणौ स्विष्ट कृतौ । त्वं नो अग्ने वरुणस्य विद्वानितिद्वे । आ० श्रौ० ६,१३,७ ।

(क) ऋ० सं० १,२४,१४-१५ । (५) बौ० श्रौ० ८।२० ।

(६) अथोपस्तीर्य सर्वं एव वारुणमवदयन्नाहाग्नी वरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि, बौ० श्रौ० ८।२० ।

होता - "त्वं नो अग्ने वरुणस्य०"(ख) इति पुरोनुवाक्यां पठति ।

अध्वर्युः - "अर्धिस्वें"[1] ति शिरभिघार्यं आश्राव्याह - अग्नीवरुणौ

स्विष्ट कृतौ यज ।

होता - ये ३ यजामहे ग्नो वरुणौ "सत्वं नो अग्नेऽवमो०"(ख) इति याज्यां पठति ।

अध्वर्युः - होतुर्वषट् कृते उपभृद्वर्हि जुहोति ।

यजमानः - अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामिदं नममेति त्यागं पठेत् । ततः

परिधिस्थानमुद्दिश्य संक्षालन निनयनादि कुर्यात् ।

अध्वर्युः सम्प्रेष्यति - "ब्रह्मन् प्रस्थास्यामोऽग्नीदयः सकृत् सम्मृड्ढि" ।

आग्नीध्रः - परिभोजनीयैर्दर्भैः "आपोवाजजित०" इति मन्त्रेण अपः

सम्मार्ष्टि ।

अध्वर्युः - "ज्योतिष्टद्वै"ति चतुर्गृहीतेन अपबर्हिषावनु याजौ यजति ।

होता - "देवोनराशंसो वसुवने०" । "देवो अग्निः स्विष्टकृत०" इत्यनुयाजौ

पठति । अनूयाजान्ते "समुद्रेतेहृदयमप्स्वन्तः"[2] इति मन्त्रेण अप्सु ध्रुवं

प्रतिष्ठापयति । "सन्त्वाविशन्त्वोषधीरुताप:" इति मन्त्रेण अद्भिः पूरयति[3] ।

---

(ख) ऋ० सं० ४,१,४-५ ।

(१) बौ० श्रौ० ८।२० ।

(२) अथाप्सु ध्रुवं प्रतिष्ठापयति समुद्रेते हृदयेमप्स्वन्तः इति ।
बौ० श्रौ० ८।२०, तै० सं० १,४,४५ ।

(३) अथैनामद्भिः पूरयति सन्त्वाविशन्त्वोषधीरुतापः ।
बौ० श्रौ० ८।२०, तै० सं० १,४,४५ ।

"यज्ञस्यत्वायज्ञपते०" इति मन्त्रेण अपो जुहोति[1]। यजमानः - यज्ञपतय इदं नममेति त्यागं पठेत्। "अवभृथनिचङ्कुण०" इति मन्त्रेण सोमलिप्तमृजीषाऽतिरिक्तं अप्सु प्रकिरति[2]। यजमानः - "सुमित्राजनआप ओषधयः सन्तु" इति मन्त्रेण अञ्जलिना अपो गृह्णाति, "दुर्मित्रास्तस्मैभूयासु०" इति मन्त्रेण नैर्ऋत्यां दिशि निरस्यति[3]। ततोऽध्वर्युः कृष्णाजिनेन सह क्रौणं "देवीराप एषवोगर्भ०" इति मन्त्रेण अवसुदापति। यजमानः बिन्दूनुपस्पृशति[4]। यजमानः कृष्णाजिनमद्भिरभ्युक्ष्यअन्तेवासिने पुत्राय वा ददाति[5]। ततो होता अनुयाजान्ते "नमोवरुणायाभिष्ठितो वरुणस्य पाशः०" इति मन्त्रेण पादान् उदकान्तेव दधुः। "भद्रस्यावभृथोसि" इति आचामति। उदकं पीत्वा प्रोक्ष्य प्रक्षोवन्ति। शुद्धयर्थमाचमनं कृत्वा, "भद्रितस्यावभृथोसि" इति मन्त्रेण उदकं पीत्वाऽऽचम्य, "भर्ता कृतस्यावभृथोसि" इति मन्त्रेण पुनः पीत्वा चम्येति। स्नात्वा, "आपो अस्मान् मातरः शुन्धयन्तु०"[क] "इदमापः प्रवहत०"[ख] सुमित्र्यान

---

(१) अप्स्वेवापो जुहोति यज्ञस्यत्वायज्ञपते० बौ० श्रौ०८।२०,तै०सं०१,४,४५ ।

(२) वैकृतमवभृथं संप्रकिरन्ति यत्किञ्चित् सोमलिप्तं भवति अवभृथ०
बौ० श्रौ० ८।२०,तै० सं० १,४,४५ ।

(३) बौ० श्रौ० ८।२० ।, तै० सं० १,४,४५ ।

(४) अथापउपस्पृश्याक्रतहणीषं० बिन्दूनुपिवस्पृशति । न मज्जयति,
बौ० श्रौ० ८।२० । तै० सं० १,४,४५ ।

(५) संस्थितायां पादानुदकान्तेऽवदध्युर्नमोवरुणायाभिष्ठितो वरुणस्य पाश इति० - - - - - - - - - - - सुमित्र्यान आपओषधयः सन्त्वति, बौ० श्रौ० ६,१३,८-११ ।

(क) आपो अस्मान्० ऋ० सं० १०,१७,१० । (ख) इदमापः० ऋ०सं०१,२३,२२

इत्येतैर्मन्त्रैरभ्युदीत् । ततः पत्नीयजमानौ अन्योन्यस्य पृष्ठे धावतः । तीर्थमज्जनं कुर्यात् । सर्वेषां स्नानान्ते यजमानः मेखलां विस्रस्य अप्सु प्रक्षिपति । अध्वर्युः स्नातायाः पत्न्याः "इमं विष्यामि"[क] इति मन्त्रेण योक्त्रं विमुञ्चति । पत्नी यजमानौ प्रतिवसनीये - वाससी परिधाय, "उन्नेतरुन्नोन्नय" इति प्रैषं ददाति ।[१] ततः उन्नेता दम्पती उदानयति । "उद्वयं तमसस्परि०" "उदुत्यं जातवेदसं०" "चित्रं देवानां०" इति मन्त्रपाठः[२] यजमानं करोति । मन्त्रपाठान्ते यजमानः उत्तरं नग्नपदेन अपस्तीर्य प्रेरयति - "प्रतियुतो वरुणस्य पाशः०"[क] इति मन्त्रेण । सर्वे ऋत्विजः - यजमानस्च तीर्थमप्रतीक्षमाणाः देवयजनं गच्छन्ति । मार्गे "एधोस्येधिषीमहीति"[क] त्रिभिर् मन्त्रैः त्रयः समिधं गृह्णन्ति । देवयजनमागत्य, आहवनीये गृहीत क्रमेण समिधं (१) समिदसि०, (२) तेजोसि०, (३) तेजोमयिधेहि" इति समन्त्रकमभ्या[क] दधाति । यजमानः अग्नयेदं नममेति त्यागं वदेत् । "आपो अद्यान्वचारिषं०"[क] इति मन्त्रेण आहवनीयमुपतिष्ठन्ते[३] ।

---

(१) अथानुपमज्जन्ता वन्योन्यस्य पृष्ठे धावयतो विस्रस्य मेखले प्रतिवसनीये वाससी परिधायोन्नेतार माहउन्नेतरुन्नोन्नय इति । बौ० श्रौ० ८।२० ।

(क) इमं विष्यामि० तै० सं० ३,५,६ ।

(२) तिसृभिरुद्वतीभिरुदायन्ति, बौ० श्रौ० ८।२० ।

(३) अथापामन्तं प्रति यन्ति प्रतियुतो० अथा प्रतीक्षमायन्ति - वरुणस्यान्तर्हित्यै, प्रथ्यै समिधः कुर्वते एधोऽस्येधिषीमहीति त्याहवनीयेऽभ्यादधाति समिदसि० अथाहवनीयमुपतिष्ठन्ते अपोन्वचारिषं०, बौ० श्रौ० ८।२० ।

(क) तै० सं० १,४,४५ ।

इत्यवभृथेष्टिः ।

उदयनीयेष्टिः -

एषेष्टिः प्रायणीयावत् भवति[1]। या देवताः प्रायणीयेष्टौ विहिताः ता एव अत्र भवन्ति । तत्र देवतानामनुक्रमे पथ्या, स्वस्तिः प्रथमा देवता भवति[2]। अत्र तु अग्निः, सोमः, सविता, पथ्या, स्वस्तिः, अदितिश्च एवं देवतानामनुक्रमो विहितः ।

प्रायणीयेष्ट्यां ये पुरोनुवाक्यामन्त्राः ते अत्र याज्यायां विहिताः । तत्र या याज्याः ताः अत्र पुरोनुवाक्याः[3]।

ततः प्रतिप्रस्थाता शालां गत्वा, असिदानादि प्रस्तरं कृत्वा, प्रायणीय बर्हिषा सह संभृत्य, परिभोजनीयमेकविंशतीध्मं कृत्वा, पाणि सम्मर्शनादि पात्राणि प्रायणीयावत् आसादयति । स एव वेदः तन्मेक्षणं सैव चरुस्थाली निर्णिज्य, अध्वर्युः ब्रह्माणं दक्षिणतोपविश्य, पृष्ठ्यास्तरणादि ध्रुवि प्रायणीयहामकार्षं निधाय, आदित्यमुदयनीयं चरुन्नि-

---

(१) गार्हपत्य उदयनीयया चरन्ति । सा प्रायणीययोक्ता, आ०श्रौ० ६,१४,१-२ ।

(२) पथ्यास्वस्तिरिहोभाऽऽज्य हविषाम् आ० श्रौ० ६,१४,३ ।

(३) विपरीताश्च याज्यानुवाक्याः । ते चैव कुर्युर्टौ प्रायणीयाम् । आ० श्रौ० ६,१४,५-६, ऐ० ब्रा० १,११ ।

वेदपति । तं चरुं शालामुखीयेऽग्नौ श्रपयति । तत्रैव प्रचरति । पत्नीसन्नहने[1] षड्ढोत्रा सादने च विकल्पः[2] । ततः पश्चिम-दक्षिणपरिधिसंधिमुन्मुच्य, दक्षिणपरिधिमग्रेण प्रागुदस्य, अन्तर्वेदिमासादयति[3] । याज्या पुरोनुवाक्यामन्त्राः प्रायणीयेष्ट्यां प्रदर्शिताः । अग्निः, सोमः, सविता, पथ्या, स्वस्तिः, अदितिः क्रमात् दक्षिणदिक् क्रमेण होमः[4] । अन्यत् सर्वं प्रायणीयावत् भवति[5] । स्विष्टकृतः प्राक् 'यास्तेविश्वाः समिधः०' इति मन्त्रेण ध्रुवाहुतिं जुहोति । अग्नयेइदं नममेति त्यागंपठेद्यजमानः । ततः ब्राह्मणमुपवेश्य पृष्ट्यां स्तीर्त्वा, पवित्रे कृत्वा, पात्राणि प्रोक्ष्य, सायं दोहवत् प्रातर्दोहं कृत्वा, आमिक्षा कुम्भीमधिश्रित्य, शालामुखीये आमिक्षां श्रपयित्वा,

---

(१) यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति । स एष एवेद एतन्नैदाणमेतद्धर्हिः अवैतां चरुस्थालीं सदामाकाषमुत्स्वद्य निर्णिज्य० - - - - - - - - - - - - - - - - श्रपयति । बौ० श्रौ० ८,२१ । प्रयाजवदनूयाजवदुदयनीयम्० प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति० । तै० सं० ६,१,५,५ ।

(२) षड्ढोत्रा सादयेदिति बौधायनः । तूष्णीमितिशालिकिः बौ०श्रौ०२१,२५ ।

(३) एतावदन्नाना० - - - - - - नीतुदिशश्च्यवन्तौ,बौ० श्रौ० ८,२१ ।

(४) तस्मिंस्तथैव अध्यमाणे जघनेन० बौ० श्रौ० ८,२१ ।

(५) समानं कर्म यथा प्रायणीयस्य । बौ० श्रौ० ८।२१ ।

(६) अथ पुरस्तात् स्विष्टकृतः ध्रुवाहुतिमुपजुहोति यास्ते विश्वाः समिधः सन्त्यग्ने इति । बौ० श्रौ० ८।२१
यास्ते विश्वाः॰ तै० सं० ३,५,५,३ ।

वाज्यं निरूप्य, उभयं पर्यग्निकरणं कृत्वा "यथायथं" मन्त्रेण स्फ्यदानादि कुर्यात् । अत्र स्तम्बयजुर्न भवति । ततः अध्वर्युः सम्प्रैषमाह - "प्रोक्षणी-रासादय, स्रुवं च स्रुचश्च, - सम्मृड्ढ्याज्येनोदेहि" ततः पत्न्या गार्हपत्या वेक्षणादि कर्मकृत्वा, "तत्त्वा०" मन्त्रेण ध्रुवायामेव वाज्यं गृह्णाति । प्रोक्षणीरादाय, वेदिं प्रोक्ष: निनीय, अरे परिभोजनीयान् दर्भान् तूष्णी-मासाद्य, उत्तरेभ्यां तूष्णीं वैकल्कान् परिधीन् परिधाय, जुहूपभृतौ तूष्णी-मासाद्य, ध्रुवां "एषासत०" इति मन्त्रेण वासाद्य, "विष्णुनोस्थ०" इति मन्त्रेण अभिमन्त्र्य, आमिक्षामुद्वास्य, आसाद्य, ध्रुवमासादनं कृत्वा, वाजिनं चासाद्य, कृतवतो शब्दे चतुर्गृहीताभ्यां आज्यभागौ यजति । अत्र यजमान: - दक्षिणदिक् विभागे वेधन्ते केशश्मश्रु लोम नखानि वापयित्वा, स्नात्वा च उपविशति । ततोऽध्वर्युः यजमानरुपविष्टे आमिक्षाया प्रचरति । अत्र आमिक्षायागे मित्रावरुणौ देवते । आमिक्षा यागानन्तरं देविका हविषां पृथक् निर्वापे कृते सति धातारं, अनुमतिं, राकां, सिनीवालीं, कुहूं चेति पञ्च-देवता:, एता: देवता: ध्रुवाज्यात् चतुर्गृहीतैरिष्ट्वा स्विष्टकृतादि कुर्यात् । स्रुक् विमोकं कृत्वा, शंयुवाकान्ते उदयनीयेष्टिः संतिष्ठते । उपस्तरणाभि-घारणाभ्यामेव प्रैव समाप्तिः, समिष्टयजुर्मात्रं वा । पूर्णपात्रं तूष्णीमन्त-र्वेदि निनयति ।[१] इत्युदयनीयेष्टि: ।

---

(१) उपस्तरणाभिघारणाभ्यामेवैतद् ध्रुवाज्यं विच्छिंषन्ति ।
समिष्टयजुरुहैके जुह्वति । शंयवन्त उदयनीय: संतिष्ठते ।
अत्र तत् पूर्णपात्रमन्तर्वेदि निनयति ।

अनूबन्ध्यायाग: -

इदानीं अनूबन्ध्यागोयाग: लोकविद्विष्टत्वात् अथ च प्राचीनतनानां श्रौतयज्ञकर्मकाण्ड चिकित्सकानां विदुषां सम्मत्यैन अथ च आश्वलायन-बौधायन-सूत्रानुरोधेन च सर्वथा त्याज्य: । अत एव वशास्थाने मैत्रावरुण देवताका आमिक्षा याग: सर्वैराद्रियन्ते[1] । इदानीं सर्वत्र अग्निष्टोमान्ते आमिक्षा याग: समाद्रित: । पूर्वमेव चातुर्मास्य प्रकरणे वैश्वदेवपर्वणि वाजिनयाग: आमिक्षा यागश्च विहिता: । तत्र साकल्येन प्रपञ्चित: । इदानीं सङ्क्षेप रूपेण आमिक्षा याग: लिख्यते ।

आमिक्षायागेपात्रासादनस्वरूपम् -

परिभोजनोयान् दर्भान् वेदं कृत्वा, पाणी सम्मृश्य, परिस्तीर्य तृणेषु पात्राणि + निर्णिज्य, सादयति । पात्रासादने क्रम: - स्फ्यं, आमिक्षाकुम्भी, सान्नाय्यमेक्षणं, अग्निहोत्रहवणीं, जुहूं, उपभृतं, ध्रुवं, ध्रुवां, इडापात्रं, आज्यस्थालीं, वेदं, आमिक्षाव्युद्धरणपात्रीं, वेदपरिवासनम्, उपवेशमिति तत: इडोपाह्वानं, आमिक्षाया: अवदाय, पञ्चकृत्वो ध्रुवाज्यात्

---

(१) अथ यदि वशां न लभते मैत्रावरुणीमामिक्षां गार्हपत्ये श्रपयित्वा तया-हवनीये प्रचरति । बौ० श्रौ० ८।२१ । मैत्रावरुण्यामिक्षाया यजेतेति शालिकि:, बौ० श्रौ० २१।२५, पशवलाभे पयस्या मैत्रावरुण्यनु बन्ध्या स्थाने, आ० श्रौ० ६,१४,१६ ।

भवति । एवं मैत्रावरुणी आमिक्षा इडान्ता सन्तिष्ठते[1] । ततः मैत्रावरुणमनुप्रहृत्य, शाखां प्रहरति । पात्रादीनामुपांशुप्रचारः । ततः हविरनुमन्त्रणम् । वाजिनयागः । वाजिनेन भक्षं उपवेशमुद्वासयति ।

देविकाहविषांनिर्वापपद्धती -
------------------------

निर्वापेद्धी पूर्वाणि देविका हवींषी उत्तराणि देविका हवींषि च निर्वपति[2] । निर्वापक्रमः -

(१) अनुमत्यै - चरुं ।

(२) राकायै - चरुं ।

------------------------------------------------------------

(१) आज्यभागप्रतिपत्त्यैडान्ता संतिष्ठते । बौ० श्रौ० ८।२१ ।

(२) पूर्वाणि देविका हवींषि निर्वपत्यनुमत्यै चरुं राकायै चरुंधात्रे पुरोडाशं द्वादश कपालमिति । अथ तदानीमेव पृष्ठ्यांस्तीर्त्वापि: प्रणीयोत्तराणि दे विकाहवींषि निर्वपति सिनीवाल्येचरुं कुहूवेचरुं धात्रे पुरोडाशं द्वादशकपालमित्यन्वाहार्यमासाद्य वत्सतरीं ददाति सा प्रसिद्धेष्टि: संतिष्ठते । बौ० श्रौ० ८।२२ । एता एव निर्वपेदोजान:० उत्तमं धातारं करोति ।

तै० सं० ३,४६,४ ।

यदनूबन्ध्ये पशुपुरोडाशमनुदेविका हवींषि निर्वपेयुर्धाताऽनुमती राका सिनीवाली कुहू: । आ० श्रौ० ६,१४,१५ ।

मैत्रावरुणं पशुपुरोडाशमनुदेविका हवींषि निर्वपेत् । धात्रे पुरोडाशं द्वादशकपालम्० अनुमत्यै चरुम्० कुहूवै चरुं इति तु देविकानाम् । ऐ० ब्रा० ३,४७-४८ ।

(३) धात्रे - पुरोडाशं द्वादशकपालम् इति पूर्वं देविका
हवींषि निर्वापः ।

अथोत्तराणि -

(१) सिनीवाल्यै - चरुं ।
(२) कुह्वै - चरु ।
(३) धात्रे - पुरोडाशं द्वादशकपालम् ।
अन्वाहार्यमासाद्य वत्सतरीं ददाति ।

याज्यापुरोनुवाक्ये -

(१) राका - "राकामहं सुहवां सुष्टुतीहुवे०" इति पुरोनुवाक्या ।
"यास्ते राके सुमतयः०" इति याज्या[१] ।
(२) सिनीवाली - "सिनीवालि पृथुष्टुके०" इति पुरोनुवाक्या ।
"या सुबाहुः स्वङ्गुरिः०" इति याज्या[२] ।
(३) कुहू - "कुहूमहं सुकृतं०" इति पुरोनुवाक्या ।
"कुहूर्देवानाममृतस्य पत्नी०" याज्या[३] ।

---

(१) राकामहं० । यास्ते राके० । ऋ० सं० २, ३२, ४-५ ।
(२) सिनीवालि० । या सुबाहुः स्वङ्गुरिः । ऋ० सं० २, ३२, ६-७ ।
(३) कुहूमहं सुकृतं - - - - - - - - - - - - - - - - हविषा विधेम
कुहूर्देवानाममृतस्य - - - - - - यजमाने दधातु, आ०श्रौ० ६, १०, ८ ।

(४) धाता - "धाता ददातु दाशुषे०" इति पुरोनुवाक्या ।

"धाता प्रजानामुतराय०" इति याज्या[1] ।

(५) अनुमतिः - "अनुनोऽद्यानुमतिर्यज्ञं" इति पुरोनुवाक्या

"अन्विदनुमते त्वं०" इति याज्या[2] ।

पक्षे - अनुमत्यादि पञ्चदेवतानां स्थाने (१) सूर्यः, (२) द्यौः, (३) उषाः, (४) पृथिवी, (५) गौः, एताः पञ्चदेवताः देव्य इति समाख्या वशात् एताः देवताः भवन्ति ।[3] याज्यापुरोनुवाक्ये[4] -

(१) सूर्यः - "तरणिर्विश्वदर्शत०" इति पुरोनुवाक्या[5] ।

"चित्रं देवाना०" इति याज्या[6] ।

(२) द्यौः - "स्मत् पुरंधिनं०" इति पुरोनुवाक्या ।

"आनो या हिमहेमतं०" इति याज्या[7] ।

(३) उषाः - "आर्यांतनोषि०" इति पुरोनुवाक्या[8] ।

---

(१) धाता ददातु दाशुषे - - - - - - - - - - वाजिनोवतः ।
धाताप्रजानामुत - - - - - घृतवज्जुहोत । आ०श्रौ० ६,१४,१६ ।

(२) तै० सं० ३,३,११ ।

(३) देवीनां चेत्सूर्यो द्यौरुषा गौः पृथिवी । आ०श्रौ० ६,१४,१७ ।

(४) स्मत्पुरन्धिनं आगहीतिद्वे० - - वनस्पतीन् । आ०श्रौ० ६,१४,१८ ।

(५) तरणिर्विश्वदर्शत० ऋ० सं० १,५०,४ ।

(६) "चित्रं देवाना०" ऋ० सं० १,११५,१ ।

(७) स्मत्पुरंधिंन आगहि० । आ नो याहि महेमते०, ऋ० सं० ८।३४,६-७ ।

(८) आर्यांतनोषि० ऋ० सं० ४,५२,७ ।

"आवहन्तीपोष्यावार्याणि" इति याज्या[1]।

(४) गौः - "नताअर्वारेणुककाटो०" इति पुरोनुवाक्या[2]।

"नतानशन्ति०" इति याज्या[3]।

(५) पृथिवी - "बडित्थापर्वतानां०" इति पुरोनुवाक्या[4]।

"इडहाचिद्यावनस्पतीन्०" इति याज्या[5]।

अग्निष्टोमानुम् अनुबन्ध्यायाः पशुद्रव्यालाभे मैत्रावरुणी पयस्या-कर्तव्या। देवतानिर्देशः प्रकृतया एव। अनुबन्ध्यायाः "पश्वलाभे पयस्या कर्तव्या नान्यासामनुबन्ध्यानाम्। अतः अन्यासामनुबन्ध्यानां अयं पक्षो नास्ति[6]। एषा पयस्या आज्यभाग प्रभृति वाजिनान्ता भवति[7]। ये कर्मकर्तारः ऋत्विजः सर्वे वाजिन यागान्ते वाजिनं भक्षयेयुः[8]। अनुबन्ध्यान्ते प्रायश्चित्त-निहुत्वा संस्थाजपं जपेयुः। इत्यनुबन्ध्यायागः।

उदवसानीयेष्टिः -

---

अनुबन्ध्यायाग परिसमाप्ते तदानीमेव सद्यः अग्निमन्थनं कृत्वा,

---

(१) आवहन्तीपोष्यावार्याणि, ऋ० सं० १,११३,१५ ।

(२) न ता अर्वारेणु० ऋ० सं० ६,२८,४ ।

(३) न ता नशन्ति० ऋ० सं० ६,२८,३ ।

(४) बडित्थापर्वतानां ऋ० सं० ५,८४,१ ।

(५) इडहाचिद्या० ऋ०सं० ५,८४,३ । (६) आ०श्रौ० ६,१४,१६ ।

(७) आज्यभागप्रभृतिवाजिनान्ता, आ० श्रौ० ६,१४,२० ।

(८) कर्मिणो वाजिनं भक्षयेयुः, आ० श्रौ० ६,१४,२१ ।

उदवसानीया इष्टिः कर्तव्या । उदवसानीयेष्टिः सोमांगं भवति । अत्र इष्ट्यां अग्निः प्रधानदेवता द्रव्यम् - अष्टाकपालः पुरोडाशः[१]। वार्त्रघ्नावाज्यभागौ भवति । अत्र पञ्चदशसामिधेन्यः पञ्चप्रयाजाः, त्रयोनुयाजाः भवन्ति[२]।

याज्यानुवाक्ये -

"अयाह्यग्ने: क्रतो०"[३] इति पुरोनुवाक्या

"आभिष्टे अद्यगीर्भिः०"[४] इति याज्या ।

स्विष्टकृति - "इभिर्नो अर्कैः"[५] इति पुरोनुवाक्या

अग्नेतमद्याश्वंनस्तोमैः०"[५] इति याज्या ।

इयमिष्टिः संस्थाजपान्तं भवति । इत्यग्निष्टोमः ।

---

(१) अथारण्योरग्नीन् समारोह्योदवसाय मथित्वाग्नीन् विहृत्याग्नेयमष्टाकपालमुदवसानीयामिष्टिं निर्वपति । बौ० श्रौ० ८।२२, सर्वे तु दीक्षितोत्थिताः पृथगग्नीन् समारोप्योदग्देवयजनान्मथित्वोदवसानीयया यजन्ते । आ० श्रौ० ६,१४,२३-२४ पौनराधेयिक्यविकृताऽविकृता । आग्नेयं पञ्चकपालमुदवसानीयं निर्वपेत्० अष्टाकपालः कार्य०, तै० सं० ३,५,४,३ । पञ्चकपालः पुरोलाशो भवति० यद्वाअष्टाकपालः पौर्णमासमेव तन्त्रं भवति । शां० ब्रा० १८,१४ । तस्याः पञ्चदशसामिधेन्यः पञ्चप्रयाजाः वार्त्रघ्ना वाज्यभागौ ह अथ हविषः अग्नेतमद्य अयाह्यग्ने इति त्रिष्टुभौ संयाज्ये । बौ० श्रौ० ८।२२ ।

(२) ऋ० सं० ४,१०,२ ।

(३) ऋ० सं० ४,१०,४ ।

(४) ऋ० सं० ४,१०,३ ।

(५) ऋ० सं० ४,१०,१ ।

## उपसंहारः

शोधप्रबन्धेऽस्मिन् प्रथमाध्यायतः षष्ठाध्यायान्तं वैतानिक यज्ञकर्मणां आधानादारभ्य, सोमयागान्तो विषयः प्रपञ्चितः । "यज्ञो वै श्रेष्ठतमं कर्म" अथ च "यज्ञेनयज्ञमयजन्त देवाः" इत्यादिभिः श्रुतिवाक्यैः यज्ञकर्मणः श्रेष्ठतमत्वं प्रतिपादितम् । सनातनधर्मस्य आचारप्रधानत्वं कर्मत्वेन सिध्यति । यज्ञकर्मणां महत्वं "देवतोद्देशेन द्रव्यत्यागः इति मीमांसकैः प्रतिपादितम् । भारतीयसंस्कृतेः मूलं त्याग एव । भारतीयानां त्याग-विषयिणी धारणा "ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथामागृधः कस्य स्विद्धनम् (मा० सं० ४० अ० १ कं) इति दिग् दर्शितम् ।

सर्वेषां प्राणिनां अथ च लोककल्याणाभिदं जीवनं परस्पर सहकारित्वेन सहजमेव निष्पादितं भवति । अत्र लोके यानि द्रव्याणि तानि सर्वाणि ईश्वर प्रदत्तानि सन्ति । त्यागप्रधानयागेन सर्वेषाम् ऐहिक कामानां भोगानां च उपलब्धिर्भवति । आवश्यकताया अधिकसंग्रहः परिग्रहश्च सर्वथानिष्टः । अत एव श्रीमद्भगवद्गीतायामपरिग्रहस्य महत्त्वमुक्तम् । कल्याण-साधने प्राणिमात्रस्य जीवनयापनं यज्ञकर्मानुष्ठानेन निरामयं आनन्दमयं च भवति । "केवलाघो भवति केवलादी" ( ऋ० सं० १०।११७।६) इति ।

वेदवाक्येन यः पुरुषः भूरिपरिश्रमं कृत्वा जीवनसाधनभूतमैश्वर्यं संगृह्य स्वकामपूरणार्थं अहंकारग्रस्तो भूत्वा, स्वयमेव उपभुङ्क्ते सपापमन्नमेव

कुरुते । इत्थं इज्ममहत्वं यज्ञद्वारा त्यागस्य महत्वं सृष्टेः ईश्वरकर्तृत्वमथ च स्वकर्मनियामकत्वं स्वोपार्जितधने भागे पारतन्त्र्यं वेदेनैव ज्ञायते । अतः सर्वै वेदप्रतिपादितं यज्ञानुष्ठानरूपं कर्म आचरितव्यम् । तेन "सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग् भवेत् ।" अस्याः प्रार्थनायाः सार्थक्यं जायते ।

परिप्रेक्ष्येऽस्मिन् विषये यतकर्मणो महत्वं प्रतिभाति । प्रबन्धेऽस्मिन् सोऽयं यज्ञोबहुभिर्विविधरूपैः प्रपञ्चितः । आधानं कृत्वा सर्वे यागा अनुष्ठेया इत्यादेशः । परं च शरीरबलं, द्रव्यबलं, जनबलं सर्वेषां समानं नोपलभ्यते यागस्तु सर्वेषां विहित एव अतः ऋग्वेदे "यः समिधा य आहुती यो वेदेनेति (आ०गृ०सू० ७।१।४) "यो नमसा स्वध्वरः" (आ०गृ०सू० ७।१।५) "यदग्ने कानि कानि चिदति दारुणि दध्मसि । ता जुषस्व यविष्ठ्य" ऋ०सं० ८।१०२।२०) "नमस्कारेण वै खल्वापि न वै देवा नमस्कार मति यज्ञो वै नम इति" (आ० गृ० सू० ७।१।५ )।

एवभिर्वाक्यैः अशक्तेनापि पुरुषेण देवतोद्देशेन कृतो नमस्कारः काष्ठ प्रक्षेपश्च (समित्) देवतातुष्ट्यै अलं भवति ।

वेदवाङ्मये सर्वासामपि शाखानां गृह्यसूत्राणि श्रौतसूत्राणि च होमविषये यागविषये च तत्तच्छाखाशाखिनां कृते समग्राणि परिपूर्णानि सन्ति । ऋग्वेदे "यदर्चैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं" अनेन

ब्राह्मणवचनेन स्पष्टमेव ज्ञायते यत्, यज्ञकर्मसुसर्वांग परिपोषणार्थं वेदत्रयस्य सहकारित्वमनिवार्यमस्ति । यजुर्वेदिनां कात्यायनसूत्रं तथा सत्याषाढसूत्रं बौधायनसूत्रं आपस्तम्बसूत्रं च स्वशाखोक्त कर्मनिष्पादनाय पर्याप्तानि सन्ति तथैव बह्वृचां आश्वलायन सूत्रं, शांखायन सूत्रम्वेति श्रौतानि कर्माणि समग्रतया उपकुरुत: । तथैव सामवेदस्य लाट्यायन श्रौतसूत्रमपि सामशाखोक्तकर्मानुष्ठानं सम्यक्तया निर्दिशति । एवं सत्यपि पुरातनकालत: एके नैव वेदशब्देन वेद-राशे: एकत्वं प्रतिपादितमस्ति । शाखागतविभागेषु मन्त्रब्राह्मणयोर्विभाग: कस्यांचित् शाखायां सम्मिश्रित: कस्यांचित शाखायां पृथगस्ति ।

आश्वलायनश्रौतसूत्रं विशेषेण आधानदर्शपूर्णमासयो: प्रकरणे देवतोद्देशेन अनुष्ठीयमानानां मंत्राणां विधानं समग्ररूपेण करोति । तत्र यजु:शाखीय बौधायनसत्याषाढाऽऽपस्तम्बादि श्रौतसूत्रोक्त यागतन्त्र (यागप्रक्रिया) यथा हविर्निर्वाप:, पुरोडाशश्रपणं, यजमानकृतानुमन्त्रादि विविधविषयाणां निर्देश: प्राधान्येन कृतोऽस्ति । सामशाखायां लाट्यायन-श्रौतसूत्रद्वारा आधानदर्शपूर्णमासादि यागविधानानन्तरम् स्तोत्रनिष्पादन-प्रक्रिया विशेषतया प्रदर्शिता वर्तते । अत एव सर्वैरपि श्रौतसूत्रै: यागकर्म-विधिस्वरूपनिश्चयार्थं अध्वर्यवे यजु: शाखीय याज्याऽनुवाक्य नामय च शस्त्रादि परिज्ञानार्थं ऋग्वेदाय प्राधान्यं दीयते । तथा स्तोत्र, स्तोम, स्तोभादि स्वरूपनिर्धारणार्थं सामशाखाया: प्राधान्यं निर्दिश्यते । अत एव स्वशाखायां साधन्त यागकर्मणो विधाने तदानुपूर्वीविषयक भ्रम: संभाव्यते

तत्र अन्यशाखीय कर्मविधायकवाक्यानां एवं श्रौतसूत्रस्य च महत्त्वं अवधार्यते ।

अस्मिन् शोधप्रबन्धे मुख्यतया आश्वलायनश्रौतसूत्रं बौधायनश्रौतसूत्रं च दृष्टिगतं कृत्वा श्रौतयागप्रक्रियायाः सोमयागान्तभागः प्रधानतया विचारितः । ग्रन्थ दृष्ट्या आश्वलायनश्रौतसूत्रं द्वादशसु अध्यायेषु विभक्तमस्ति । बौधायनश्रौतसूत्रं च ५४ अध्यायेषु प्रश्नसंज्ञया विभक्तमस्ति । अनयारित्या स्पष्टमिदं भवति यत् श्रौतकर्मणि प्राधान्येन कर्मपि सिद्धान्तं स्थिरीकर्तुं विविधानि सूत्र वचनानि विचार्य सिद्धान्तनिश्चयः कर्तव्यो भवति ।

आश्वलायनश्रौतसूत्रदृष्ट्या यागक्रियापूर्णरूपेण अध्वर्युपराधीनेति । बौधायनश्रौतसूत्रं च यागीयमन्त्राणां विधानेआश्वलायनहौत्रानुरोधेन स्वशाखीयमन्त्राणां विधानं आधानदर्शपूर्णमासाग्रयणपिण्डपितृयज्ञनिरूढपशुबन्धचातुर्मास्यादियागेषु विशेषतया विदधाति, परन्तु सोमप्रकरणे ऋग्हौत्रमेव समग्रेण स्वीकरोति । अत एव आश्वलायनश्रौतसूत्रे स्तोम, स्तोम, स्तोत्राणां निष्पादनेसामसूत्रं, कर्मणां निष्पादने च अध्वर्युसूत्रं मुख्यतया स्वीकृतम् । अनेन प्रकारेण एवं प्रतीयते यत् कस्या अपि यागप्रक्रियायाः साधन्त निष्पादने व्यक्त च सूत्रस्य अध्वर्युसूत्रा पेक्षा एवं अध्वर्युणा कृते तदीययाग प्रक्रियासु प्रयुज्यमानानां मन्त्राणां प्रयोगसमये ऋषिदेवता छन्दोलिंगाभिरूपतामिर्थ्यं बहुव च शाखायाः अपेक्षा भवति । इत्थं वयं वक्तुं शक्नुमः समग्रस्य वेदराशेः

विनियोगः श्रौतप्रक्रियायां परिलक्षिता भवति । एतदेव लक्षीकृत्य स्वकीय शोधप्रबन्धे अस्माभिः विविधाः विवेचनं कृतमस्ति । यागप्रक्रियायां सर्वाः शाखाः शाखीयाश्च, यागनिष्पादनार्थं परस्परसापेक्षा एव तिष्ठन्ति । केवला निरपेक्षो एवः शब्दः श्रुतिरेवेति ।



## प्रबन्धलेखनार्थमवलोकितसहायकग्रन्थानां तालिका


(१) अथर्ववेदसंहिता - पं०श्री०दा०सातवलेकरः, स्वाध्यायमंडल औंध वि० सं० १६६६ ।

(२) अग्निष्टोमपद्धतिः - पं० वामनाचार्यः, चौखम्बा संस्कृत सीरीज, ई०स० १६३६ ।

(३) आश्वलायनगृह्यसूत्रम् - पं० विनायक गणेश आपटे, आनन्दाश्रम, पूना, ई० स० १६३६ ।

(४) आश्वलायनश्रौतसूत्रम् - पं० विनायक हरी आपटे, आनन्दाश्रम, पूना ई० स० १६८४-८५ ।

(५) आश्वलायनश्रौतसूत्रम् - पं० पट्टाभिरामशास्त्री रामनाथदीक्षितश्च, लालबहादुरशास्त्री केन्द्रीय संस्कृत विद्यापीठ, नयीदिल्ली, ई० स० १६२८ ।

(६) आश्वलायनप्रयोगदीपिका - पं० मंचनाचार्यः, विद्याविलासप्रेस, काशी ई० स० १६०७ ।

(७) आपस्तम्बश्रौतसूत्रम् - पं० चिन्नस्वामी शास्त्री, चौखम्बा संस्कृत सीरीज, वाराणसी, ई० स० १६२८ ।

(८) आधानपद्धतिः - पं० महादेव चिमणाजी आपटे, आनन्दाश्रम, पूना ई० स० १६४७ ।

(९) ऊहगानम् (उह्यगानम्) - पं० श्री०म० रामनाथदीक्षितः, काशी हिन्दू विश्वविद्यालय, वाराणसी, वि०सं० २०२३ ।

(१०) ऋग्वेदसंहिता (शाकल) - पं० श्रीदा०सातवलेकर, स्वाध्यायमण्डल, औंध, ई० स० १६४० ।

(११) ऋग्वेदसंहिता (सायणभाष्यम्) - पं० श्री० ना० सोनटक्के, चि०ग०काशीकर, वैदिक संशोधन मण्डल, पूना, शक १८६८

(१२) ऋग्वेदसंहिता (आर्यभाष्य) - स्वामी दयानन्द, वैदिक यंत्रालय, अजमेर

(१३) ऋग्वेदीयनिखिलकृत्याप्रश्नाध्यायचरणव्यूहा: - डा०विश्वनाथवामनदेव, गुरुगंगेश्वर चतुर्वेद संस्थानम्, वि०सं० २०३६

(१४) ऋग्विधानम्, निर्णय सागर प्रेस, बम्बई ।

(१५) ऋग्वेदीय ब्रह्मकर्मसमुच्चय: (पत्रात्मक) ।

(१६) ऐतरेय ब्राह्मण, पं० काशीनाथ शास्त्री आगाशे, आनन्दाश्रम, पूना ई०स० १६७७ ।

(१७) ऐतरेयब्राह्मण (मराठी अनुवाद) - पं० कृ० ग० बापट, स्वाध्याय मण्डल, औंध, शक १८६३ ।

(१८) ऐतरेयब्राह्मणकोपनिषदसायणभाष्यम्, आनन्दाश्रम, पूना, १६५६ ।

(१६) कृष्णयजुर्वेदसंहिता (तैत्तिरीय) - पं० श्री० दा० सातवलेकर, स्वाध्यायमण्डल, औंध, ई०सं० १६४५ ।

(२०) कृष्णयजुर्वेदसंहिता (काठक) - पं० श्रीदा० सातवलेकर, स्वाध्यायमण्डल, औंध, ई०स० १६४३ ।

(२१) कृष्णयजुर्वेदसंहिता (मैत्रायणीय) - पं० श्री० दा० सातवलेकर, स्वाध्यायमण्डल, औंध, ई०स० १६४२ ।

(२२) कृष्णयजुर्वेद तै० संहिता सायणभाष्यम् - हरीनारायण आपटे, ई०स०१६०४ ।

(२३) कृष्णयजुर्वेदीयं तैत्तिरीयारण्यकम् - आनन्दाश्रम, पूना, ई०स० १६६७ ।

(२४) कात्यायनश्रौतसूत्रम् - पं० श्रीविद्याधर शर्मा, अच्युत ग्रन्थमाला, काशी, १६८७

(२५) कातीयेष्टिदीपक: - पं० नित्यानन्द पार्वती, चौखम्बा संस्कृत सीरीज, वाराणसी, ई० स० १६२४ ।

(२६) ग्रामगेय (वेयआख्य) गानात्मकः - पं० श्री० दा० सातवलेकर,
स्वाध्याय मण्डल, औंध, १९९९

(२७) चतुर्वेदभाष्यभूमिकासंग्रहः - पं० बलदेव उपाध्याय, ई० स० १९३४ ।

(२८) छान्दोग्यब्राह्मणम् - पं० दुर्गामोहन भट्टाचार्य, कलकत्ता, ई०स० १९३१ ।

(२९) तैत्तिरीयब्राह्मण, पं० नारायण शास्त्री गोडबोले, आनन्दाश्रम, पूना
ई० स० १९७९ ।

(३०) दर्शपूर्णमासप्रकारः - विनायक गणेश आपटे, आनन्दाश्रम, पूना ई०स०१९२४

(३१) निरुक्तम् - विनायक गणेश आपटे आनन्दाश्रम, पूना, ई०स० १९२१ ।

(३२) बौधायनश्रौतसूत्रम् - डा० डब्ल्यू कैलन्ड, एशियाटिक सोसाइटी,
कलकत्ता, ई० स० १९०४ ।

(३३) बौधायनगृह्यसूत्रम् - पं० श्रीनिवासाचार्य, मैसूर गवर्नप्रेस, मैसूर-४,
ई० स० १९०४ ।

(३४) बौधायनशुल्बसूत्रम् - पं० विभूतिभूषणभट्टाचार्य, संपूर्णानन्द संस्कृत
विश्वविद्यालय, वाराणसी, ई० स० १९७९ ।

(३५) बौधायनपरिचय - बोधायनदास सेवक संघ, पनग्राम, ।

(३६) बृहद्देवता - मेकडानल, एशियाटिक सोसा० कलकत्ता, ई० स० १८९३ ।

(३७) यजुर्विधानम् - पं० अण्णाशास्त्री वारे, निर्णय सागर प्रेस, बम्बई ।

(३८) लाट्यायनश्रौतसूत्रम् - आनन्दचन्द्र वेदान्त वागीश, वाष्पिक यंत्र,
कलकत्ता, ई० स० १९२८ ।

(३९) शुक्लयजुर्वेदसंहिता - पं० श्री० दा० सातवलेकर, स्वाध्यायमण्डल,
औंध, वि० स० १९९४ ।

(४०) शुक्लयजुर्वेदसंहिता (उव्वटमहिधरभाष्यम्) - मोतीलाल बनारसीदास,
दिल्ली-७, जैनेन्द्रप्रेस, दिल्ली-७, ।

(४१) शतपथब्राह्मणम् - पं० श्रीचन्द्रधरशर्मा, अच्युतग्रन्थमाला, काशी, १९९४ ।

(४२) शांखायन ब्राह्मणम् - हरी नारायण आपटे, आनन्दाश्रम, पूना ई० स० १९११ ।

(४३) शिक्षासंग्रह: - आर० टी० एच० ग्रिफिथ, बनारस प्रिंटिंग प्रेस, ई० स० १८८९ ।

(४४) सामवेदसंहिता (कौथुम) - पं० श्री० दा० सातवलेकर, स्वाध्याय मण्डल, औंध, वि० सं० १९९६ ।

(४५) सामवेदसंहिता (जैमिनीय) - डा० रघुवीर, सरस्वती विहार, लाहौर, सन् १९६५ ।

(४६) सत्याषाढ श्रौतसूत्रम् - विनायक गणेश आपटे, आनन्दाश्रम, पूना, ई० स० १९२९ ।

(४७) सामविधानम् - ए० सी० बर्नेल, लन्दन, ई० स० १८७३ ।

(४८) श्रौतकोश (प्रथमभाग:)-वैदिक संशोधन मण्डल, पूना, ई० सं० १९५८ ।

(४९) श्रौतकोश (द्वितीयभाग) - वैदिक संशोधन मण्डल, पूना, ई०स० १९७० ।

(५०) श्रौतपदार्थनिर्वचनम् - विश्वनाथ जोशी, मेडिकल हॉल प्रेस, कैण्ट, ई० स० १९१९ ।

(५१) श्रौतयज्ञावोस्वरुपचिकित्सा - चिं० ग० काशीकर ।

(५२) हिरण्यकेशीश्रौतकर्मसमुच्चय: (पत्रात्मक), निर्णय सागर प्रेस, बम्बई ।

## हस्तलिखितग्रन्थ:

(१) अग्निष्टोमहौत्रप्रयोग: - अज्ञात, वि० सं० १८२७ ।

(२) अग्निष्टोमशस्त्रक्लृप्ति: - अज्ञात, अज्ञात ।

(३) अग्निहोत्रचन्द्रिका - अज्ञात, अज्ञात ।

(४) अग्निष्टोमउद्गातृप्रयोग: - अज्ञात ।

(५) अच्छावाकप्रयोग:

(६) आग्रायणप्रयोग: - पं० महादेववाकणकर, वि० सं० १७६५ ।

(७) आग्रायणहौत्रप्रयोग: - अज्ञात ।

(८) आधानहौत्रारम्भ: - पं० रामभट्ट आरंकर, वि० सं० १८०६ ।

(९) आश्वलायनीयाहौत्रपद्धति: - अज्ञात ।

(१०) ग्रावस्तोतृप्रयोग: - पं० रंगनाथ आरंवकर, वि० सं० १८६३ ।

(११) चातुर्मास्य प्रयोग:

(१२) चातुर्मास्य हौत्रम्

(१३) चातुर्मास्यविहारकारिका (मराठी) - पं० त्र्यम्बकदीक्षित: - शके० १८३० ।

(१४) चातुर्मास्य हौत्रप्रयोग: - पं० नारायणदेव , वि० सं० १८३१ ।

(१५) दर्शपूर्णमासप्रयोग: - पं० गणेशराम, वि० सं० १९२८ ।

(१६) दर्शपूर्णमासहौत्रप्रयोग: - पं०गोपीनाथआठवले, वि० सं० १८३९ ।

(१७) मैष्टप्रयोग: - अज्ञात ।

(१८) निरूढपशुबन्धमैत्रावरुणप्रयोग: - अज्ञात ।

(१९) पशुहौत्रम् - पं० चिंतामणिवेलकर, शके १७८७ ।

(२०) पशुसूत्रम् - अज्ञात, वि० सं० १९४७ ।

(२१) पोतृप्रयोग: ।

(२२) ब्राह्मणाच्छंसिप्रयोग: - पं० बालकृष्णभट्टविसापुरकर, अज्ञात ।

(२३) बौधायनआधानप्रयोग:,- अज्ञात, वि० सं० १८९१ ।

(२४) बौधायनआधानप्रयोग: - पं० शंभुभट्टमधुमति, वि० सं० १८१६ ।

(२५) बौधायननिरूढपशुबन्धेशणीप्रयोग: - अज्ञात ।

(२६) बौधायनआग्रायणसुबोधिनीसार - अज्ञात, शके १७४६ ।

(२७) बौधायनअग्निष्टोमप्रयोग: - पं० विश्वनाथजडे, वि० सं० १८७९ ।

(२८) बौधायनप्रकृतिविहारकारिका (भावार्थदीपिका) - पं० नारायण शर्मा, वि० सं० १८८५ ।

(२९) भक्ष्यविचार:

(३०) मैत्रावरुणप्रयोग: - पं० नारायणदेव, वि० सं० १८२५ ।

(३१) श्रौतचन्द्रिका

(३२) हौत्रालोक:



S
SSS
SSSSS
SSSSSSS
SSSSSSSSS
SSSSSSS
SSSSS
SSS
S

